प्रकाशक :

भारतीय बुक कार्पोरेशन
१ यू० बी०, जवाहरनगर, बंग्लोरोड,
दिल्ली-११०००७ (भारत)

वितरक :

(१) भारतीय विद्या प्रकाशन
१ यू० बी०, जवाहरनगर, बंग्लोरोड,
दिल्ली-११०००७

(२) पो० बा० ११०८, कचौडी गली, वाराणसी-२२१००१

संस्करण

मूल्य : 600.00 ( भाग मे)
ISBN : 81-85122-10-5 (Set)
ISBN : 81-85122-11-3 (vol-I)

मुद्रक :

जैन अमर प्रिंटिंग ऐजेन्सी
दिल्ली

उल्लेखार्थः । उदाहरणसूत्रं चेदमन्येषामपि प्रत्यक्षयोग्यविषयविपर्ययाणां तदितरप्रमाणयोग्यविषयविपर्ययाणां चोपलक्षणार्थम् । तथाहि । बाष्पपांसुपटलमशकवार्त्तिप्रभृतिभिः कुतोऽपि भ्रान्तिनिबन्धनाद्धूमत्वेनावधारितैर्धूनञ्जयविनिर्मुक्तेऽपि प्रदेशे तत्परिज्ञानमनुमानविपर्ययः । निबिडकुदर्शनाभ्यासाविर्भूतभावनाप्रभावाच्चागमविपर्ययोऽपि सम्भवति । तद्यथा—

शाक्यादिमतानिर्देशः ।

**स्याद्वादन्यायबाह्येषु शाक्यनैयायिकमीमांसककापिललौकायतिकसंसारमोचकादिशास्त्रेषु** यत्किञ्चिदेकान्ताभिनिवेशेनोपदिश्यते तत् प्रमाणमिति ज्ञानं तेषां विपर्ययः । तथाहि । क्षणिकाक्षणिके वस्तुनि सर्वथा क्षणभङ्गुरत्वाभिमतिर्विपर्ययः **शाक्यभिक्षूणाम्** । भिन्नाभिन्नयोर्द्रव्यपर्याययोर्भेदैकान्ताहंकृतिर्विपर्ययो **नैयायिकानाम्** । नित्यानित्यात्मके शब्दे सर्वथा नित्यत्वमतिर्विपर्ययो **मीमांसकानाम्** । कर्त्त्र्यात्मन्यकर्तृताप्रतीतिर्विपर्ययः **कापिलानाम्** । सत्सु स्वर्गापवर्गात्मधर्मादिषु वस्तुषु नास्तिताप्रतिपत्तिर्विपर्ययो **लौकायतानाम्** । अधर्मनिबन्धने प्राणिवधे धर्मनिबन्धनत्वबुद्धिर्विपर्ययः **संसारमोचकानाम्**[1] । तथा **स्याद्वादिनामपि** केषाञ्चित् प्रचुरतरपापोदयादागमविपर्ययः सम्भवति । यथोपपद्यमानमुक्तौ स्त्रीजातौ मुक्त्यभावाभिमानः संभाव्यमानमुक्तौ भगवति केवलिनि मुक्त्यभावकदाग्रहश्च विपर्ययः **क्षपणकानाम्**[2] । विपर्ययत्वं चैषामशेषाणामपि कदभिप्रायाणां प्रमाणैः प्रतिहन्यमानत्वादवगन्तव्यमिति ।

अस्यां समस्ति विपरीतमतौ मतानां
भेदः परैः स्वरुचिभिः परिकल्पितानाम् ।
तत्र प्रभाकरमतानुगता विवेक-
ख्यातिं विवेकविकलाः परिकल्पयन्ति ॥ ९१ ॥

---

1 संसारमोचकाः—ब्रह्माद्वैतवादिनः । एतेऽपि चित्तशुद्ध्यर्थं प्राणिवधमयज्ञानभिमन्यन्ते । २. दिगम्बराणाम् ।

आर्हतमतप्रभाकरस्य
चतुर्थो मयूखः

श्रीमद्वादिदेवसूरिविरचितः

# प्रमाणनयतत्त्वालोकालङ्कारः

तद्व्याख्या च

# स्याद्वादरत्नाकरः

स्मृतिज्ञानस्य कारणतां प्रतिपद्यत इति रजतशुक्तिकाशकलयोः स्मरणग्रहणयोश्च भेदेनाग्रहणान्नातीततया रजतप्रतिभास इति । अत एव रजतमिदमिति सामानाधिकरण्यं सत्यसन्निहितरजततुल्यव्यवहारश्च न दुरुपपादः । नन्वेवमख्यातिपक्षे प्रतिज्ञायमाने नेदं रजतमिति बाधकप्रत्ययः पश्चाद्भावी समुपलभ्यमानः कस्य बाधकत्वेन व्यवस्थापयिष्यते सर्वस्यापि संवेदनस्य यथार्थत्वेन भवतामभिमतत्वात् । अयि सरलमते कोऽयमियान् सन्त्रासः । न हि बाधकप्रत्ययेन न रजतमिति किन्तु प्रागप्रतिपन्नो विवेकः प्रकाश्यते नेदं रजतं यदेवेदं पुरोवर्ति शुक्तिकाशकलं तदेव रजतमित्येतन्न किन्त्विदमिदं रजतं रजतम् । एतदुक्तं भवति । इदमन्यद्रजतमन्यदिति सोऽयं विवेकः प्रकाशितो भवति । अथैवं पर्यनुयुज्यते भवतु स्मरणानुभवयोर्विवेकस्याग्रहणमिदं रजतमित्यादौ । स्वप्ने पुनः कथमिदमुपपादयिष्यते न हि तत्र द्वयमस्ति स्वप्नज्ञानस्यैकत्वात् । भीरो किं संवृत्तं स्वप्ने । इदं रजतमित्यादौ हि स्मरणानुभवौ न विवेकेनावधार्येते । स्वप्ने तु स्मृतिरेवैका स्मरणरूपतया न ग्रहीतुं शक्यत इति सुव्यक्तमेव स्मृतिस्वरूपस्य स्वप्ने[१] स्वप्नेऽपि विवेकेनाग्रहणमिति । सदृशदर्शनमन्तरेण स्वप्नदशायां स्मृतिरेव न सम्भवतीति मावमंस्थाः । नानाविधनिमित्तप्रभवत्वात्स्मरणानाम् । निद्रोपद्रुत एव हि मनः स्वप्ने[२] स्मरणसमुत्पत्तौ निमित्तीभवत्येव । यद्येवं शशधरद्विनयतिक्तशर्करादिसंवेदनेषु स्मृतिप्रमोषः कथं कथयिष्यते । आः कुमते न वयं सर्वत्र स्मृतेरेव प्रमोषं मन्यामहे किन्तु विवेकाख्यातिम् । सा च क्वचित्कथञ्चित्कस्यचिदुपपादयितुं शक्यत एव । तथाहि । क्वचिदनुभवस्मृत्योर्विवेकस्याग्रहणं यथेदं रजतमित्यादौ । क्वचित् स्मरणस्य स्वरूपेणाग्रहणं यथा स्वप्नावस्थायाम् । क्वचित्तु तिमिरादिदोषेण द्विधाकृता नायनी वृत्तिः श्वेतकिरणमैक्येन ग्रहीतुं न शक्नोति यथा द्विचन्द्रप्रत्यये । क्वापि रसनेन्द्रियसम्पृक्तपित्त-

१ 'एव' इति नास्ति भ. पुस्तके । २ 'स्वप्ने' इति नास्ति भ. म. पुस्तकयोः ।

क्षस्य प्रतिबन्धे चैकस्मादेव मणिमन्त्रादेः सर्वस्याः शक्तेः प्रतिबन्धः स्यादिति चेत् । नैतच्चतुरस्रम् । योग्यतालक्षणसम्बन्धवशाद्योग्याया एवास्यास्तेन प्रतिबन्धोपपत्तेः । न खलु चुम्बकस्यापि प्रतिनियतलोहाकर्षणे तेन समं योग्यतातोऽन्यः सन्निकर्षादिः सम्बन्धोऽस्ति । योग्यताया अनङ्गीकारे च कथमेतदपि घटेत । यदुत,

कश्चिद्योगसमृद्धिलब्धविलसन्निःसीममाहात्म्यवान्
विद्यावेशविशेषसिद्धतिलकालङ्कारसंस्कारतः ॥
एकां कामपि कामकार्मुकलतासंवादिनीं कामिनी-
माकर्षत्यखिलास्तु न त्रिभुवनक्रोडान्तराध्यासिनीः ॥३०४॥

ननु वह्नेः शक्तिर्नष्टा सती प्रतिबन्धकोत्तरकालं कुतः समुत्पद्यते । यत एव शक्त्यन्तरसहिताद्वह्निस्वरूपात्परिणामिकारणात्प्रथमं तत एवेति ब्रूमः । यदि शक्त्यन्तररहितादेव प्रतिबन्धकोत्तरकालविशिष्टाद्वह्निस्वरूपात्समुत्पत्स्यते तदा को दोष इति चेत् । न कश्चिदन्योऽनियतहेतुकत्वात् । एवं हि कल्पने दाहशक्तिजनकशक्त्यन्तरस्य सर्वथाऽभावात्पूर्वं वह्न्युत्पादककारणेभ्यः सम्प्रति तु वह्निस्वरूपात्तदुत्पत्तिप्रसक्त्याऽनियतहेतुकत्वम् । देशकालयोश्च यदि न शक्त्यन्तरमस्ति तदा कथं तौ सहकारिणौ स्याताम् । कुम्भादेरपि सहकारित्वापत्तेः । शक्त्यन्तरसाहित्ये तु यान्येव कारणानि दहनस्वरूपदेशकालादीनि तेनैकेन शक्त्यन्तरेण शृङ्खलेनेव समाकलितान्येव स्फोटादिकां शक्तिं घटयतीति कुतोऽनियतहेतुकत्वम् । ननु तच्छक्त्यन्तरं प्रतिबन्धकोपस्थानावस्थायामप्यस्ति न वा । नास्ति चेत् । कुतः प्रतिबन्धकोत्तरकालमुत्पद्येत । कालादेः शक्त्यन्तरशालिनो ज्वलनादेर्वा । कालादेश्चेत् । दाहोत्पादकशक्तिरपि तत एवास्तु किं शक्त्यन्तरसङ्गतेन दहनेन । शक्त्यन्तरशालिनो ज्वलनादेव तदुत्पादस्वीकारे तु तदपि शक्त्यन्तरसङ्गतादेव वह्नेरुत्पत्तिमदङ्गीकर्त्तव्यम् । तदप्येवमित्यनवस्थानान्न कदाचित्प्रतिबन्धकोत्तरकालं कार्योत्पत्तिः

## प्रास्ताविकं किंचित् ।

वीरः सर्वसुरासुरेन्द्रमहितो वीरं बुधाः संश्रिताः ।
वीरेणाभिहतः स्वकर्मनिचयो वीराय नित्यं नमः ॥
वीरात्तीर्थमिदं प्रवृत्तमतुलं वीरस्य घोरं तपो ।
वीरे श्रीधृतिकीर्तिकान्तिनिचयः श्रीवीर ! भद्रं दिश ॥ १ ॥

आर्हतमतप्रभाकरसंस्थायाश्चतुर्थो मयूखः स्याद्वादरत्नाकराभिधशासनदेवकृपया प्रकाश्यते । सोऽयं ग्रन्थः ( ८४००० ) चतुरशीतिसहस्रग्रन्थसंख्यात्मको निरमायि श्रीवादिदेवसूरिभिरिति कर्णपरम्परातः समागता प्रथितिः । वहुशः प्रयतमानैरस्माभिस्तत्तज्जैनाचार्याणां सूरीणां च कृपयालम्भि सप्तपरिच्छेदात्मको भागो ग्रन्थराजस्यास्य । अस्मन्मुद्रापितग्रन्थान्तरक्रमेण संमुद्र्यते चेदयं तर्हि व्याप्नुयाद् द्वादशशतीं पृष्ठानामिति संभावयामः । संपूर्णो ग्रन्थ एकस्मिन् विभागे संग्रथ्यते चेद्भवेद् वैरस्याय पिपाठिषूणामतो विभागशः संमुद्र्य प्रकाशयितुमारब्ध एषः । तत्र प्रथमो भागः प्रथमपरिच्छेदात्मको मुद्रितः । प्राय इयतैव प्रमाणेन भागान्तराणां प्रत्येकं प्रतिमासं मुद्रणं एयादिति समीहामहे । ग्रन्थराजोऽयं बौद्धयौगादिमतानां परामर्शकोऽतोऽवश्यमध्ययनार्हो न केवलं स्याद्वादमतानुयायिनां किंतु भिन्नमतस्थानामपि स्याद्वादमतजिज्ञासूनाम् । अतः पूर्वमयूखवदस्यापि मूल्यालपत्वपरिशिष्टविस्तारग्रन्थान्तर्बहिःपरिचयादिकं साविस्तरमादृतम् । सन्ति चास्य ग्रन्थस्य द्वादशपरिशिष्टानि । किंतु परिशिष्टादिकमन्तिमे विभाग एव मुद्रयितुमर्हम् । अग्रेतनपत्राणां मुद्रयिष्यमाणानां निर्देशस्य पूर्वं कर्तुमशक्यत्वात् । केवलं टिप्पन्यादिकमर्थावसायोपयोगि तत्तत्स्थलेऽधोभागे निरदेशि । प्रतिपत्रं पङ्क्त्यङ्का निर्दिष्टा येषामुपयोगः परिशिष्टदर्शनसौकर्याय । अन्यच्च पुस्तकानां वस्त्रात्मकं बन्धनमस्तु न पत्रात्मकमिति सूचयन्ति केचिन्महाभागाः एवं तद्व्यक्तिशो ग्राहकैः स्वयमनुष्ठेयम् । अस्माभिस्तथा संपादने यैर्नाभिमतस्तदर्थं द्रव्याधिक्यव्ययस्ते मुधैव पीडितचेतसो भवेयुरिति यथापूर्वं सरणिरादृता । इतिविनिवेदकः ।

आर्हतमतप्रभाकरकार्यालयः पुण्यपत्तनम् । }
वी. स २४५३ सवत्सरीपर्व । }

विद्वद्वशंवदः—
मोतीलाल लाधाजी

| अशुद्धम् | शुद्धम् | पृ. | पं. | अशुद्धम् | शुद्धम् | पृ. | पं. |
|---|---|---|---|---|---|---|---|
| का यां | कायां | ,, | २५ | राहित | रहित | १८१ | ३ |
| पत्तेः | पत्तेः । | ११६ | ८ | पतृ | पत्तृ । | १८२ | १५ |
| कार्थे | कार्ये | ११६ | ९ | सन्विन्मा | सविन्मा | १८३ | १४ |
| पीदं । | पीदं | ११६ | ११ | केकिना | केकिना | ,, | २१ |
| प्रता | पता | ,, | २५ | सुधाभ्रमी | सुधाभ्रमी | १८७ | १९ |
| यनीवृ | यनी वृ | ११८ | ८ | इह | य इह | १९१ | १५ |
| किं नि | किंनि | ११९ | २४ | क्त्यामुष्मिन् | युक्त्यामुष्मिन् | १९४ | ९ |
| त्तयां | त्तायां | ११९ | १४ | मानमदर्शितम् | मान दर्शितम् | १९४ | २४ |
| मय | यम | ११९ | २४ | द्वटा | द्वटा | १९८ | ६ |
| र्थिय | र्थित | १२३ | ९ | च्छिनम् | च्छिन्नम् | २०१ | ३ |
| माव | भवा | ,, | २१ | तुम | त्तुम | २०४ | १६ |
| तव्या | तष्या | १२५ | २० | योगः | योगः । | २०५ | १५ |
| यते | येत | १२६ | ११ | तज्ञ | त्वज्ञ | २०६ | ७ |
| कैम्रुदा | कौमुदी | ,, | २५ | मिति | मिति । | ,, | १० |
| वाद | वादः | १२७ | २२ | वात्यादी | वीत्यादि | ,, | १७ |
| लौकि | लौकिक | १३५ | १८ | द्वैतरू | द्वैरू | २०९ | १३ |
| स्याः | स्या | १३७ | ५ | धर्म्मी | धर्मी | २१० | १३ |
| र्थम्यवसाया | र्थाध्यवसाया | १४७ | १२ | ज्ञान | ज्ञातं | ,, | २२ |
| च्छद्वा | च्छब्दा | १५३ | १७ | परेदा | परेषा | २१७ | १६ |
| प्राय | प्रायः | ,, | १९ | यार्थौ ज्ञानार्थ | यार्थौ ज्ञानार्था | २१८ | १४ |
| च्छिन्नार्थ | च्छिन्नार्थ | १५४ | ११ | मूयते | भूयते | २२० | ५ |
| कस्तु | कत्वस्तु | ,, | २३ | कल्पो | कलो | २२२ | १९ |
| लम्मो | लम्भो | १५५ | १५ | नात्र- | नात्र | , | २० |
| | | १५६ | ७ | दृष्टान्त | दृष्टा त | २२३ | ४ |
| एकस्वैव | एकस्यैव | १५८ | २२ | शरी | शरीर | ,, | २४ |
| पक्ष | पक्षे | ,, | २३ | कयो | कयोः | ,, | २६ |
| मूनी | मूनी- | ,, | २६ | वेद | वेध | २२४ | २ |
| प्रामातु | प्रमातु | १५९ | ४ | स्यादि | स्यापि | २३० | ३ |
| कुरुता | कुरुता | १६४ | १५ | वाधा | वाध | २३५ | ३ |
| एवं | एव | १६६ | ५ | स्तम्बरेम | स्तम्बेरम | २२६ | १९ |
| प्रकश | प्रकाश | ,, | २१ | अस्या | अथा | २३० | १२ |
| यथने | यथनेन | १६७ | १० | अथो | अथा | २३६ | १ |
| यदे | दधे | १७० | २१ | योग | यौग | २३९ | २ |
| पाज | पजा | १७१ | ९ | न च तेषां" | "न च तेषां | २३९ | २४ |
| विमिन्न | विभिन्न | १७८ | १६-१७ | स्त्वाप्र | स्त्वप्रा | २४० | ५ |
| ऽस्ति | ऽस्ति । | १७९ | २ | न्नवे | न्न वे | २४० | १ |

ॐ नमः सर्वज्ञाय ।

श्रीवादिदेवसूरिविरचितः प्रमाणनयतत्त्वालोकालङ्कारः

तद्व्याख्या च

# ॥ स्याद्वादरत्नाकरः ॥

नमः परमविज्ञानदर्शनानन्दशक्तये ॥
श्रीयुगादिजिनेन्द्राय स्वायत्तीकृतमुक्तये ॥ १ ॥

एकस्यापि तुरङ्गमस्य कमपि ज्ञात्वोपकारं सुर-
श्रेणीभिः सह षष्टियोजनमितामाक्रम्य यः काश्यपीम् ॥
आरामे समवासरद् भृगुपुरस्यैशानदिङ्मण्डने ।
स श्रीमान् मयि सुव्रतः प्रकुरुतां कारुण्यसान्द्रे दृशौ ॥ २ ॥

---

१ अनुष्टुप् । २ शार्दूलविक्रीडितम् । ३ गूर्जरप्रदेशेऽधुना ' भडोच ' इति ख्यातस्य । ४ विंशस्तीर्थंकरः । ५ श्रीमुनिसुव्रतस्वामितीर्थे लाटदेशमडनभृगुकच्छपुराधिपो जितशत्रुनामा राजा आसीत् । एकदा तेन राज्ञा यज्ञे स्वतुरग आलब्धव्य इति निश्चयः कृतः । एतदभिज्ञानपूर्णा सम्प्राप्तकेवलज्ञानदर्शनाः ससुरनराः श्रीमन्तो भगवन्तो मुनिसुव्रतस्वामिनः एकस्यां रात्रौ योजनानां षष्टिमुल्लङ्घ्य भृगुकच्छे कोरण्टवन सम्प्राप्ता देशनान्ते तत्र अश्वेन सह राजाजितशत्रुः समागतः भगवन्त वन्दित्वा सम्मुखमुपविष्टः । भगवद्भिरपि तत्प्रबोधाय तस्य अश्वस्य आत्मनश्च पूर्वभवः कथितः । ततस्तदाकर्ण्य जातजातिस्मृतिर्निरगमः सम्यक्त्वमूल देशविरतिधर्मं सचित्ताहारवर्जनं स्वीकृतवान् । अयमश्वः षण्मासान्ते मृत्वा सौधर्मावतसके महर्धिको देवः संजातः । ततस्तेनावधिज्ञानद्वारा स्वपूर्वभवो ज्ञातः । अथ च तेन स्वामिसमवसरणस्थाने रत्नमयश्चैत्यः प्रभुप्रतिमाश्वमूर्तिश्च कारिता प्रतिष्ठापिता च । तत्कालात्तत्स्थानं ' अश्वावबोधतीर्थं ' इति ख्यातिमदभूत् ।

प्रांशुप्राकारकान्तां त्रिदशपरिवृढव्यूहरुद्धावकाशां
वाचालां केतुकोटिक्वणदनणुमणीघोरणीभिः समन्तात् ॥
यस्य व्याख्यानभूमीमहह किमिदमित्याकुलाः कौतुकेन ।
प्रेक्षन्ते प्राणभाजः स भुवि विजयतां तीर्थकृत् पार्श्वनाथः ॥३॥
दत्त्वा कर्णं सुरेशे स्थितवति भवति स्मेरवक्रारविन्दे ।
वृन्दे वृन्दारकाणामनुसरति मुदं मन्त्रिणि स्वर्गिणां च ॥
आयातान् वादबुद्ध्या झटिति गणभृतः प्रौढयुक्तिप्रपञ्चै-
र्निःशङ्कानादधानो जयति जिनपतिर्वर्द्धमानः सभायाम् ॥ ४ ॥
प्रत्यक्षद्वयदीप्तनेत्रयुगलस्तर्कस्फुरत्केसरः ।
शाब्दव्यात्तकरालवक्त्रकुहरः सद्धेतुगुञ्जारवः ॥
प्रक्रीडन्नयकानने स्मृतिनखश्रेणीशिखाभीषणः ।
संज्ञावालधिबन्धुरो विजयते स्याद्वादपञ्चाननः ॥ ५ ॥
यन्नामस्मृतिमात्रतोऽपि कृतिनां वाचां विलासाः क्षणात् ।
जायन्ते प्रतिवादिकोविदमदध्वंसक्षमाः सर्वतः ॥
तां त्रैलोक्यगृहप्ररूढकुमतध्वान्तप्रदीपप्रभां ।
वन्दे शारदचन्द्रसुन्दरमुखीं श्रीशारदां देवताम् ॥ ६ ॥
येषां हन्त पिबन्ति कर्णपुटकैरद्यापि गेमाश्रिताः ।
किञ्चित्कूणितलोचनाश्च सुधियः सुस्वादुशास्त्रामृतम् ॥
निःसाधारणभक्तिभाजनजने विघ्नस्य विघ्नावलीं ।
सन्तु श्रीमुनिचन्द्रसूरिगुरवस्तेऽभीप्सितप्राप्तये ॥ ७ ॥
श्रीसिद्धसेनहरिभद्रमुखाः प्रसिद्धा-
स्ते सूरयो मयि भवन्तु कृतप्रसादाः ॥

---

१ स्रग्धरा २ 'किङ्किणी' इति प. पुस्तके पाठ । ३ त्रयोविंशतितमस्तीर्थङ्कर. ४ श्रीवर्धमानेन एकादशाना गणधराणा संशया निराकृता । तद्विषयक सविस्तर वर्णनमस्मन्मुद्रापितस्याद्वादमञ्जर्या १७८ पृष्ठे ७।४ टिप्पन्योर्द्रष्टव्यम् ५ साव्यवहारिक पारमार्थिकं चेति द्विभेद प्रत्यक्षम् । ६ वसन्ततिलका ।

येषां[1] विमृश्य सततं विविधान् निबन्धान्
　शास्त्रं चिकीर्षति तनुप्रतिभोऽपि मादृक् ॥ ८ ॥
अधिकतरमनीषोल्लासिनस्तुल्यबुद्धे-[2]
　र्मदविषधरदष्टस्वान्तदेहस्य चास्ति ॥
उपकृतिरिह शास्त्रेणामुना नैव किन्तु
　प्रकृतिसरलचित्तस्याल्पबोधस्य मत्तः ॥ ९ ॥

इह कृतज्ञतामवलम्बमानः शास्त्रकारस्तत्सिद्धिनिबन्धनं परापरगुरुप्रवाहं स्मृत्यादर्शे[3] सङ्क्रमयन्निमं प्रथमतः श्लोकमाह—

**रागद्वेषविजेतारं ज्ञातारं विश्ववस्तुनः ।**
**शक्रपूज्यं गिरामीशं तीर्थेशं स्मृतिमानये ॥ १ ॥**

श्लोकस्य वाच्योऽर्थः ।

तत्र तीर्यते भवाम्भोधिर्भव्यैरनेनेति तीर्थं चतुर्वर्णः[4] श्रमणसङ्घः तस्य ईशः स्वामी तीर्थेशः प्रत्यासन्नोपकारित्वादिह श्रीवर्द्धमानस्तम् । स्मृतिं स्मरणमानये प्रापयामि । अपश्चिम[5]तीर्थाधिनाथं श्रीमहावीरमहमिह ग्रन्थारम्भे स्मरामीत्यर्थः । कथंभूतम् । रागोऽभिष्वङ्गात्मा । द्वेषः परसम्पत्त्यसहनस्वभावस्तौ विशेषेणापुनर्जेयतया जेतुं विक्षेप्तुं शीलं यस्यासौ रागद्वेषविजेता तम् । पुनः कीदृशम् । ज्ञातारमवबोद्धारम् । कस्य । विश्ववस्तुनः कालत्रयवर्त्तिसामान्यविशेषात्मकपदार्थस्य भूयः किंविशिष्टम् । शक्रैः शतमन्युभिः पूज्यः कमनीयाशोकाद्यष्टमहाप्रातिहार्य[6]-

---

१ श्रीसिद्धसेनस्य संमतितर्कादयो ग्रन्थाः । हरिभद्रस्य अनेकान्तजयपताकादयो ग्रन्थाः । २ मालिनी । ३ ' स्मृत्यात्मदर्शे ' इति प. म. पुस्तकयोः पाठः । ४ ' चउव्विहे संघे पं. तं.—१ समणा २ समणीओ ३ सावगा ४ सावियाओ ( १ श्रमणः २ श्रमणी ३ श्रावकः ४ श्राविका )' इति स्था. सू. ३६३-५ पूर्वदिक्स्थम् । अविद्यमानः पश्चिमः पश्चाद्भावी तीर्थकरो यस्येत्यपश्चिमः तमन्तिम तीर्थकरमिति वा । ६ ' अशोकवृक्षः सुरपुष्पवृष्टिर्दिव्यध्वनिश्चामरमासनं च । भामण्डलं दुन्दुभिरातपत्रं सत्प्रातिहार्याणि जिनेश्वराणाम् । ' इति ।

विरचनेनार्चनीयः शक्रपूज्यस्तम् । पुनरपि कीदृक्षम्, गिरां वाचामीशं यथावस्थितवस्तुगोचरत्वेन तासां प्रयोक्तृत्वान्नायकम् । अनेन च विशेषणचतुष्टयेनामी यथाक्रमं भगवतो मूलातिशयाश्चत्वारः स्मृतिमुकुरभूमिकामानीयन्ते । तद्यथा अपायापगमातिशयो ज्ञानातिशयः पूजातिशयो वागतिशयश्चेति । एतेषां चातिशयानामित्थमुपन्यासे तथोत्पत्तिरेव निमित्तम् । तथा हि नाविजितरागद्वेषो विश्ववस्तुज्ञाता भवति । न चाविश्ववस्तुज्ञः शक्रपूज्यः सम्पद्यते । न च शक्रपूजाविरहे भगवांस्तथागिरः प्रयुङ्क्त इति श्लोकस्य वाच्योऽर्थः ॥

श्लोकस्य प्रतीयमानोऽर्थः ।

प्रतीयपानस्त्वयम् । इह ये किलाविदलितदृढतररागद्वेषद्विषद्दंता[1]शेषदुःखविशेषाः अविदितहेयोपादेयोपेक्षणीयताख्यापितजीवन्मृततुल्यभावाः सकललोकस्यापि अनवलोकनीयाः विषयाविसंवादसमुदितपरमानन्दप्रसादितहृदयसहृदयस्पृहणीयशब्दप्रयोगाशक्ताः अथ च परमसुखविज्ञानपूज्यत्वसम्यक्शब्दप्रयोक्तृत्वाभिलाषिणस्तान् प्रति तत्समीहितगुणाधीशस्य भगवतः समाश्रयणीयत्वं वस्त्वमुना श्लोकेन व्यञ्जनव्यापारगोचरतामावेदयतो ग्रन्थकृतोऽस्माभिरेतत्स्मरणशरणप्रपन्नैरिदं शास्त्रमुपदिश्यते । तदहो जना यूयमप्यमुमेवासाधारणगुणाधिकरणं स्मरणकरणेन शरणं प्रपद्यध्वमिति परहितप्रपन्नत्वमुपदेशदानदक्षत्वं च वस्तु भगवत्समाश्रयणार्थं परप्रोत्साहनायामुत्साहप्रतीतेर्दयावीररसो भगवद्विषयो रत्याख्यो[2] भावश्च ध्वन्यते । यो हि दुर्जयमप्यान्तरमरातिनिकरं[3] परितः पराकर्तुं प्रवीणस्तस्य बहिररहितसम्भावनैव नाविर्भवतीत्यतिशयोक्तिरलङ्कारः[4] । अत एव चान्येभ्यो विजयिभ्यो व्यतिरेकावगमाद् व्यतिरेकालङ्कारश्च[5] ।

---

१ 'दन्ताशेष' इति भ. म. पुस्तकयोः पाठः । २ परस्परास्यावन्वात्मिका रतिः स्थायिभावेष्वय प्रयमो भावः । ३ शत्रुसमुदायम् । ४ विशेषविवक्षया भेदाभेदयोगायोगव्यत्ययोऽतिशयोक्तिः । काव्यानुशासने अ. ६ । ५ उत्कर्षापकर्षहेतोः साम्यस्य चोक्तावनुक्तौ चोपमेयस्याधिक्यं व्यतिरेकः । का. अ. ६ ।

नित्योद्युक्तत्वेन प्रतिपक्षक्षेपकत्वेनासन्मोहाध्यवसायित्वेन चोत्साहप्रतीतेर्वीररसश्च भगवतोऽरागवतो रागद्वेषेति विशेषणेन व्यज्यते । विशेषणचतुष्टयेन चान्यतीर्थिकतीर्थेशेभ्यो भगवतः समधिकत्वावगतेर्व्यतिरेकालङ्कारो ध्वन्यते । एवं चासाधारणगुणाधिकरणतया भगवतः परमगुरुत्वं ख्यापितं भवति । तथाहि परमो गुरुर्भगवान् वर्द्धमानो रागद्वेषविजेतृत्वात् विश्ववस्तुज्ञातृत्वात् शक्रपूज्यत्वात् वागीशत्वाच्च यः पुनर्नाभिहितसाध्यसम्पन्नः स न यथोक्तसाधनाधारो यथा सम्प्रतिपन्नः । एतेनापरगुरुरपि गणधरादिरस्मद्गुरुपर्यन्तो व्याख्यातः । तस्यैकदेशेन निगदितसाधनाधिकरणत्वादपरगुरुत्वोपपत्तेः ।

परापरगुरुप्रवाहस्मरणं शास्त्रसिद्धिनिबन्धनमस्ति न वेति विचारः ।

अत्राह कश्चिद्, भवतु नामैवं परापरगुरुप्रवाहस्य प्रसिद्धिः । तथापि कथमसौ प्रकृतशास्त्रस्य सिद्धिनिबन्धनं येन तदारम्भे तस्य स्मृतिः श्रेयसीति तत्रैके समादधते परापरगुरुप्रवाहस्य स्मरणाद् धर्मविशेषोत्पत्तेरधर्मध्वंसात् तद्धेतुकविघ्नोपशान्तेरभीप्सितशास्त्रपरिसमाप्तिः स तत्सिद्धिनिबन्धनमिति तन्न तर्कानुकूलम् । एवं हि तेषां प्रस्तुतशास्त्रारम्भे पात्रदानादिकमपि कर्तव्यकक्षामास्कन्देत् । परापरगुरुप्रवाहस्मरणवत् तस्यापि धर्मविशेषोत्पत्तिहेतुत्वाविशेषादभिहितशास्त्रसिद्धिनिबन्धनत्वोपपत्तेः । मङ्गलत्वात् आप्तस्मरणं शास्त्रसिद्धिनिबन्धनमित्यपरे । तदपि त्रपापात्रम् । स्वाध्यायादेरपि मङ्गलत्वाविरोधात् न खलु परापरगुरुपरम्परास्मरणमेव मङ्गलमिति क्षितिपतिशासनं समस्ति । परापरगुरुप्रबन्धानुध्यानाद् ग्रन्थकारस्य नास्तिकतापरिहारसिद्धितस्तद्वचनस्यास्तिकैरादरणीयत्वेन सर्वत्र ख्यात्युपपत्तेस्तदनुध्यानं तत्सिद्धिनिबन्धनमिति कतिपये । तदपि न चतुरचेतोहरम् । आत्मादिपदार्थ-

---

१ भयादिविभावः स्थैर्याद्यनुभावो धृत्यादिव्यभिचार्युत्साहो धर्मदानयुद्धभेदो वीरः । धर्मवीरो नागानन्दे जीमूतवाहनस्य । दानवीरः परशुरामबलिप्रभृतीनाम् । युद्धवीरो वीरचरिते रामस्य । का. अ. २ । २ गणधरात् श्रीमुनिचन्द्रसूरिः ४१तमः ।

समर्थनादेव शास्त्रकर्तुर्नास्तिकतापरिहारघटनात् । तदन्तरेण शास्त्रादौ परापरगुरुप्रवन्धानुध्यानवचने सत्यपि नास्तिकतापरिहारानुपपत्तेः । शिष्टाचारपरिपालनसाधनत्वात् तत्स्मरणं तत्सिद्धिनिवन्धनमित्यन्ये । नैतदपि साधीयः । स्वाध्यायादेरपि सकलशिष्टाचारपरिपालनसाधनत्वेनावधारणात् । ततः प्रस्तुतशास्त्रोत्पादनिमित्तचिरन्तनशास्त्रस्योत्पत्तिकारणत्वात् तदर्थनिर्णयसाधनत्वाच्च परापरगुरुप्रवाहस्तत्सिद्धिनिवन्धनमित्येतदेव सहृदयसंवेद्यमिति ।

परापराप्तनिर्मितशास्त्रं प्रकृतशास्त्रे हेतुभूतमिति शङ्कासमाधानाभ्यां व्यवस्थापनम् ।

ननु यथावद्विज्ञानमेव कर्तुस्तत्सिद्धिनिवन्धनमिति चेत् । नैवम् । तस्य गुरूपदेशपरतन्त्रत्वात् । श्रुतज्ञानावरणक्षयोपशमात् गुरूपदेशविरहेऽपि श्रुतज्ञानस्योत्पादान्न तत्तत्परतन्त्रमिति चेत् । तदप्यवद्यम् । द्रव्यभावश्रुतस्याप्तोपदेशापाये कस्याप्यभावात् । तथाहि द्रव्यश्रुतं द्वादशाङ्गवचनात्मकम् । तदर्थज्ञानं तु भावश्रुतम् । तद्द्वितयमपि गणधराणां भगवदर्हद्वचनातिशयप्रसादात् स्वमतिश्रुतज्ञानावरणवीर्यान्तरायक्षयोपशमातिशयाच्चोपजायमानं कथमाप्तायत्तं न भवेत् । तथा च परापराप्तप्रवाहनिवन्धन एव परापरशास्त्रप्रवाहस्तन्निवन्धनं च यथावद्विज्ञानं शास्त्रकर्तुरभिमतशास्त्रकरणलक्षणफलसिद्धेरप्युपाय इति तत्कामेनाप्तः समस्तोऽपि तदारम्भे स्मरणीय एव । यथोक्तम् ।

" अभिमतफलसिद्धेरभ्युपायः सुबोधः ।
प्रभवति स च शास्त्रात् तस्य चोत्पत्तिराप्तात् ॥
इति भवति स पूज्यस्तत्प्रसादप्रबुद्धै-
र्न हि कृतमुपकारं साधवो विस्मरन्ति ॥ १ ॥"

अथ यथा गुरूपदेशः शास्त्रसिद्धेर्निवन्धनं तथाप्तस्मरणनिर्मितधर्मविशेषमङ्गलनास्तिकतापरिहारशिष्टाचारपरिपालनान्यपि तत्सिद्धौ

१ अस्मन्मुद्रापितस्याद्वादमञ्जर्यां पृ. १७६ टि. ३.

२ अस्मन्मुद्रापिततत्त्वार्थाधिगमसूत्रेषु अ. ८ सू. ७, १४. अ. १ सू. ५.

तेषां सहकारित्वाविशेषात् । अवितथमेतत् केवलमाप्तस्मरणानिर्मितान्येव तानि शास्त्रसिद्धौ सहकारीणीत्यवधारणं प्रतिषिध्यते । सत्पात्रदानादिना निमित्तान्तरेणापि निर्मितानां तेषां तस्यां सहकारित्वसम्भवात् । कदाचित्तदभावेऽपि पूर्वोपार्जितधर्मविशेषेभ्य एव शास्त्रनिष्पत्तेश्च । परापरगुरूपदेशस्तु न तद्वदनियतः शास्त्रकरणे तस्यावश्यमपेक्षणीयत्वादितरथा तदनुपपत्तेः । ततः परापरगुरुप्रवाहस्य शास्त्रसिद्धिनिबन्धनत्वात् तदारम्भसमये तत्स्मृतिरुपपन्नैवेति ॥

प्रमाणनयतत्त्वालोकस्य शास्त्रत्वासिद्धिः ।

कथं पुनः प्रमाणनयतत्त्वालोकः शास्त्रं येन तदारम्भे परापरगुरुप्रवाहः स्मर्यत इति चेत् । उच्यते । तल्लक्षणयोगात् । तथाहि वर्णात्मकं पदम् । पदात्मकं सूत्रम् । सूत्रसमूहः प्रकरणम् । प्रकरणसमूहो यथासमयं परिच्छेदो वा पादो वा आह्निकं वा अध्यायो वा तत्समूहश्च शास्त्रमिति शास्त्रलक्षणम् । तच्चाष्टपरिच्छेदीरूपस्य प्रमाणनयतत्त्वालोकस्यास्तीति सोऽपि शास्त्रम् । यद्वा विश्वव्यापकाप्रमाणनयतत्त्वशासनाच्छास्त्रत्वमस्य मनीषिभिर्मन्तव्यम् । प्रसिद्धे चास्य शास्त्रत्वे तद्विवरणस्यापि शास्त्रत्वं सिद्धमवबोद्धव्यम् । तदर्थत्वात् । एवं च सिद्धमिदम्

यः सूक्तार्थपवित्रशास्त्रपटली निर्वर्तनप्रौढता-
　हेतुत्वात् परमोपकारकतया विश्वत्रये विश्रुतः ;
प्रारम्भेऽत्र कृतज्ञतां प्रकटयन्नात्मन्यसौ सूत्रकृत-
　तामेतामकरोत् परापरगुरुस्तोमस्य तस्य स्मृतिम् ॥ १० ॥

प्रमाणनयतत्त्वेति सूत्रमवतारयितु शास्त्रेऽनुबन्धचतुष्टयस्यावश्यकत्वप्रदर्शनम् ।

ननु शक्यानुष्ठानाभिधेयेनाभिमतप्रयोजनेन सम्बन्धेन च सहितान्येव शास्त्राणि प्रेक्षावद्भिराद्रियन्ते नान्यथा । प्रेक्षावत्त्वक्षतेः । तत्किमिदं प्रस्तूयमानं शास्त्रमभिधेयप्रयोजनसंबन्धैः सहितं रहितं वा स्यात् । रहितं चेत् तर्हि तदारम्भार्थमभियोगो निरुपयोगः स्यात् । अहिल[2]प्रलापवायस[3]दशनस्वरूपोपवर्णनदश[4]दाडिमा-

[1] विषयः, संबन्धः, प्रयोजन, अधिकारीत्यनुबन्धचतुष्टयम् । [2] अहिलस्य पिशाचाविष्टस्य प्रलापाः । [3] 'काकस्य कति वा दन्ता मेषस्याण्ड कियत्पलम् । गर्दभे कति रोमाणित्येषा मूर्खविचारणा' इति वचनानुसारं वायसदन्तस्वरूपोपवर्णन निरर्थकम् । [4] 'दशदाडिमानि षडपूपाः' इत्यादिकं निरर्थकवाक्योदाहरण पातञ्जलभाष्ये ।

दिवाक्यवत् प्रज्ञाभिमानिनामवज्ञास्पदत्वात् । अथ तैः सहितम् । तथापि यत्तत्राभिधेयं तद्यद्यशक्यानुष्ठानम् । तदा सर्वव्याधिहरविषधराधीशशिरोरत्नादानोपदेशवत्कथमिव कस्यचिदपि तत्रोपादेयबुद्धिः प्रादुःष्यात् । प्रयोजनमप्यनभिमतं चेत् जननीपाणिग्रहणोपदेशवत् तत्रातितरामनादरश्चतुराणां स्यादित्यनेकशङ्काशङ्कुसमुद्धरणार्थमिदमादिवाक्यमाह–

## प्रमाणनयतत्त्वव्यवस्थापनार्थमिदमुपक्रम्यत इति।१।

**प्रमाणनयतत्त्वेति सूत्रस्य विवरणम् ।**

प्रकर्षेण सन्देहाद्यपनयनस्वरूपेण मीयते परिच्छिद्यते वस्तु येन तत्प्रमाणम् । नीयते गम्यते श्रुतप्रमाणपरिच्छिन्नार्थैकदेशोऽनेनेति नयः प्रमाणं च नयश्चेति प्रमाणनयौ तयोस्तत्त्वमसाधारणं स्वरूपम् । तस्य विशेषेणावस्थापनं व्यवस्थापनम् । तदेवार्थः प्रयोजनं यत्र तदर्थम् । ननु द्वयमिह प्रकृतम् । इदमर्थः शास्त्रम् । उपक्रम्यत इति च क्रिया । तत्र किं प्रमाणनयतत्त्वव्यवस्थापनार्थमित्यत्र शास्त्रं संबध्यते यदुत प्रमाणनयतत्त्वव्यवस्थापनार्थमिदं शास्त्रमुपक्रम्यते । अथ क्रियाविशेषणमेतत् प्रमाणनयतत्त्वव्यवस्थापनार्थमित्यत्र उपक्रम्यते योऽस्योपक्रमः स प्रमाणनयतत्त्वव्यवस्थापनार्थ इति । भवति चामूदृशि प्रोक्ते संदेहः । यथा शोभनं पचतीत्युक्ते किं पाक्यं तण्डुलादि शोभनमथ पाक इति । उच्यते । क्रियाविशेषणमेवैतत् । व्यावस्थापनं हि शास्त्रकारव्यापारो न तु शास्त्रव्यापारः । आचार्यो हि मुख्यतया व्यवस्थापयति न शास्त्रम् । तदुपचारात् भिक्षा वासयतीति यथा । तस्माच्छास्त्रस्य यो व्यापारः स्वाभिधेयप्रतिपादनं नाम तत् सूचितमेव प्रमाणनयतत्त्वेत्यवयवेन । व्यवस्थापनार्थमित्यनेन तु प्रयोजनमुक्तम् । अतो यस्य तत्प्रयोजनमाचार्यस्य तदीय एव व्यापारस्तेन विशिष्यते । व्यवस्थापनार्थ

१ उपचारो लक्षणा । यथा यतेर्नगरनिवासे भिक्षालाभो हेतुः ।

आचार्यस्योपक्रमः शिष्यनिष्ठ इति। यथा घटशब्दः पृथुबुध्नोदराकारार्थः। तदर्थस्तु घट उदकाहरणार्थः। तदुच्चारयिता तु तेन शब्देन तदर्थव्यवस्थापनार्थ इति। स इहापि न्यायः। शास्त्रं प्रमाणनयतत्त्वार्थम्। प्रमाणनयतत्त्वं हेयोपादेयोपेक्षणीयेष्वर्थेषु हानोपादानोपेक्षार्थम्। आचार्यस्तु तत्कर्ता तेन शास्त्रेण तदर्थव्यवस्थापनार्थ इति। एवं व्यवस्थापनार्थत्वमुपक्रमस्याचार्यव्यापारस्य यथोचितं न तथा शास्त्रस्य। तस्य करणभावेन तथोपयोगादिति। एवं प्रमाणनयतत्त्वव्यवस्थापनायेदं प्रमाणनयतत्त्वव्यवस्थापनार्थमित्येवं तत्पुरुषोऽपि यदि क्रियते। तत्रापि क्रियाविशेषणतैव व्याख्येया। इदं स्वसंवेदनप्रत्यक्षेणान्तस्तत्त्वरूपतया प्रतिभासमानं प्रमाणनयतत्त्वालोकाख्यं शास्त्रम्। उपक्रम्यते बहिः शब्दरूपतया प्रारभ्यते प्रणीयत इति यावत्।

प्रमाणनयेतिद्वन्द्वगत-प्रमाणशब्दस्य पूर्वनिपात-विचारः।

ननु प्रमाणं च नयश्चेति द्वन्द्वे नयनशब्दस्य पूर्वं निपातः प्राप्नोत्यल्पाच्तरत्वान्न पुनःप्रमाणशब्दस्य बह्वच्त्वादिति चेत्। तन्न। अभ्यर्हितत्वेन बह्वचोऽपि प्रमाणशब्दस्याल्पाच्तरात् नयशब्दात् पूर्वं निपातने कृते दोषाभावात्। नह्यल्पाच्तरादभ्यर्हितं पूर्वं निपततीति कस्यचिदप्रसिद्धम्। लक्षणहेत्वोरित्यत्र हेतुशब्दादल्पाच्तरादपि लक्षणपदस्य बह्वचोऽभ्यर्हितस्य पूर्वं प्रयोगदर्शनात्। कथं पुनः प्रमाणशब्दो नयशब्दादभ्यर्हित इति चेत्। उच्यते। प्रमाणस्य सकलादेशित्वेन विकलादेशिनो नयादभ्यर्हितत्वात्। तद्वाचकः प्रमाणशब्दोऽपि नयशब्दा-

---

१ 'स्थापनार्थम्' इति भ. म. पुस्तकयोः पाठः। २ 'व्योपारात्' इति भ. म. पुस्तकयोः पाठः। ३ 'तत्रोपयोगात्' इति प. पुस्तके पाठः। ४ 'अल्पाच्तर' इति पा. सू. २-२-३४.। ५ 'अभ्यर्हितं च' इति का. वार्तिकम् २-२-३४. ६ 'लक्षणहेत्वोः क्रियायाः' इति पा. सू. ३-२-१२६.। ७ सकलादेशः प्रमाणवाक्यं, तल्लक्षणं चेदम्–प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुनः कालादिभिरभेदवृत्तिप्राधान्यादभेदोपचाराद्वा यौगपद्येन प्रतिपादकं वचः सकलादेशः तद्विपरीतस्तु विकलादेशो नयवाक्यमित्यर्थः।

दभ्यर्हित एव । ननु कथमभ्यर्हितत्वानभ्यर्हितत्वाभ्यां सकलादेशित्वविकलादेशित्वे व्याप्ते सिद्धे यतः प्रमाणनययोस्ते सिद्ध्येते इति चेत् । प्रकृष्टापकृष्टविशुद्धिलक्षणत्वादभ्यर्हितत्वानभ्यर्हितत्वयोस्तद्व्यापकत्वमिति ब्रूमः । नहि प्रकृष्टां विशुद्धिमन्तरेण प्रमाणमनेकधर्म्मधर्म्मिस्वभावं सकलमर्थमादिशति । नयस्यापि सकलादेशित्वप्रसंगात् । नापि विशुद्ध्यपकर्षमन्तरेण नयो धर्म्ममात्रं धर्म्मिमात्रं वा। विकलमादिशति । प्रमाणस्यापि विकलादेशित्वप्रसङ्गात् । ननु नयोऽभ्यर्हितः प्रमाणात् तद्विषयांशे विप्रतिपत्तौ सम्प्रत्ययहेतुत्वादिति चेत् । न । कस्याचित् प्रमातुः प्रमाणादेवाशेषवस्तुनिर्णयात् तद्विषयांशे विप्रतिपत्तेरसम्भवात् नयात् सम्प्रत्ययासिद्धेः कस्यचित् प्रतिपत्तुस्तत्सम्भवे नयात् सम्प्रत्ययसिद्धिरिति चेत । सकलवस्तुनि विप्रतिपत्तौ प्रमाणात् किन्न सम्प्रत्ययसिद्धिः । सोऽयं सकलवस्तुविप्रतिपत्तिनिराकरणसमर्थात् प्रमाणाद्वस्त्वेकदेशे विप्रतिपत्तिनिरसनसमर्थं सन्नयमभ्यर्हितं ब्रुवाणो न न्यायवादी ।

प्रयोजननिरूपणम् ।

इदं च वाक्यं मुख्यवृत्त्या[1] प्रयोजनमेव प्रतिपादयितुमुपन्यस्तम् । तस्यैव प्राधान्येन प्रवृत्त्यङ्गत्वात् । अभिधेयसम्बन्धौ तु सामर्थ्याद् गमयति । तथा हि प्रमाणनयतत्त्वमभिधेयं प्रमाणनयतत्त्वेत्यवयवेन लक्षितम् इत्यभिधेयविधुरत्वारेका[2] निराकृता। अमुष्य चाभिधेयस्य सुखानुष्ठेयत्वादशक्यानुष्ठानत्वशङ्का दूरत एव निरस्ता। प्रयोजनं द्वेधा कर्त्तुः श्रोतुश्च । पुनर्द्विविधम् अनन्तरं सान्तरञ्च । तत्र कर्त्तुरनन्तरं प्रयोजनं प्रमाणनयतत्त्वव्यवस्थापनं प्रमाणेत्याद्यवयवेन ण्यन्तेन[3] साक्षान्निर्दिष्टम्। श्रोतुस्तु व्यवस्थेत्युपसर्गधातुसमुदायेनैव तदन्तर्गतं प्रत्याय्यते । सान्तरप्रयोजनं तु द्वेधा प्रधानमप्रधानञ्च तत्र अप्रधानं कर्त्तुस्सत्त्वानुग्रहख्यात्यादि-

१ अभिधावृत्त्या न तु लक्षणया । २ आरेका—शङ्का । ३ णिच्प्रत्ययान्तेन ।

स्वभावम् । श्रोतुस्तु हेयोपादेयोपेक्षणीयेष्वर्थेषु हानोपादानोपेक्षालक्षणम् । प्रधानं त्वभ्युदयनिःश्रेयसावाप्तिस्वरूपमुभयोरपि । एतच्चानन्तरप्रयोजनफलत्वात् तेनैवाक्षिप्तमवसेयम् । अतो निष्प्रयोजनत्वानभिमतत्वशङ्के सुतरामेव व्युदस्ते । सम्बन्धस्त्वभिधेयेन सह वाच्यवाचकभावलक्षणः शास्त्रस्यावश्यंभावीत्यनुक्तोऽप्यर्थाद् गम्यत इति सम्बन्धरहितत्वाशङ्कानुत्थानोपहतैवेति ।

पूर्वशास्त्रेणास्यागतार्थत्वप्रतिपादनम् ।

ननु प्रमाणनयतत्त्वस्यावस्थापनार्थमिदमायुष्मद्भिः शास्त्रमुपक्रम्यते । तदवस्थापनं च "प्रमाणनयैरधिगम" इत्यादिना प्रबन्धेन पूर्वाचार्यैरुमास्वातिवाचकमुख्यैः कृतमेव । अवस्थापितस्य चावस्थापनं पिष्टपेषणवन्निरुपयोगम् । अत्रोच्यते । चिरन्तनाचार्यैरवस्थापितमपि प्रमाणनयतत्त्वमतिगम्भीरत्वान्न दुर्विदग्धाकुलितचेतोवृत्तिरयं लोकः प्रतिपद्यते । तत्प्रतिपादनाय चायमुपक्रमः । अत एव व्यवस्थापनेत्यत्र विशेषद्योतको विशब्दः प्रयुक्तः । धात्वर्थमात्रवृत्तेरवशब्दस्य योगेऽपि हि ण्यन्तस्य तिष्ठतेः स्थापनमात्रमेवार्थः । न च सुश्लिष्टलक्ष्यलक्षणादिविभागप्रकल्पनलक्षणविशेषं विना विनेयानां तावन्मात्रेण प्रमाणनयतत्त्वव्यवस्थापनहेतुरनाकुलता कल्पत इति ॥

प्रमाणनयेत्यादिवाक्यस्य प्रामाण्यस्थापनम् ।

अत्राह कश्चित् । इदमादिवाक्यं प्रमाणमप्रमाणं वा । प्रमाणमित्याचक्ष्महे । कतमत्प्रमाणमिति चेत् । परार्थागमः परार्थानुमानं चेति ब्रूमः । माभूदनादेयवचनतास्माकमित्यागमानुकूलं हि शास्त्रकारास्तत्परिकीर्त्तयन्ति । तत्राप्तपरम्पराधिगतार्थप्रतिपादनपरत्वादिदमादिवाक्यमागममूलः परार्थागमः प्रतिपाद्यते । प्रामाण्यं पुनरस्याभ्यस्त-

---

१ तत्त्वा. सू. १–६. २ पिष्टस्य पेषण नास्ति मृतस्य मरणं नहि । कृतस्य करणं नास्ति नास्ति दीर्घस्य दीर्घता ॥ इत्युक्तेः । ३ पूर्वाचार्यैः । सिद्धसेनदिवाकरप्रभृतिभिः । ४ विनेयाः–शिष्याः । ५ 'अनाकुलताम्' इति भ. म. पुस्तकयोः पाठः

प्रवक्तृगुणान् प्रतिपाद्यान् प्रति स्वत एवाभ्यस्तकारणगुणान् प्रति प्रत्यक्षादिवत् । अनभ्यस्ततद्गुणांस्तु कांश्चित्तान् प्रति सुनिश्चितासम्भवद्बाधकत्वरूपादनुमानात् । अपरांस्तु प्रतिपन्नाप्तान्तरोपदेशादपि तथा स्वयं स्वार्थानुमानेन निश्चितमर्थं प्रकृत्य शास्त्रार्थिनां प्रतिपादयितुं शास्त्रकृतां युक्तमेतदिति स्वार्थानुमानमूलं परार्थानुमानमिदमामनन्ति । तात्पर्यं खल्वस्य प्रवर्तितव्यमत्र शास्त्रे प्रमाणनयतत्त्वप्रतिपित्सुभिस्तद्व्यवस्थापनार्थत्वादिति प्रतीयते । न चास्य हेतोरसिद्धिः । उत्तरग्रन्थेन प्रसाधयिष्यमाणत्वात् । अथ यथा ग्रन्थकर्तुः प्रवर्त्ततेऽनुमानं तथा तदर्थिनः श्रोतुरपि तत्प्रवर्त्तिष्यत इत्यलमेतदुपन्यासेनेति चेत् । अस्थाने स्पर्द्धाबन्धः । शास्त्रकर्त्ता ह्यन्तःकरणेन सकलमपि निर्वर्त्तयिष्यमाणशास्त्रार्थं यथाकथञ्चित्समधिगतं सम्यक्परामृशन् प्रेक्षावतः प्रवर्त्तयितुमादिवाक्यं प्रयुङ्क्त इति न किञ्चिदचतुरस्रम् । तदितरस्तु कथमिव प्रस्तुतशास्त्रार्थमवगच्छेदिति चिन्त्यम् । प्रवर्त्तनेन चेत् कथं न तर्हि परस्पराश्रयः । नहि प्रयोजनमजानानः प्रवर्त्तते । न चाप्रवृत्तः प्रयोजनं जानातीति । समस्तपरार्थानुमानमुद्रोपद्रवकारिणी चेयमाशङ्का । शक्यत एव हि वक्तुमेवं धूमानुमानेऽपि । यत्प्रतिपादकवत् प्रतिपाद्यस्यापि स्वत एवोत्पत्स्यते प्रकृतमनुमानमिति किमेतदुपन्यासेनेति । अथ भवेत् कश्चिद्विपर्ययसंशयानध्यवसायवशीकृतात्मा तं प्रति तत्प्रतीकारायोपयुज्यत एवैतत्प्रयोग इति चेत् । इतरत्रापि किं न तथा समर्थयसे ।

अथादिवाक्यकृतावेकान्तोऽनेकान्तो वेति अनेकान्त इत्याचक्ष्महे ।

आदिकरणवाक्येऽनेकान्तवादस्य स्थापनम् ।

तथाहि ये प्रेक्षापूर्वकारिणः सर्वथैवाप्रतिपन्नाप्ताः प्रतिपन्नप्रकृतमात्राप्ता वा भवेयुर्नामी प्रमाणप्रदर्शनमन्तरेण प्रवर्त्तयितुं शक्या इत्यमून् प्रति प्रयोक्तव्यमेव यथासम्भवमागमानुमानोभयस्वभावमादिवाक्यम् । तथा हि यः प्रेक्षापूर्वकारी कुतश्चिद्व्यामोहात् कञ्चनाप्तं प्रतिपेदे तं प्रत्यनु-

मानमिति । यश्च तं प्रकृतमेव प्रत्यपद्यत तं प्रति प्रवचनमनुमानं चेति नियमाद्विरचनीयमादिवाक्यम् । यस्तु प्रेक्षापूर्वकारी प्रतिपन्ना[1]ऽप्रतिनियताप्तस्तं प्रत्येतत्करणाकरणयोर्यदृच्छैव विराजते । शास्त्रकृतैवोपन्यस्ते हि तस्मिन्नमूदृशप्रयोजनपात्रं शास्त्रमेतदित्येवं रूपमाप्तान्तरोपदेशं प्रेक्षावान् नापेक्षतेऽपेक्षते चानुपन्यस्ते तम् इत्युभयथापि प्रेक्षावतः प्रवृत्तिरनिवृत्तैव । अथेतरथाऽप्यत्र पक्षे प्रेक्षावतः प्रवृत्तिसिद्धेरकरणैकान्त एव रमणीय इति चेत् । कः खलु विशेषोऽशेषशेमुषीशालिना सम्भावितः शास्त्रकृदाप्तोपज्ञा[2]दुपदेशात् तदितराप्तप्रणीतोपदेशे ग्रन्थलाघवमिति चेत् किमर्थमेतद्विशिष्यत इति प्रकाश्यम् । शिष्यस्य प्रवर्तमानस्य स्वल्पप्रयासार्थमिति चेत् । तर्हीतराप्तप्रणीतमुपदेशमनुसरतः किं न तावान् प्रयासः स्यात् । तदुभयव्यापिशिष्यप्रयाससाम्ये निर्निबन्धनः शास्त्रकृदादिवाक्योपदेशप्राप्तिबन्धः निर्बंधः किञ्च शास्त्रकृतैव कृतमेतत् सर्वथैवाप्रतिपन्नाप्तान् प्रतिपन्नप्रकृतमात्राप्तांश्चापि प्रेक्षावतः प्रवर्त्तयति । येऽपि चाप्रेक्षापूर्वकारिणोऽर्थसंशयात्कृष्यादौ प्रवर्त्तन्ते तेषामपीह शास्त्रे तस्मादेव प्रवर्त्तमानानामपास्य हठादप्रेक्षाराक्षसीं घटयन्ति प्रेक्षाप्रणयिनीमिति किं न पश्यसि विशेषलाभम् । तस्माद् अवस्थितमिदं यदत्र पक्षे यदृच्छैवेति । ये च प्रत्यक्ष[3]मेव प्रमाणमाचक्षते तान्प्रति न प्रयोक्तव्यमेवेति । तदयं संक्षेपः । यद्यादिवाक्यमुपकल्प्यते तदा कस्याचित्तस्मादेव प्रमाणादितरस्य पुनरर्थसंशयात् प्रवृत्तिः । यदा तु नोपकल्प्यते तदाप्तान्तरोपदेशरूपात् प्रमाणादर्थसंशयाद्वेति सर्वत्र सर्वस्यापि प्रवृत्तिसिद्धेरादिवाक्योपकल्पनेऽनेकान्तो व्यवतिष्ठते । सविस्तरशास्त्रेष्वादिवाक्यस्याभिधानमनभिधानमन्यत्रेत्येवमादिवाक्यानेकान्तं ये केचिदास्थिषत न तेऽनवद्यया विद्ययानन्दयन्ति सहृदयान् । आदिवाक्यमात्रोपन्यासे हि न समा[4]सस्य व्युदासं विस्तरस्य वाऽवतरणं गण-

१ 'प्रतिपन्नो' इति प. पुस्तके पाठः । २ 'उपज्ञोपक्रम तदाद्याचिख्यासायाम्' इति पा. सू. २-४-२१ । ३ 'प्रत्यक्षमेव' इति म. पुस्तके पाठः । ४ समासः संक्षेपः । व्युदासो निराकरणम् । आप्तमूलकादित्यर्थः ।

यन्ति मनीषिणः । संक्षिप्तेष्वपि केषुचिच्छास्त्रेषु तदुपन्यासस्य तदितरेष्वपि तदनुपन्यासस्य दर्शनात् ।

आदिवाक्ये कृते तस्मादर्थसंशयतोऽपि वा ॥
अकृते वृत्तिरन्यासादर्थसंशयतोऽपि वा ॥ ११ ॥
व्यासात् समासतो वापि शास्त्रे कर्तुः समीहिते ॥
तदेवमादिवाक्यस्यानेकान्तोऽसौ व्यवस्थितः ॥ १२ ॥

सौगतादीनामादिकरणवाक्यस्यासामञ्जस्यम् ।

ये त्वेकान्तवादिनः सौगतादयस्तेषां न कथञ्चिदप्यादिवाक्यं प्रकाशयितुमवकल्पते । तस्य प्रामाण्यमस्वीकुर्वतां समर्थयितुमसमर्थानां वा वैयर्थ्यात् ।

अत्राहुरेकान्तकृताभिमानाः परे प्रयोक्तव्यमवश्यमादौ ॥
शास्त्रस्य वाक्यं न विना ह्यनेन प्रेक्षावतां सिध्यति वृत्तिरत्र॥१३॥

तथाहि प्रयोजनप्रतिपत्तिनान्तरीयकत्वात् प्रेक्षावतां प्रवृत्तेरनभिहितप्रयोजनशास्त्रस्य तैः काकदन्तपरीक्षादिवदनादरणीयत्वमेव भवेदतः प्रयोजनप्रदर्शनेन तेषां प्रवर्त्तनाय शास्त्रस्यादौ वाक्यं प्रयोजनप्रकाशनपरमुपन्यसनीयमेव । अभ्यधायि च ।

" अनिर्दिष्टफलं सर्वं न प्रेक्षापूर्वकारिभिः ।
शास्त्रमाद्रियते तेन वाच्यमग्रे प्रयोजनम् ॥ १ ॥
शास्त्रस्य हि फले ज्ञाते तत्प्राप्त्याशावशीकृताः ।
प्रेक्षावन्त प्रवर्त्तन्ते तेन वाच्यं प्रयोजनम् ॥ २ ॥

इति अत्रोच्यते ।

तावदेव लभते प्रतिष्ठितं प्रोक्तमेतदखिलं कुतीर्थिकैः ॥
यावदेव न जिनेन्द्रसूनवो व्यञ्जयन्ति दृढयुक्तिडम्बरम् ॥ १४ ॥

तथाहि प्रेक्षापूर्वकारिणां प्रवर्त्तनाय किल शास्त्रादौ प्रयोजनप्रतिपादकं वाक्यमुपादीयते । ते च प्रमाणप्रदीपप्रद्योतितन्यायमार्गप्रसर्प्पणप्रवृत्तान्वर्थप्रेक्षापूर्वकारिव्यपदेशाः प्रमाणत एव प्रवर्त्तन्ते । न चादिवाक्यप्रभवं ज्ञानमध्यक्षं बौद्धैस्तावदभिधानीयम् अस्पष्टत्वात् । नापि

१ उपेन्द्रवज्रा । २ रथोद्धता ३ प्रत्यक्षम् ।

परार्थानुमानम् । साध्यसाधनयोर्व्याप्तिप्रतिपत्तौ तर्कप्रमाणस्य तैरनङ्गीकारात् । प्रत्यक्षस्यानुमानस्य वा तत्रासमर्थत्वेन साधयिष्यमाणत्वात् । अप्रमाणादेव विकल्पज्ञानात् तयोर्व्याप्तिप्रतिपत्तिरिति त्वसमीचीनम् । प्रत्यक्षानुमानप्रमाणत्वसमर्थनस्य वैयर्थ्यापत्तेरप्रमाणादेव प्रत्यक्षानुमेयार्थ प्रतिपत्तिप्रसङ्गात् । स्यान्मतम् । उपलब्धप्रयोजनवाक्यानां प्रयोजनार्थिनां वाक्योपदर्शितप्रयोजनविषयभावाभावपरामर्शपरः संशयः समाविर्भवति । आविर्भूतप्रयोजनविषयसंशयानां च कदाचित्तत्प्राप्त्या वशीकृतान्तरात्मनामर्थसंशयस्य प्रवर्त्तकत्वात् । संशयितसस्यसम्पत्त्यादिफला न वलादीनां कृष्यादाविव प्रवर्तमानानां श्रोतॄणां विमृश्यकारिणां विमृश्यकारित्वाविरोध इति तेषां संशयोत्पादनार्थः प्रयोजनवाक्योपन्यास इति । अत्रोच्यते । वाक्योपन्यासः शास्त्रप्रयोजनविषयसंशयोत्पिपादयिषया । संशयोऽपि च निश्चयविरुद्धोऽनुत्पन्ने च निश्चये तत्राप्रतिबद्धवृत्तिकतया वाक्योपन्यासात् प्रागप्यसौ प्रादुर्भवन् केन निवार्यते येन तदर्थं वाक्यमुपन्यस्येत ; स्यादेतत् अश्रुतप्रयोजनवाक्यानां प्रयोजनसामान्ये तत्सत्त्वेतराभ्यां संशयो जायते किमिदं चिकित्साशास्त्रवत् सप्रयोजनमुत काकदन्तपरीक्षादिवन्निष्प्रयोजनमिति। तस्माच्च संशयादनुपन्यस्तेऽपि प्रयोजनवाक्ये प्रयोजनसामान्यार्थिनः प्रवर्त्तन्ताम्। प्रयोजनविशेषे तु कथमश्रुतप्रयोजनवाक्यानां संशयोत्पत्तिः प्रायेण च प्रयोजनविशेषविषयस्यैव संशयस्य प्रवृत्तिकारणत्वात् तदुत्पादनाय वाक्यं प्रयोक्तव्यमेवेति । तदसाम्प्रतम्। कुतश्चिच्छास्त्रादनुभूतपूर्वप्रयोजनविशेषं श्रोतारं प्रति तावद्वाक्यस्यानुपयोगात् । स हि किञ्चिच्छास्त्रमुपलभ्य प्रागनुभूतप्रयोजनविशेषेण शास्त्रेणास्य वर्णपदवाक्यकृतं साधर्म्यमवधार्य किमिदमपि सफलं निष्फलं वा । सफलमपि किमनेनैवान्येन वा फलेन फलवादिति संदिहानो विनाऽपि प्रयोजनवाक्येन प्रवर्त्तत एव । अननुभूतपूर्वप्रयोजनविशेषोऽपि श्रोता शास्त्रमिदमनेन प्रयोजनेन तद्वदित्युपन्यस्तेऽपि वाक्ये प्रयोजनविशेषमे-

वाजानानः पृच्छति शास्त्रमिदमनेन प्रयोजनेन तद्वादित्येन किमुक्तं भवतीति न पुनस्तदतो भविष्यत्युत नेति संदिग्धे । प्रागनधिगततत्स्वरूपस्य तद्भावेतराभ्यां संशयायोगात् । अप्रतिपत्तिस्तु स्यात् ततो वाक्यात् न जानेऽहं किमनेनोक्तमिति । अनुभूतविस्मृतप्रयोजनविशेषेऽपि च कस्यचिच्छास्त्रस्य परिसमाप्तितः परिज्ञातप्रयोजनविशेषः समुत्पन्नतद्विषयस्मृतिनिबन्धकप्रत्ययः सन् श्रोता तदानेन वाक्येन शास्त्रतः समुपजातप्रयोजनविशेषविषयस्मृतिकः क्रियते यदि तदन्तरेणापि कुतश्चिदतिसमाहितान्तःकरणादिप्रत्ययकलापात् तदुत्पत्तिर्न स्यात् । तदेव वा शास्त्रं प्रागनुभूतप्रयोजनविशेषशास्त्रसादृश्यादुपलभ्यमानं स्मृतिं नाविर्भावयेदित्यलं वाक्यकल्पनया । नहि वाक्यतोऽपि विस्मृतप्रयोजनविशेषस्य नियमेन स्मृतिर्भवति । ततोऽपि कदाचित् तस्या उत्पत्तिरिति चेत् । तर्हि कदाचिच्छास्त्रमात्रादपि तदुत्पत्तिर्दृश्यत एवेति कः शास्त्राद्वाक्यस्यातिशयः । नियमेन तु नोभाभ्यामप्यनुस्मरणं भवति । अन्येऽपि वा तद्धेतवस्तत्रोपन्यस्येरन्निति त्यज्यतां तदास्थानिर्बन्धः । सामान्यविशेषयोश्च दर्शनादर्शनाभ्यां विशेषस्मरणसहकारिभ्यां संशयः समुपजायते । न च वाक्यं प्रयोजनविशेषस्य भावाभावयोः सामान्यम् । ननु विवक्षापरतन्त्रत्वेन स्वार्थतथाभावातथाभावयोरपि प्रयोगसम्भवात् सामान्यमेव वाक्यमिति चेत् । तर्हि शास्त्रमपि शास्त्रान्तरसादृश्यात् प्रयोजननिर्वृत्त्युपायत्वानुपायत्वयोःसामान्यमन्यतरनिश्चयनिमित्ताभावात् तत एव संशयतः प्रवर्त्ततामिति शास्त्रेण कृतकृत्यत्वादकिंचित्करं वाक्यम् । नापि संशयात् प्रवर्त्तमानः प्रेक्षापूर्वकारी भवितुमर्हति प्रमाणपुरःसरप्रवृत्तिप्रसादप्राप्यत्वात् तद्व्यपदेशस्येति । स्यान्मतं माभूत् संशयोत्पादनेनादिवाक्यस्य प्रवृत्तौ सामर्थ्यं किन्तु नारब्धव्यमिदं शास्त्रं प्रयोजनरहितत्वात् काकदन्तपरीक्षादिवदिति शास्त्रप्रारम्भप्रतिषेधाय प्रयुज्यमानाया व्यापकानुपलब्धेरसिद्धतोद्भावनार्थं तत्प्रयोगोऽवकल्प्यत

---

१ 'संशयान.' इति प. पुस्तके पाठः ।

एवेति । तदपि व्यामूढभाषितम् । वाक्यस्य प्रमाणत्वेनानवस्थिततया प्रयोजनविशेषसद्भावप्रकाशनसामर्थ्यविरहतस्तदसिद्धिमुद्भावयितुमशक्तत्वात् । नापि सप्रयोजनत्वेतरयोःपरस्परपरिहारास्थितयोः कुतश्चित्प्रमाणादेकभावाप्रतीतावितराभावप्रतिपत्तिः । येन वाक्यमात्रस्योपक्षेपेण परकीयाया व्यापकानुपलब्धेरसिद्धिः स्यात् । नापि कुतश्चित्प्रयोजनविशेषं स्वयं प्रतिपन्नवता परस्य तत्प्रकाशनोपायमनुपदर्शयता शास्त्रारम्भनिषेधकस्य हेतोरसिद्धिरुद्भावयितुं शक्यते । वाक्यस्याप्रमाणस्य हेतुप्रतिपक्षभूतार्थप्रत्युपस्थापनासमर्थस्योपक्षेपमात्रेणासिद्धेरयोगात् । नापि निष्प्रमाणिका तत्प्रतिपक्षप्रतिपत्तिः । अतिप्रसङ्गात् । नाप्यन्तःकरणसमाधानमात्रवशवर्त्तिविकल्पोपरचितस्य प्रयोजनविशेषस्य परमार्थतोऽसतोऽनेन वाक्येनोपदर्शनेऽपि तदसिद्धतोद्भावनं न्याय्यम् । परिकल्पितव्यापकोपलम्भलक्षणसाधनस्य स्वप्रत्यनीकतयाविधव्यापकानुपलम्भव्यापारविमर्दानुपपत्तेः । उपपत्तौ वा कथमर्थादर्थगतिरिति सन्धा[२] वन्ध्यास्तनन्धयपराक्रमवर्णनावन्न वन्ध्या भवेत् । कथमेतत् यद्यपीदं वाक्यमप्रमाणत्वाद्विपरीतपदार्थोपस्थापनामुखेनासिद्धतां नोद्भावयति । तथापि शास्त्रस्य निष्प्रयोजनत्वं सन्देहदोलामधिरोहयत्येव । सन्दिग्धनियोजनत्वस्य च शास्त्रस्यैकान्तेन निश्चितं प्रयोजनाभावं प्रेक्षावदारम्भप्रतिषेधहेतुं प्रयुंजानोऽनेन वाक्येन प्रतिचिक्षिप्सितो[३] न पुनः प्रयोजनविशेषविषयनिश्चय एवोत्पिपादयिषितः । नहि प्रतिपक्षाक्षेपेणैव साधनधर्माणामसिद्धिरपि तु स्वग्राहिविज्ञानविकलतया धर्मिणि सन्दिग्धत्वमप्यसिद्धत्वमेव । तस्मात् सन्दिग्धासिद्धतोद्भावनाय वाक्यप्रयोग इति । तदपि न साधिमानमाधत्ते । यथाहि सप्रयोजनत्वे सन्देहोत्पादने वाक्यस्यानुपयोगित्वं शास्त्रमात्रादपि भावात्, तथा निष्प्रयोजनत्वेऽपि । अथायमाशयः । समुपन्यस्ते परेण व्यापकानुपलम्भे प्रयोजनवाक्येनासिद्धतां प्रतिपाद्य कथमसिद्धिः साधनस्येति प्रत्यवतिष्ठमानं परं शास्त्र-

---

१ 'विरहितस्य' इति प. पुस्तके पाठः। २ सन्धा–प्रतिज्ञा। ३ खण्डयितुमिष्टः।

परिसमाप्तितः प्रयोजनमनुगमयिष्यन् शास्त्रं श्रावयति । ततः समधिगते तेन प्रयोजने तदुपक्षिप्तस्य साधनस्यासिद्धिरिति । नायमप्याशयः सार्धीयान् । नहि शास्त्रश्रवणतः प्रयोजने समधिगन्तव्ये शास्त्रादौ तद्वाक्यमुपादीयमानं कञ्चनार्थं पुष्णाति । तत्रावगन्तव्यप्रयोजनस्यानुपयोगादिति यत्किञ्चिदेतत् । नन्वसिद्धतोद्भावनप्रकारोऽनेन न्यायेन प्रलयमेव गत इति चेत् । मैवम् । न खलु वयमसिद्धतोद्भावनपरं न्यायमेव प्रतिक्षिपामोऽपि तु प्रमाणशक्तिसम्पत्सम्पर्कविरहात् वाङ्मात्रमेवेदमिति वदामः । नहि न्यायानुसारितामात्मसात् कुर्वन् कश्चिदनुपप्लवमानसो न्यायमेव प्रतिक्षिपति । वाङ्मात्रं तु विवक्षितार्थप्रकाशनानुपयोगितया प्रतिक्षिपेदपि । तन्नेदमसिद्धतोद्भावनार्थमपि प्रयोजनवाक्यं शास्त्रैरादावुपन्यसनीयम् ।

आगमप्रामाण्यविचारः ।

आगमप्रमाणरूपं प्रेक्षावतां प्रवृत्तये तदवश्यं विधेयमित्यन्ये । तदपि न्यायशून्यम् । यतोऽयमागमः पौरुषेयो वाऽपौरुषेयो वा । प्रथमकल्पनायां कुतोऽस्य प्रामाण्यनिश्चय इत्यभिधेयम् । स्वत एवेति चेत् । मैवम् । प्रामाण्यनिश्चयैकान्तस्य प्रामाण्यगोचरसंशयानुत्पत्तिप्रसङ्गादिदोषोपहतत्वेन प्रतिक्षेप्स्यमानत्वात् । परत एवेत्यप्यसत्यम् । परतः प्रामाण्यनिश्चयैकान्तस्यानवस्थादिदोषदूषितत्वेन निराकरिष्यमाणत्वात् । अपौरुषेयत्वमप्यस्य पुरस्तात् पराकरिष्यमाणत्वेन भणितुमननुगुणम् । केचिदाहुः 'शास्त्रस्य प्रस्तावकमुपक्रमवाक्यं तदन्तरेण तत्प्रारम्भानुपपत्तेः' इति । तदप्यसुन्दरम् । अनवस्थानुषङ्गात् । यथैव हि प्रस्तावकं वाक्यमन्तरेण न शास्त्रमवतरति तथा तदपि वाक्यान्तरादिना नेति । प्रस्तावकत्वं चाभिसन्धाय प्रयोजनवाक्येऽवश्योपन्यसितव्ये शास्त्रस्य गुणनिमित्तपरिमाणादयः कथं नोपन्यस्येरन् । ततो व्याख्यातृवशादवतरन् ग्रन्थ

१ 'नोपन्यसेरन्' इति प. भ. पुस्तकयोः पाठः ।

एव स्वात्मनः प्रस्तावकोऽस्तु किं प्रयोजनवाक्योपन्यासप्रयासेन । एतेन शास्त्रप्रतिज्ञाख्यापनफलः संक्षेपतः शास्त्रशरीरख्यापन[1]फलश्च तदादौ वाक्योपन्यास इत्येवमादयोऽसत्कल्पना न्यायोपदर्शनाननुकूलतया निरुपयोगित्वेन निर्वर्णितोत्तराः प्रतिपत्तव्याः । वाङ्मात्रेण[2] प्रकृतार्थनिश्चयायोगात् । नहि तत्र शब्दगडुमात्रव्यतिरेकेण कश्चन न्यायो विपश्चितामविपरीतप्रतिपत्तौ प्रतीयते । तस्मात् [3]प्रेक्षावतां प्रतिपत्तिनिमित्तं वाङ्मात्रव्यतिरेकेण न्याय एव दर्शनीयो येन निरारेकं[4] प्रवर्त्तेरन् । एवं च

शास्त्रस्येष्टफलप्रतीतिकृतये कर्त्तव्यमादौ वचो ।
　नो वेति स्थितमत्र जैनसमये सन्न्यायसामर्थ्यतः ॥
एकान्तस्तु न सिद्धिपद्धतिमितस्तत्साधनार्थं ततो ।
　व्यर्थं दर्शनपक्षपाततरलाः क्लिश्यन्ति तीर्थ्याः परे ॥१५॥१॥

प्रमाणनयतत्त्वव्यवस्थापनार्थमिति प्रत्यपादि । तत्र प्रमाणं तावल्लक्षयितुमाह—

## स्वपरव्यवसायिज्ञानं प्रमाणमिति ॥ २ ॥

प्रमाणमिति लक्ष्यम् । स्वपरव्यवसायिज्ञानमिति लक्षणम् । लक्षणं च परस्परं व्यतिरेके सति विजातीयेभ्यो व्यवच्छिन्नं लक्ष्यं[5]तेऽवधार्यते येन तदुच्यते असाधारणो धर्म इति यावत् । यथा तपनीयतदाभासयोर्वर्णविशेषः । तत्र प्रतिपाद्यानुसारेण यथायोगं लक्ष्यं वा लक्षणं वा द्वयमपि वा विधीयते ।

परप्रतिपत्तये हि वाक्यं कीर्त्तयन्ति कृतिनः । परे चापरिमितप्रकारा दुर्वारप्रसरो ह्यसौ मोहमहाराजः प्रतिविषयमनेकाभिर्भङ्गीभिरुज्जृम्भते ।

---

१ 'व्याख्यापन' इति प० पुस्तके पाठः । २ नहि प्रतिज्ञामात्रेण कार्यसिद्धिरित्युक्तेः । ३ ' न्यायपथ ' इति भ० पुस्तके पाठः । ४ निःशंकम् । ५ ' लक्ष्य ' इत्यधिकं प० पुस्तके ।

ततश्च कश्चित् क्वचित् संशेते नाध्यवस्यति विप्रतिपद्यते चेति। तदनुसारेण लक्षणवाक्ये लक्षणादीनां विधिरविरुद्धोऽभिधीयत इति।

धर्मोत्तरमतस्य सविस्तरं खण्डनम्।

अत्राह धर्मोत्तरः। 'लक्ष्यलक्षणभावविधानवाक्ये लक्ष्यमनूद्य लक्षणमेव विधीयते। लक्ष्यं हि प्रसिद्धं भवति ततस्तदनुवाद्यम्। लक्षणं पुनरप्रसिद्धमिति तद्विधेयम्। अज्ञातज्ञापनं विधिरित्यभिधानात्। सिद्धे तु लक्ष्यलक्षणभावे लक्षणमनूद्य लक्ष्यमेव विधीयते' इति। तदेतदबन्धुरम्। लक्ष्यवल्लक्षणस्यापि प्रसिद्धिर्नहि न सिद्धेति कुतस्तस्याप्यज्ञातत्वनिबन्धनो विधिरप्रतिबद्धः सिद्ध्येत्। विवक्षितलक्ष्यास्पदत्वेनाज्ञानाल्लक्षणस्य तत्त्वेन विधिरप्रतिबद्धः सिद्ध एवेति चेत् तर्हि लक्ष्यस्यापि विवक्षितलक्षणलक्षितत्वेनाज्ञानात् तत्त्वेन किं न विधिः साधीयान्। अथ सविशेषणे[1] हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः[2] इति न्यायात् विवक्षितलक्षणलक्षितत्वेन लक्ष्यस्य विधिरित्यभिधीयमाने लक्षणस्यैवासौ पर्यवस्यति। वह्निमत्त्वेन पर्वतः साध्य इति अभिधीयमाने वह्निवत्। हंत तर्हि विवक्षितलक्ष्यास्पदत्वेन लक्षणस्य विधिरित्यभिधीयमाने लक्ष्यस्यैवासौ पर्यवस्यतीत्यपि किन्न पश्यसि। न चायं सार्वत्रिको न्यायः। रक्तं पटं वयेत्यादौ कदाचिद्विशेषणविशेष्ययोरुभयोरपि विधेयत्वप्रसिद्धेः। अदग्धदहनन्यायेन[3] यावदप्राप्तं तावद्विधीयत इति हि तद्विदः। अथ यथा[4] कांश्चित्प्रति संशयानध्यवसायनिरासाय तत्परान् तीर्थान्तरीयान् प्रति विप्रतिपत्तिपर्यायविपर्ययप्रतिक्षेपायापि तद्विलक्षणं कक्षीकरणीयम्। न चैतेषां

---

१ 'सविशेषणौ' इति प. पुस्तके पाठः। २ सविशेषणे हि विधिनिषेधौ विशेष्ये बाधे सति विशेषणमुपसङ्क्रामतः। इति न्यायस्वरूपम्। तदर्थश्च—यत्र सविशेषणे विशेष्ये विशेष्यमात्रे विधेर्निषेधस्य वा बाधस्तत्र तौ विधिनिषेधौ विशेषणमुपसङ्क्रामतः। ३ अग्निर्यावददग्धं तावद्दहति। ४ 'तथा' इति प. पुस्तके पाठः।

स्वपरव्यवसायिज्ञानमद्यापि प्रसिद्धम् । न चाप्रसिद्धस्यानुवादो निरपवादः । तदेवमनुवादः सर्वनाम्ना यच्छब्देन स्वपरव्यवसायिज्ञानस्य विशेषणमेतान् प्रत्यप्रातीतिकमेवेति चेत् । तर्हि समस्तप्रमाणप्रमेयापलापिनः शून्यतावादिनः प्रत्यक्षानुमाने । प्रत्यक्षैकपक्षपातिनो नास्तिकस्य चाऽनुमानं न प्रतीतमेवेत्येतौ प्रति लक्ष्ययोः प्रत्यक्षानुमानयोरपि कुतोऽनुवादसर्वनाम्ना विशेषणं रमणीयमिति तल्लक्षणसूत्रेप्ववदूषणं स्यात् । अथ विशेषशब्दार्थमात्रतः प्रत्यक्षादेस्तयोरपि प्रतीतिसम्भवादनुवादसर्वनाम्ना तस्य विशेषणं रमणीयमिति चेत् । इतरत्रापि तथाप्रतीतिमास्थाय किं न तत्समर्थयसे । अथ तौ प्रति प्रथमं लक्ष्यं प्रसाध्य तस्य यच्छब्देन विशेषणमिति चेत्—

साधो सौगत भूभर्तुर्द्धर्मकीर्त्तेर्निकेतने ।
व्यवस्था कुरुषे नूनमस्थापितमहत्तमः ॥ १६ ॥

स हि महात्मा **विनिश्चये**[1] '**प्रत्यक्षमेकम्**' **न्यायबिन्दौ**[2] तु '**प्रत्यक्षानुमाने द्वे**' अप्यप्रसाध्यैव तल्लक्षणानि प्रणयति स्म । किञ्च शब्दानित्यत्वसिद्धये कृतकत्वमसिद्धमपि सर्वमुपन्यस्य पश्चात् तत्सिद्धिमभिदधानोऽपि न लक्षणस्य तामनुमन्यसे इति स्वाभिमानमात्रम् । अपि च प्रत्यक्षलक्षणव्याख्यालक्षणे '**लक्ष्यलक्षणभावविधानवाक्ये**' इत्यादिना लक्षणस्यैव विधिमभिधत्से विधेरेवापराधान्न बुद्धेः । यतो **न्यायविनिश्चयटीकायां** स्वार्थानुमानस्य लक्षणे, '**तत्कथं त्रिरूपलिङ्गग्राहिण एव दर्शनस्य नानुमानत्वप्रसङ्ग**' इति पर्यनुयुञ्जान एतदेव सामर्थ्यप्राप्तं दर्शयति यदनुमेयेऽर्थे '**ज्ञानं तत्स्वार्थमिति**' इतीत्यनुमन्यमानश्चानुमापयसि स्वयमेव लक्ष्यस्यापि विधिम् । स्पष्टमेवाभिदधासि च **न्यायबिन्दुवृत्तौ**[3] एतस्यैव लक्षणे '**त्रिरूपाच्च लिङ्गाद्यदनुमेयालम्बनं ज्ञानं तत्स्वार्थमनुमानम्**' इति, **विनिश्चयटी-**

---

१ धर्मकीर्तिकृतः प्रमाणविनिश्चयनामको ग्रन्थोऽयम् । अस्य धर्मोत्तराचार्येण व्याख्या कृता । २ न्या. बि. परि. १ सू. ३. ३ न्या. बिं. परि. २ सू. ३.

कायामेव च परार्थानुमानलक्षणे ‘ **त्रिरूपस्य लिङ्गस्य यदाख्यानं तत्परार्थमनुमानम्**’ इति च व्याचक्षाण इत्यक्षुण्णं ते वैचक्षण्यमिति । किञ्च असम्भवाव्याप्त्यतिव्याप्तयस्त्रयो दोषा निषेधनीया लक्षणे विचक्षणैः । न च प्रत्यक्षशब्दावाच्ये सर्वस्मिन्नपि वस्तुनि निर्विकल्पकत्वाभ्रान्तत्वे सम्भवत इत्यसम्भवातिव्याप्त्योरसम्भवेऽप्यव्याप्तिः प्राप्तैव प्रत्यक्षलक्षणस्य । **तथागत**मेकमन्तरेणापरेषां सविकल्पकज्ञानेऽपि प्रत्यक्षशब्दवाच्यत्वस्य प्रसिद्धेः । न च तत्र सविकल्पकत्वं पराकृत्य निर्विकल्पकत्वकल्पना भवानप्यातिष्ठते । अथ यत्तद्भवतामस्माकं चेत्यादेस्तत्र तत्राभिधानाद्यत्परेषामस्माकं च प्रत्यक्षशब्दवाच्यत्वेन प्रसिद्धं स्यात् तस्यैव कल्पनापोढत्वादिविधिरभिधीयते । न चास्माकं सविकल्पकज्ञानं तच्छब्दवाच्यत्वेन प्रसिद्धमित्यव्याप्तेरप्राप्तिरेवेति चेत् । तर्हि परेषां **शब्दब्रह्माद्वैतवादिनां** च न किञ्चिन्निर्विकल्पकं ज्ञानं प्रत्यक्षशब्दवाच्यत्वेन प्रसिद्धमिति तत्राप्युभयप्रसिद्ध्यसिद्धेर्न तद्विधिरविरुद्धः स्यात् । अथ केषांचित् परेषामपि निर्विकल्पकमपि ज्ञानं तच्छब्दवाच्यत्वेन प्रसिद्धमेवेति चेत् तर्हि कस्यचित्परस्यापि स्वपरव्यवसाय्यपि ज्ञानं किं न प्रसिद्धमवबुध्यसे । अपि च भिक्षो विप्रतिपन्नान् प्रति लक्षणं प्रणीयते इत्याचक्षाणोऽप्यविप्रतिपन्नेभ्य एव तदुपदिशसि सिद्धसाध्यतां च नावधारयसीति किमभिदध्महे । ननु सम्यग्ज्ञानस्य ज्ञापयितुमुपक्रान्तत्वात् तद्भेद एवेदं प्रत्यक्षं ततश्च प्रत्यक्षमिति यत्प्रसिद्धं सम्यग्ज्ञानं तस्यैव कल्पनापोढत्वादिविधिः । नच परप्रतीतं सविकल्पकं प्रत्यक्षं सम्यग्ज्ञानं विसंवादकत्वादिति चेत् । तर्हि कुकारुकस्येवैकं[1] सन्धित्सतोऽन्यत्प्रच्यवते । भवति ह्येवमभ्रान्तपदस्यापार्थकत्वं सम्यग्ज्ञानस्य भ्रान्तत्वायोगात् । अथ समर्थित एवाभ्रान्तपदस्यार्थो विप्रतिपत्तिप्रतिक्षेपो नाम । गच्छद्वृक्षादिदर्शनस्य हि

---

१ ‘ तक्षा च तन्तुवायश्च नापितो रजकस्तथा । पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः ’ ॥ कुत्सिताः कारवः कुकारवः ।

ग्राह्ये विपर्यस्तस्यापि कल्पनापोढत्वं पश्यन्नवश्यमध्यवस्येत् प्रत्यक्षत्वं कश्चिदिति तत्प्रतिक्षेपायाविपर्यस्तार्थप्रतिपादकमभ्रान्तपदमुपादेयमिति चेत् । हन्त बौद्धोऽपि नट इव केवलवाक्प्रपञ्चेन वञ्चयसि । गच्छद्वृक्षादिवेदनं हि तत्र तत्र मिथ्याज्ञानं मिथ्याज्ञानमिति सर्वत्रांशे विसंवादकमिति प्रपञ्चतः प्रतिपाद्येदानीं ग्राह्ये विपर्यस्तमिति पर्यायान्तरं परिकल्प्याभ्रान्तपदेन व्यपोहसि नतु सम्यग्ज्ञानपदेनेति व्यक्तं ते वाग्व्यंसकत्वम्[1] । अपि च भगवद्भवनसूत्रणासूत्रधारो धर्मकीर्तिरपि न्यायविनिश्चयस्याद्यद्वितीयतृतीयपरिच्छेदेषु यथाक्रमं 'प्रत्यक्षं कल्पना पोढमभ्रान्तम्' इति । ' तत्र स्वार्थं त्रिरूपाल्लिङ्गतोऽर्थदृक्' इति । 'परार्थमनुमानं तु स्वदृष्टार्थप्रकाशनम्' इति त्रीणि लक्षणानि ' तिमिराशुभ्रमणनौयानसङ्क्षोभाद्यनाहितविभ्रममविकल्पकं ज्ञानं प्रत्यक्षम् ' इति । 'त्रिलक्षणाल्लिङ्गाद्यदनुमेयेऽर्थे ज्ञानं तत्स्वार्थमनुमानम् ' इति । ' यथैव हि स्वयं त्रिरूपाल्लिङ्गतो लिङ्गिनि ज्ञानमुत्पन्नं तथैव परत्र लिङ्गिज्ञानोत्पिपादयिषया त्रिरूपलिङ्गाख्यानं परार्थमनुमानम्' इति च व्याचक्षाणो लक्ष्यस्यैव विधिमन्वकीर्त्तयत्[2] । तथा ' लक्ष्यलक्षणभावाविधानवाक्ये ' इत्युपक्रम्य 'लक्षणमेव विधीयते' इत्यभिदधानः कथं न स्ववचनविरोधमवबुध्यसे । तथाहि कार्यकारणभाववदुभयाधारः सम्बन्धो लक्ष्यलक्षणभावस्तावत्तस्य च विधानमित्युक्ते लक्ष्यस्य लक्षणस्य च विधिः पर्यवस्यति । तथा च लक्षणमेव विधीयत इति दुर्निरोधो विरोधः । अथ परे परिकीर्त्तयन्ति लक्ष्यलक्षणभावाविधानमिति तदनुवादादयमदोष एवेति ब्रूषे साधो ' सिद्धे तु लक्ष्यलक्षणभावे ' इत्यत्र कस्ते कुशलोपायः । पूर्ववाक्यव्यवस्था-

---

१ व्यंसकः- धूर्तः । २ अधुना धर्मकीर्तिकृतन्यायबिन्दौ एवमुपलभ्यते सूत्रव्याख्यानम् । तथा च-'तत्र कल्पनापोढमभ्रान्त प्रत्यक्षम् ( न्या. बिं. परि. १ सू. ४ ), तत्र स्वार्थं त्रिरूपाल्लिङ्गाद्यदनुमेये ज्ञान तदनुमानम् ( न्या. बिं. परि २ सू. ३ ) त्रिरूपलिङ्गाख्यानं परार्थानुमानम् (न्या. बिं. परि. ३ सू. १) अत्र त्रिष्वपि लिङ्गेषु पाठभेदः ।

पितार्थानुवादप्रतिपादनपरं हीदं वाक्यखण्डलकं न च पूर्ववाक्येन लक्ष्यलक्षणभावो व्यवस्थाप्यते त्वदास्थयेत्यसम्बद्धमिदं स्यात् । सम्बद्धत्वे वा पूर्वत्र तदुभयविधिः सिध्येत् । तथा च न तस्मिन् स्ववाग्विरोधः प्रतिरोधमधिवसति । लक्ष्यस्य लक्षणं तस्य भाव इति तु व्याख्यानम् । प्रसिद्धार्थहान्यप्रसिद्धार्थपरिकल्पनलक्ष्यपदानर्थकत्वदोषकदर्थितमिति सहृदयोद्वेजकम् । अथात्र प्रसिद्धस्यार्थस्यासम्भवात् तद्धानिस्तद्विरुद्धपरिकल्पनं च गङ्गायां घोषः प्रतिवसतीत्यादाविवाविरुद्धमेवेति चेत् । मैवम् । लक्ष्यलक्षणयोरुभयोर्भावस्तदत्र प्रसिद्धोऽर्थस्तस्य च सम्भवः समर्थितः समर्थयिष्यते चेति ।

बलदेवबलं स्वीयं दर्शयन्न निदर्शनम् ।
वृद्धधर्मोत्तरस्यैव भावमत्र न्यरूपयत् ॥ १७ ॥

इहान्यो व्युत्पत्तिकालोऽन्यश्च व्यवहारकाल. । तत्र व्यवहारकाले लक्षणस्य लक्ष्यसिद्धये व्यापारणेति भवतु तदा यत्पदपरामर्शनीयता व्युत्पन्नस्य सतः । यदा तु व्युत्पत्तिसमयस्तदा लक्षणमेव ज्ञाप्यमस्येदं लक्षणमिति यदेव च ज्ञाप्यं तदेवानूद्यते इति विरुद्धमेतत् । ज्ञाप्यं विधेयत्वादविज्ञातं सत्कथमनूद्यते । अत एवास्य लक्ष्यवत् भूतविभक्त्या निर्देशस्तदा न युज्यते । यद्यपि हि कदाचित् क्रियेत । यथा शिखया परिव्राजकः कमण्डलुना छात्र इति । तत्रापि फलमुखेनैव लक्षणविधेराक्षेपो न तु लक्षणविधिरेव । तेन वाक्यान्तरार्थ एवोपप्लवते परिव्राजकस्य शिखा लिङ्गं छात्रस्य कमण्डलुरिति । अतस्तेन तस्य प्रतीतिसिद्धिरिति । तस्माल्लक्षणविधानावसरे तत्पदपरामर्श एवास्योचितः । यत्तूच्यते कथमप्रसिद्धस्य लक्षणत्वं भवति प्रसिद्धं वा कथं नानूद्येतेति सेयमन्याऽप्रसिद्धिर्या लक्षणत्वविधानावसर उपयुज्यते । अन्या च प्रसिद्धिर्या लक्ष्यावबोधनाय । शब्दार्थमात्रेण हि ज्ञातं सल्लक्षणत्वेन विधातुं शक्यम् । अत्यन्ताप्रसिद्धस्य धर्मस्यालक्षणत्वात् नतु तया प्रसिद्धया

१ 'मनूद्येत' इति प० पुस्तके पाठः ।

विधेयतासामर्थ्यायातं तत्पदपरामर्शयोग्यत्वमस्य निवर्त्तते। विहितस्य तु या लक्ष्यावबोधनाय व्यापारणा सान्याप्रसिद्धिर्यासौ लक्षणव्युत्पत्तिवाक्याल्लक्षणत्वेनावगतौ सत्यां तदनुसन्धानरूपा तत्रास्य भवत्वनूद्यमानता। स ह्यस्य व्यवहारकाल इत्युक्तमेवैतत्। यः कुण्डली स देवदत्त इत्येवमादावपि यदा कुण्डलित्वं विधेयतया प्रक्रम्यते तदा यस्तत्र देवदत्तस्तस्य कुण्डलित्वं लक्षणम्। योऽग्निस्तस्य धूमो लक्षणम्। अतो यः कुण्डली यत्र वा धूमो भवता दृश्यते तत्र स देवदत्तस्तत्र वा वह्निरिति भवता प्रतिपत्तव्यमित्ययमेव न्यायः। एवं यः परिव्राजकस्तस्य शिखा लिङ्गमित्ययं व्युत्पत्तिकालः। अत्र च परिव्राजकस्यैवानुवादः। व्यवहारकाले तु विपर्ययः। यतोऽस्य शिखा लिङ्गमतो यः शिखी स परिव्राजकस्त्वया व्यवहर्त्तव्य इति। ततो यद्यप्येकधैवोच्यते तथाप्युक्तिसङ्क्षेपमात्रमेतत्। व्युत्पत्तिव्यवहारकालापेक्षया तु विध्यनुवादविभागोऽत्र द्रष्टव्य इति।

वृद्धसेवाप्रसिद्धोऽपि ब्रुवन्नेवं विशङ्कितः॥
बालवत्स्यादुपालभ्यस्त्रैविद्यविदुषामयम्॥ १८॥

तथाहि सोयं वृद्धधर्मोत्तरानुसार्य्यप्यलीकवाचालतया तुल्यस्वरूपयोरपि व्युत्पत्तिव्यवहारकालयोरतुल्यतामुपकल्पयन् बाल इवैकामप्यङ्गुलिं वेगवत्तया चलयन् द्वयीकृत्य दर्शयतीत्येवमुपालभ्यते त्रैविद्यकोविदैः। व्युत्पत्तिस्वरूपापरिहारेण हि व्यवहारोऽपि सम्पद्यते। न खलु नालिकेरद्वीपादायातः पुमान् वह्निमानयानय नीरं क्षीरं चेत्याद्युत्तमवृद्धनियोगात्तत्र तत्र प्रवर्त्तमानं कञ्चनापि मध्यमवृद्धं पुमांसं पश्यंस्तत्तत्पदावापोद्वापं च परिभावयन्नयं वह्निरयमस्य वाचक इत्येवं वह्नेः स्वरूपे प्रतिनियतवाचकवाच्यत्वे च व्युत्पत्तिं प्रतिपद्य तत्स्वरूपपरिहारेण व्यवहारमवतारयत्यपि। तर्हि लक्षणसिद्धये लक्ष्यस्यापि

१ 'तत्र' इति नास्ति प. पुस्तके। २ 'सपश्य' इति प. पुस्तके पाठः।

व्यापारणायाः प्रसिद्धेः । यथा हि मोहमहापिशाचपारवश्यात् स्वपरव्यवसायिज्ञानस्य प्रमाणत्वे विपर्ययसंशयानध्यवसायाः कस्यचित् प्रादुःष्यन्तीति तं प्रति तत्प्रतिक्षेपाय विवादास्पदं ज्ञानं मानं स्वपरव्यवसायित्वादित्येवमनुमानमारभ्यते । तथा तत एव प्रमाणस्य स्वपरव्यवसायिज्ञानत्वे कस्यचित्ते समुत्पद्यन्त इति । तदपनोदाय विवादाधिकरणं प्रमाणं स्वपरव्यवसायिज्ञानं प्रमाणत्वादित्येवमपि तदवश्यमुपदेश्यम् । तथा हि ताथागताः केचन कलशादिप्रत्यक्षसंवेदनं प्रमाणतया प्रतिपद्यन्ते न च स्वपरव्यवसायितया । तन्मते प्रत्यक्षस्य व्यवसायशून्यत्वात् परस्य चाप्रामाणिकत्वेनापारमार्थिकत्वात् । ततश्चैते तास्मिन् ज्ञाने स्वैकज्ञापकतया निर्व्यवसायतया च प्रत्यवस्थिताः सन्तः प्रतिपादितानुमानेन स्वपररूपोभयार्थज्ञापकत्वं कथञ्चिद्व्यवसायं च प्रतिपादनीयाः येऽपि परैकव्यवसायिज्ञानमानिनो नैयायिकादयस्तानपि प्रतिपादितानुमानेनैव स्वपरव्यवसायित्वं सिद्धिपद्धतिमारोपणीयम् । तथा कदाचिल्लक्षणांशसिद्धये लक्षणांशस्यैव व्यापारणा यथा ज्ञानं स्वव्यवसायि परव्यवसायित्वान्यथानुपपत्तेरिति । यच्च यदा तु व्युत्पत्तिसमयस्तदेत्यादि । तदपि नावदातम् । यतो विप्रतिपत्तिप्रतिक्षेपाय लक्षणं प्रणीयत इति व्यक्तं भवतामेव तत्र तत्र जयवैजयन्ती । न च वचनमात्रेण तत्प्रतिक्षेपः सम्पद्यते । नापि वचनं परार्थानुमानादन्यत् प्रमाणं भवितुमर्हति । भवेद्भवनेऽवश्यतया लक्षणवाक्यानि परार्थानुमानरूपाण्यभ्युपेयान्यपरथा तदभिधानानर्थक्यप्रसक्तेः । अत एवोद्योतकरवाचस्पतिप्रभृतयः परेऽपि ' लक्षणवाक्यं केवलव्यतिरेक्यनुमानम् ' इत्यामनन्ति । न चैवं व्युत्पत्तिकाल एवायं लक्षणप्रणयनं नामेत्येकान्तः कान्तो भवेत् । विप्रतिपत्तिपराकरणाय प्रयुक्तस्य लक्षणवाक्यस्य परार्थानुमानरूपत्वेन व्यवहारस्वरूपत्वात् । अन्यथा वह्निविप्रतिपत्तिव्युदासाय प्रयुक्तस्य धूमानुमानस्यापि व्युत्पत्तिकाललिङ्गितत्वप्रसङ्गात् । एवं

---

१ ' भवद्भवनां ' इति प. भ. पुस्तकयोः पाठः ।

चावतीर्णो व्यवहारकालस्य विलयः । विनेयापेक्षया तु लक्षणप्रणयनस्य व्युत्पत्तिकालाभिधाने ध्वस्तो लक्षणस्यैव विधिः । विनेयान् प्रति लक्ष्यस्यापि कदाचिद् विधेयत्वात् । विगलितश्च विप्रतिपन्नानेवाश्रित्य लक्षणं प्रणीयत इति मनोराज्याभिनिवेशः । यदेव च ज्ञाप्यं तदेवे-त्यादिना च शब्दमात्रतः प्रतीतत्वाविशेषेऽपि लक्षणस्यानुवाद्यत्वं प्रत्याचक्षाणो लक्ष्यस्य च कक्षीकुर्वाणो न परीक्षकः । यच्चावाचि अत एवेत्यादि तत्रायमाशयः । लक्ष्यं हि प्रसिद्धमनुवाद्यं भवतीत्य-स्मात् भूतविभक्तयो द्वितीयाद्याः समुपादीयन्ते । लक्षणं पुनरप्रसिद्धं विधेयमित्यतो भव्यविभक्तिः प्रथमैव प्रयुज्यत इति सोऽयं साहित्यज्ञता-भिमानात् तत्र वृद्धधर्मोत्तरमधरयति । स्वयं त्वेवं व्याचष्ट इति किमन्यदस्य देवानांप्रियस्य श्लाघनीयता प्रज्ञायाः । सुप्रसिद्धा हि साहित्ये लोके वेदे च

*'कृतककुपितैर्बाष्पाम्भोभिः सदैत्य विलोकितै-
र्वनमसि गता यस्य प्रीत्या धृतापि तथाम्बया ।
नवजलधरश्यामाः पश्यन् दिशो भवतीं विना ।
कठिनहृदयो जीवत्येव प्रिये स तव प्रियः' ॥ १ ॥

इति

'आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बद्धं न सम्भावित एव तावत्करेण रुद्धोऽपि हि[२] केशपाशः ॥२॥'[१]

इति

*'पौलस्त्यः स्वयमेव याचत इति श्रुत्वा मनो मोदते ।
देयो नैष हरप्रसादपरशुर्मानाधिकं ताम्यति ॥
तद्वाच्यः स दशाननो मम गिरा दत्ता द्विजेभ्यो मही ।
तुभ्यं ब्रूहि रसातलत्रिदिवयोर्निर्जित्य किं दीयताम् ॥ ३ ॥'

इति

---

*एतत् श्लोकद्वय काव्यानुशासने स्वोपज्ञप्राचीनटीकायां शिवदत्तकृतार्वाचीन-टीकायां च किञ्चित्पाठभेदेन समुपलभ्यते का. अ. टी. पृ. १७८ पं. १०, पृ. १७८ पं. २२, परन्तु काव्यानुशासनकर्तुर्हेमचन्द्रादस्य प्राचीनत्वम् ।

१ रघुवंशमहाकाव्ये ७ सर्गे ६ श्लो. । २ 'न' इति प. पुस्तके "च" इति र. काव्ये च पाठः ।

*‘ तातान्जन्म वपुर्विलङ्घितवियत् क्रौर्यं कृतान्ताधिकम् ।
शक्तिः कृत्स्नसुरासुरोष्मशमनी तातादथोच्चैः पदम् ॥
सर्वं वत्स तवातिशायिनिधनं क्षुद्रात्तु यत्तापसात् ।
तेनाहं त्रपया शुचा च विवशः कष्टां दशामागतः ॥ ४ ॥’

इति

‘द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥५॥’

इति

*‘तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या ॥
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥६॥’

इत्यादौ॥ रक्तं पटं वयेत्यादौ, ‘ अग्निहोत्रं जुहुयात् स्वर्गकाम ’ इत्यादौ च, यथाक्रमं वनमिति करेणेति द्विजेभ्य इति क्षुद्रात्तापसादिति कपालिन इति रणाश्वमेधे इत्यादेः रक्तं पटमित्यादेरग्निहोत्रमित्यादेश्चांशाद्विधेयादपि पुरो द्वितीयाद्या विभक्तयः ।

तथा तेष्वेव

‘ कारणगुणानुवृत्त्या द्वौ ज्ञाने तपसि चातिशयमाप्तौ ॥
व्यासः पाराशर्यः स च रामो जामदग्न्य इह ॥ १ ॥ ’

इति

‘ सूर्याचन्द्रमसौ यत्र चित्रं खद्योतपोतकौ ।
नित्योदयजुषे तस्मै परस्मै ज्योतिषे नमः ’ ॥ २ ॥

इति

*‘ आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवम् ।
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ॥
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते ।
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥३॥’

*एतानि त्रीणि पद्यानि काव्यानुशासने स्वोपज्ञप्राचीनटीकायां शिवदत्तकृतार्वाचीनटीकायां च किञ्चित्पाठभेदेन समुपलभ्यन्ते । पृ. १७३ प. २, का. प्रा. टी. पृ. १६७ प. १५, पृ. २० प, ५१.

१ कुमारसम्भवमहाकाव्ये २ सर्गे श्लो. ७१. २ मैत्र्युपनिषदि ६-३.

इत्यादौ 'खलेवाली भवेन्मेधिः' इत्यादौ लोहितोष्णीषा ऋत्विजः संचरन्तीत्यादौ च व्यास इति, राम इति, सूर्याचन्द्रमसाविति, शास्त्राणीत्यादेः, ऋत्विज इत्यादेश्चांशादनुवाद्यादपि साध्यविभक्तिः प्रथमा प्रसिद्धैवेति । यथा चात्रामीषामंशानामनुवाद्यत्वं पूर्वत्र च तत्तदंशानां विधेयत्वं तथा श्रीमदम्बाप्रसादसचिवप्रवरेण कल्पलतायां तत्सङ्केते कल्पपल्लवे च प्रपञ्चितमस्तीति तत एवावसेयम् । अपि च भवदभिप्रायेण 'प्रत्यक्षं कल्पनापोढम्' इत्यत्रापि प्रत्यक्षमिति लक्ष्यांशात् सिद्धादपि साध्यविभक्तिर्दृश्यत एव । भवान् पुनस्तस्मात् सिद्धविभक्तिमेवामंस्त तत् 'यस्यामेव शाखायां स्थितस्तामेव छिनत्ति' इति नीतिं नातिवर्त्तते । अथ कथितमपि कथं नानुसंधत्से अभ्यधिष्महि यदा लक्षणमिति अयमाशयो यथा शिखया परिव्राजक इत्युक्तेऽपि परिव्राजकस्य शिखा लिङ्गमिति वाक्यान्तरार्थ एवोपप्लवते तथेहापि प्रत्यक्षं कल्पनापोढमित्याद्युक्तेऽप्यस्य प्रत्यक्षस्य लक्ष्यस्येदं कल्पनापोढत्वादि लक्षणमिति चेत् । अत्र पर्यनुयुञ्जमहे महोपाध्यायम् । तत्रापि हि वाक्यान्तरे कस्ते समाश्वासः । शक्यमेव ह्येवं वक्तुं यथा परिव्राजकस्य शिखा लिङ्गमित्यत्र शिखया परिव्राजको लक्ष्य[2] इत्यादिर्वाक्यान्तरार्थ एवोपप्लवते तथा प्रत्यक्षस्य कल्पनापोढत्वादि लक्षणमित्यत्रापि कल्पनापोढत्वादिना प्रत्यक्षं लक्ष्यत इति कल्पनापोढत्वादिलक्षणस्य प्रत्यक्षं लक्ष्यमित्यादिः । नहि किमप्यस्ति तद्वाक्यं यस्य वाच्यं न वाक्यान्तरेणावतारयितुं शक्यत इत्यभिमतविपरीतव्यवस्थानवस्था च दुर्निवारा भवेदिति । एवं च तिमिराशुभ्रमणेत्यादिव्याख्यावाक्यानां व्यत्ययेनार्थं समर्थयमानो निवारणीयो विपश्चिदिति । यत्तु यत्तूच्यते कथमप्रसिद्धस्य लक्षणत्वमित्याद्याशङ्क्य सेयमन्याऽप्रसिद्धिर्यो लक्षणत्वे-

---

१ 'व्युत्पत्तिसमयस्तदा' इत्यधिक प. पुस्तके । २ 'परिव्राजको लक्ष्यत इति शिखायाः' इत्यधिक प. पुस्तके । '३ लक्षणश्चे' इति प. पुस्तके पाठः ।

त्यादिनोक्तमेवैतादित्यन्तेन समाहितम् । तत्सर्वं लक्ष्यविधिसिद्धयेऽपि शक्यानुसन्धानम् । तथाहि सेयमन्याऽप्रसिद्धिर्या लक्ष्यत्वविधानावसरे उपयुज्यतेऽन्या च सा प्रसिद्धिर्या लक्षणाववोधनाय । शब्दार्थमात्रेण हि ज्ञातं सल्लक्ष्यत्वेन विधातुं शक्यम् । अत्यन्ताप्रसिद्धस्य लक्ष्यत्वेन विधातुमशक्यत्वात् । नतु तया प्रसिद्ध्या विधेयतासामर्थ्यायातं तत्पद-परामर्शनीयत्वमस्य निवर्त्तते । तस्य तु या लक्षणाववोधनाय व्यापा-रणा सा अन्या प्रसिद्धिर्यासौ लक्षणवाक्याल्लक्ष्यत्वेनावगतौ सत्यां प्रमाणं चैतदित्येवं तदनुसन्धानरूपा तत्रास्यानूद्यमानता । स ह्यस्य व्यवहारकाल इति । यदपि प्रत्यपादि यः कुण्डली स देवदत्त इत्यादि । तदपि तत्रापि हि वाक्यान्तर इत्यादिना निवेदितोत्तरप्रायम् ।

लक्षणं द्विविधमात्मभूतमनात्मभूतं चेति व्यवस्थापनम् ।

अथान्यच्चिन्त्यते द्विविधं लक्षणमात्मभूतं अनात्मभूतं च । तत्रात्मभूतं लक्षणमाशुशुक्षणेरौष्ण्यवत् । अनात्मभूतं तु देवदत्तस्य दण्डवत् । तत्रेह प्रमाणस्य स्वपरव्यवसायिज्ञानमात्मभूतं लक्षणं लक्षणीयम् ।

लक्ष्यलक्षणयोस्तादात्म्यमिति मतखण्डनम् ।

अत्राह कश्चित् । नन्वेवं लक्ष्यलक्षणयोस्तादात्म्यादप्रसिद्धे लक्षणे लक्ष्यस्याप्यप्रसिद्धत्वात् कस्य लक्षणं लक्षणीयम् । प्रसिद्धे वा लक्ष्ये लक्षणस्यापि प्रसिद्धत्वान्निष्प्रयोजनं तदभिधानमिति । तदचतुरस्रम्, लक्ष्यलक्षणयोः सर्वथा तादात्म्यस्यासिद्धत्वात् कथंचित्तादात्म्यस्य तु प्रसिद्ध्य-प्रसिद्धी प्रत्यनैकान्तिकत्वात् । क्षयोपशमभावाभावयोरेव तत्र कारणत्वात् । अथाभिदधीथाः सर्वथा भिन्नं लक्ष्याल्लक्षणं दण्डवदिति । नैतदवितथं अनवस्थापत्तिदुःस्थत्वात् । तथा हि सर्वथा पृथग्भूताद्विवक्षितलक्षणाल्लक्ष्यं कथं सिद्ध्येत् । लक्षणान्तराच्चेत् तदपि यद्यमुष्मादेकान्तेन पृथग्भूतं तदा लक्षणान्तरादेव लक्ष्यं सिध्येदिति अनवस्था । सुदूरमपि गत्वा यद्यपृथग्भूताल्लक्षणात् कुतश्चिल्लक्ष्यसिद्धिरभिधीयते तर्हि न सर्वं लक्षणं लक्ष्याद्भिन्नमेव । तथैकान्तपृथग्भूतं लक्षणं

प्रसिद्धमप्रसिद्धं वा सल्लक्ष्यस्य प्रज्ञापकं भवेत् । प्रसिद्धं चेत् तदा कुतस्तत्प्रसिद्धिः । स्वकीयलक्षणादिति चेत् तर्हि तस्यापि प्रसिद्धिः स्वकीयलक्षणान्तरादित्यनास्था । अथ गत्वापि सुदूरं स्वरूपत एव कस्यापि लक्षणस्य प्रसिद्धिः स्वीक्रियते तर्हि न सकलं भिन्नमेव लक्षणस्य स्वात्मभूतलक्षणत्वात् । अथाप्रसिद्धं लक्षणमाख्यायते नन्वेकान्तेन कथंचिद्वा । न तावदेकान्तेन अतिप्रसङ्गपराहतत्वात् । अथ कथंचिदप्रसिद्धं लक्षणमुच्यते शब्दार्थमात्रेण हि प्रसिद्धं लक्षणं विवक्षितलक्ष्यास्पदत्वेन त्वप्रसिद्धमिति । सत्यमेवमेतत् । किन्तु लक्ष्यादेकान्तेन लक्षणस्य पार्थक्येऽतिप्रसङ्गो दुष्परिहर एव । विन्ध्यमहीध्ररन्ध्रवर्तिदूर्वापल्लवलतानामपि तथाभूतानां विवक्षितलक्ष्यं प्रति लक्षणत्वप्राप्तेः । अस्तु तर्ह्यभिन्नमेव लक्ष्याल्लक्षणमाशुशुक्षणेरौष्ण्यवदिति चेत् । अयमपि न प्रमाणपरतन्त्रस्योल्लापः । नियमहेत्वभावेन विपर्ययस्यापि प्रसक्तेः । तादात्म्याविशेषेऽपि पावकोष्णयोरौष्ण्यमेव पावकस्य लक्षणं न पुनरग्निरौष्ण्यस्येति हि कुतस्त्या नियतिः । अप्रसिद्धत्वादौष्ण्यं कृष्णवर्त्मनो लक्षणमिति चेत् तत्किं कृष्णवर्त्मापि महात्मा नोऽप्रसिद्धः । एवमिति चेत् । अहह महासाहसिकत्वं ते । यच्चाक्षुषप्रत्यक्षोपलक्ष्यमप्याशुशुक्षणिमप्रसिद्धं ब्रवीषि । प्रसिद्ध एवायं धर्म्मिमात्ररूप इति चेत् कथं तर्हि दहनौष्ण्ययोस्तादात्म्यं समर्थयिष्यते । प्रसिद्धाप्रसिद्धयोः सर्वथा तादात्म्यविरोधात् । ततः कथंचिद्भिन्नयोरभिन्नयोश्च लक्ष्यलक्षणभावप्रतीतिसद्भावात् सर्वथा विरोधाभावात् । अन्यथा लक्ष्यलक्षणभावशून्यतापत्तेः ।

संवृत्त्या लक्ष्यलक्षणभाव इति मतस्य खण्डनम् । तथा विकल्पस्य सद्विषयकत्वव्यवस्थापनम् ।

संवृत्त्या लक्ष्यलक्षणभाव इति चेत् केयं संवृत्तिर्नाम । उपचार इति चेत् अस्ति तर्हि मुख्यः कश्चिल्लक्ष्यलक्षणभावः । क्वचिन्मुख्यस्यासत्तायामुपचारस्याप्रवृत्तेः । विचारतोऽनुपपद्यमाना विकल्पबुद्धिः संवृत्तिरिति चेत् कथं तया लक्ष्यलक्षणभावः । तस्य तत्रावभासनादिति चेत् ।

सिद्धस्तर्हि बौद्धो लक्ष्यलक्षणभावस्तद्वदबौद्धोऽपि किं न सिध्येत् । विकल्पाद्बहिर्भूतस्य तस्यासम्भवादिति चेत् । न तस्यासम्भवे तादृग्विकल्पविषयत्वायोगात् । न च सकलो विकल्पविषयोऽसम्भवन्नेव । सम्भवतोऽपि विकल्पविषयत्वोपपत्तेः प्रत्यक्षविषयवत् । सर्वो विकल्पोऽसम्भवद्विषयो विकल्पत्वात् मनोराज्यादिविकल्पवदिति चेत् । सर्वं प्रत्यक्षमसम्भवद्विषयं प्रत्यक्षत्वात् केशोन्दुकप्रत्यक्षवदिति किं न स्यात् । प्रत्यक्षाभासोऽसम्भवद्विषयो दृष्टो न प्रत्यक्षमिति चेत् । तर्हि विकल्पाभासोऽसम्भवद्विषयो न विकल्प इति समानः परिहारः । कः पुनः सत्यो विकल्पः प्रत्यक्षं किं सत्यमिति समः पर्यनुयोगः । यतः प्रवर्त्तमानोऽर्थक्रियायां न विसंवाद्यते तत्सम्यक्प्रत्यक्षमिति चेत् । यतो विकल्पादर्थं परिच्छिद्य प्रवर्तमानोऽर्थक्रियायां न विसंवाद्यते स सत्य इति किं नानुमन्यसे किं पुनर्विकल्पस्यार्थपरिच्छेदकत्वं प्रत्यक्षस्य किमिति वाच्यम् । अविचलितस्पष्टार्थावभासित्वमिति चेत् । कस्यचिद् विकल्पस्यापि तदेव कस्यचित्तु बाधकविधुरास्पष्टार्थावभासित्वमपीति मन्यामहे । अस्पष्टोऽर्थ एव न भवतीति चेत् कुतस्तस्यानर्थत्वम् । पुनरस्पष्टतयाऽनवभासनादिति चेत् स्पष्टोऽप्येवमनर्थः स्यात् पुनः स्पष्टतयाऽनवभासनात् यथैव हि दूरात्पादपादिसामान्यमस्पष्टतया प्रतिभाति पुनर्निकटदेशवर्त्तितायां तदेवास्पष्टं न प्रतिभाति तद्विशेषस्य तदा प्रतिभासनात् तथैव सन्निहितस्य विशिष्टं पादपादिरूपं स्पष्टतया प्रतिभातं पुनर्दूरतरदेशवर्त्तितायां न तदेव स्पष्टं प्रतिभासते । यदि पुनः सन्निहितज्ञानग्राह्यमेव तद्रूपं विशिष्टमिति मतिस्तदा दविष्ठादिज्ञानग्राह्यमेव तद्रूपं सामान्यमिति किं न मतम् । यथा च विशिष्टं पादपादिरूपं स्वार्थक्रियां निर्वर्तयति तथा पादपादिसामान्यरूपमपि प्रतिपत्तुः परितोषकरणं हि यद्यर्थक्रिया तदा तत्सामान्यस्यापि सा समस्त्येव कस्यचित्तावता परितोषात् । अथ स्वविषयज्ञानजनकत्वमर्थक्रिया तदपि सामान्य-

१ केशोन्दुकं केशग्रन्थिः ।

स्यास्त्येव । सजातीयार्थकरणमर्थक्रियेति चेत् सापि सदृशपरिणामस्यास्ति विसदृशपरिणामस्येव । सदृशेतरपरिणामात्मकाद्धि बालपादपात् सदृशेतरपरिणामात्मक एव तरुणपादपः प्रादुर्भवन्नुपलभ्यते । तत्र यथा विसदृशपरिणामाद्विशेषाद्विसदृशपरिणामस्तथा सदृशपरिणामात् सामान्यात् सदृशपरिणाम इति । सजातीयार्थकरणमर्थक्रिया सिद्धा सामान्यस्य विशेषतश्चैतद्विषयपरिच्छेदे निश्चेष्यते । ततो वस्त्वेवं सामान्यं विशेषवत् तत्र च प्रवर्त्तमानो विकल्पो वस्तुनिर्भासः संवादकत्वादनुपप्लव एव प्रत्यक्षवत् । तादृशाच्च विकल्पाल्लक्ष्यलक्षणभावो व्यवस्थाप्यमानो न बुद्ध्यारूढ एव । यतः सांवृतः स्यादिति सिद्धः पारमार्थिको लक्ष्यलक्षणभाव इति ।

स्वपरव्यवसायिज्ञानमिति लक्षणे पदकृत्यप्रदर्शनम् ।

इदानीमक्षरार्थः । तत्र प्रमाणमिति पूर्ववन्निर्वचनीयम् । स्वमात्मा ज्ञानस्यैव स्वरूपमित्यर्थः । परः स्वस्मादन्यः अर्थ इति यावत् । तौ व्यवस्यति यथावस्थितत्वेन निश्चिनोतीत्येवं शीलं यत्तत्स्वपरव्यवसायि । ज्ञायते बुद्ध्यते वस्त्वनेनेति ज्ञानं प्राधान्येन विशेषग्राहको बोधः । इह च व्यवच्छेद्यापेक्षया लक्षणविशेषणप्रवृत्तिरिति ज्ञानमिति प्रमाणस्य विशेषणमज्ञानस्वभावस्य व्यवहारानंगस्य सन्मात्रगोचरस्य स्वसमयप्रसिद्धस्य दर्शनस्य सन्निकर्षकारकसाकल्यादेश्च नैयायिकादिपरिकल्पितस्य प्रामाण्यप्रतिषेधार्थमुपन्यस्तम् । ज्ञानस्यापि स्वसंवेदनेन्द्रियजमानसयोगिप्रत्यक्षरूपतया चतुर्विकल्पस्य निर्विकल्पतया प्रामाण्यं यत्ताथागतैः पर्यकल्पि तन्निरासार्थं सन्देहविपर्ययानध्यवसायाना प्रमाणतापरिहारार्थं च व्यवसायिपदोपादानम् । पारमार्थिकबाह्यार्थपलापिनां विज्ञानाद्यद्वैतवादिनां मिथ्याभिनिवेशव्युदासार्थं परपदप्रणयनम् । नित्यपरोक्षबुद्धिवादिनां मीमांसकानामेकार्थसमवायिज्ञानान्तरप्रत्यक्ष-

१ 'वस्तुवत्' इति प. भ. पुस्तकयोः पाठः।

ज्ञानवादिनां नैयायिकवैशेषिकाणां प्रधानविवर्त्तत्वेनाचेतनज्ञानवादिनां कापिलानां च मतमपाकर्त्तुं स्वशब्दसंशब्दनम् ।

सम्पूर्णप्रमाणलक्षणे पदकृत्यप्रदर्शनम् ।

संपूर्णं प्रमाणलक्षणवाक्यं पुनः परपरिकल्पितस्यार्थोपलब्धिहेतुत्वस्याविसंवादकत्वस्यानधिगतार्थाधिगन्तृत्वादेश्च प्रमाणलक्षणताप्रतिक्षेपार्थम् । तथाहि ।

आचक्षते लक्षणमक्षपादपक्षे सदाऽक्षुण्णनिबद्धकक्षाः ।
सर्वप्रमाणानुगुणं यदत्र क्षणं तदेतर्हि विचारयामः ॥ १९ ॥

प्रमाणलक्षणे न्यायमतस्य खण्डनम् ।

'अर्थोपलब्धिहेतुः प्रमाणम्' इति तत्पक्षः । स न परीक्षां क्षमते । प्रमातृप्रमेययोरपि द्रोणकुसुमरसनिषेकसौवीराञ्जनशरीराहारादेरपि चार्थोपलब्धिहेतुत्वेन प्रमाणताप्रसंगात् ।

वाचस्पतिमतखण्डनम् ।

अत्राह वाचस्पतिः सर्वः कर्त्ता करणगोचरव्यापारो न तु साक्षात्फले व्याप्रियते । करणं च द्वेधा सिद्धमसिद्धं च । तत्र सिद्धं परश्वधादि दारुद्वैधीभावायोद्यम्योद्यम्य दारुणि निपातयन् दारु च्छिनत्तीत्युच्यते । न तु साक्षात्कर्तृव्यापारगोचरो दारुद्वैधीभावः। किन्तु स्पर्शवद्वेगवतः करणीभूतस्य परशोः संयोगोद्यमननिपातलक्षणस्तु कर्तृव्यापारः परशुगोचर एव । एवं स्वर्गकामोऽपि कर्त्ता न साक्षात् स्वर्गे व्याप्रियते । किन्तु तत्करणं यागमसिद्धं साधयति । स्वर्गस्तु यागव्यापारादेवापूर्वाभिधानाच्चेतनाश्रयोद्देशकालव्यवस्थाभेदासादितपरिणतिविशेषात् साक्षादुत्पद्यते । तद्वदिहापि प्रमाता सिद्धमिन्द्रियाद्यसिद्धं वा तत्सन्निकर्षादि व्यापारयन्नुत्पादयन्वा करण एव चरितार्थः । करणं त्विन्द्रियादि तत्सन्निकर्षादि वा नान्यत्र चरितार्थमिति साक्षादुपलब्धावेव फले

१ उपजातिः । २ गौ. सू. पृ. ९४ पं. ४ 'उपलब्धिहेतुश्च प्रमाणम्' इति । ३ अत्र प्रमाण सुश्रुतादिषु ।

व्याप्रियते । प्रमेयस्य तु प्रत्यक्षादन्यत्रोपलब्धिहेतुभाव एव तावन्नास्ति । केवलं प्रमाणविषयमात्रेणोपयुज्यते । यत्राप्यस्य हेतुभावः प्रत्यक्षेऽभिप्रेयते तत्रापीन्द्रियसंबन्धमात्रे उपयुज्यते प्रमेयम् । इन्द्रियमेव तु तत्सन्निकर्षादि वा साक्षात् प्रमाहेतुः । तत्सिद्धमेवं न प्रमाता साक्षात् प्रमाहेतुः कर्तृत्वाद्यो यः कर्त्ता स सर्वो न साक्षात्फलहेतुर्यथा वृक्षनयजमानादिस्तथा चायं तस्मात्तथा । तथा प्रत्यक्षं प्रमेयं न प्रमाहेतुः ...येयत्वाद्यद्यत्प्रमेयं न तत्सर्वं प्रमाहेतुरनुमेयादिवत्तथा चैतत्तस्मात् तथेति । तदिदं प्रमातृप्रमेययोः प्रमाणे चरितार्थत्वं फले च प्रमाणस्य । ... ...देव फलहेतुः । प्रमातृप्रमेये तु फलोद्देशेन प्रवृत्त इति तद्व्यकथञ्चिदेति । अत्रोच्यते सकलस्याप्येतत् प्रयासस्येदमेव फलं यदिन्द्रियसन्निकर्षादिकमनन्तरमर्थप्रतिपत्तिनिमित्तं तदेव प्रमाणं न व्यवहिते प्रमातृप्रमेये इति अनुपपन्नं चैतत् । यतो हेतुशब्दमात्रोक्तावपि यः साक्षादुपलब्धौ हेतुरिन्द्रियादि स एव चेत् प्रमाणतयाभिप्रेतः सूक्ष्मदर्शिनोऽस्य तदा स्वपरव्यवसायिज्ञानमेव तयाभ्युपगन्तुमुचितम् । वस्तुपरिच्छित्तिरानन्तर्येण तत एव भावात् । यथा च ज्ञानरूपादपि प्रमाणाद्वस्तुपरिच्छित्तिः फलं कथञ्चिद्भिद्यते तथा फलपरिच्छेदे निश्चेप्यते । भवतश्चात्र श्लोकौ ।

अर्थोपलब्धेर्यदि साधनस्य प्रमाणतां वक्षि विचक्षण त्वम् ।
तदा प्रमात्रादिषु तत्प्रसक्त्या जज्ञे सुभिक्षं भवतः प्रमाणैः ॥ २० ॥

अथापि यत्सन्निहितं तदेव प्रमाणमाख्यासि हृषीकमुख्यम् ।
त्यक्त्वा तदानीं स्वमताभिमानं ज्ञानं प्रमाणं वद निर्विवादम् ॥ २१ ॥

भिक्षवो लक्षणं यत्समाचक्षतेऽध्यक्षमुख्यप्रमाणस्य साधारणम् ।
तद्विसंवादवैकल्यरूपं स्फुटं वर्ण्यमानं सकर्णैः समाकर्ण्यताम् ॥ २२ ॥

---

१ भुजङ्गप्रयातम् ।

प्रमाणमविसंवादिविज्ञानमिति बौद्धमतस्य प्रस्थापनपूर्वकं खण्डनम्।

तथाहि ते प्राहुः—प्रमाणमविसंवादिविज्ञानमिति। अविसंवादकत्वं चार्थप्रापकत्वमुच्यते। तच्च प्रत्यक्षानुमानयोरुभयोरप्यस्तीति सामान्यलक्षणम्। तत्र प्रत्यक्षस्य स्वप्रदर्शितस्वलक्षणक्षणस्य क्षणिकत्वेन प्राप्त्यसम्भवेऽपि तत्सन्तानप्राप्तेः सम्भवात् सन्तानाध्यवसायजननमेव प्रापकत्वम्। द्विविधो हि प्रत्यक्षस्य विषयो ग्राह्योऽध्यवसेयश्च। तत्र ग्राह्यक्षण एकः सकलसजातीयविजातीयव्यावृत्तः। स्वलक्षणाख्यस्य तत्र परिस्फुरणात्। इदमेव ग्राह्यत्वमर्थस्य यत् स्वाकारज्ञानजनकत्वम्। इदमेव च ग्राहकत्वं ज्ञानस्य यदर्थाकारतयात्मलाभः। अध्यवसेयः पुनः सन्तानः। बहवश्च स्वलक्षणलक्षणा उपादानोपादेयभावमापन्नाः संतानः। तस्य चाध्यवसेयत्वमगृहीतस्यापि प्रवृत्तिविषयत्वम्। अध्यवसेयार्थसन्तानापेक्षयैव च प्रत्यक्षस्य प्रामाण्यव्यवस्था स्वलक्षणस्य प्रापयितुमशक्यत्वात्। सन्तानश्चाध्यवसीयतेऽपहर्त्तुमशक्यत्वात्। इति सन्तानाध्यवसायापेक्षं प्रत्यक्षे सर्वत्र प्रामाण्यव्यवस्थापनं न ग्रहणापेक्षम्। तस्मात् सन्तानाध्यवसाये सत्यविसंवादकत्वेन प्रत्यक्षस्य प्रामाण्यम्। ननु निर्विकल्पकत्वात् प्रत्यक्षस्य कथं तेन सन्तानाध्यवसायः सम्भवति। उच्यते। प्रत्यक्षजन्यविकल्पेन सन्तानस्याध्यवसितत्वात् प्रत्यक्षेणाध्यवसितः स इत्यभिधीयते। अनुमानस्य पुनरपारमार्थिकसामान्यविषयतया भ्रान्तत्वेऽपि प्रणालिकया मूलवस्तुलक्षणप्रभवत्वान्मणिप्रभायां मणिबुद्धिरिव वस्तुप्राप्त्या प्रापकत्वम्। यतस्तस्यापि ग्राह्याध्यवसेयतया विषयो द्विविधः। तत्राध्यवसेयं स्वलक्षणम्। समुत्पन्नेऽनुमानेऽध्यवसायादर्थक्रियाकारिणि स्वलक्षण एव प्रमातुः प्रवृत्त्युपलब्धेः। ग्राह्यस्तु विषयोऽस्य सामान्यमेव। तत्पुनर्बहिस्तादात्म्येनाध्यवसीयमानो बुद्ध्याकारो वा। अलीकबाह्यं वाऽन्तर्बहीरूपम्। परमार्थतस्तु न कश्चिदनुमानस्य विषयः। तथाहि न स्वलक्षणं तत्र तस्यापरिस्फुरणात्। न बुद्ध्याकारः बहिस्तादात्म्येन तस्यासम्भवात्। नाप्यलीकबाह्यम्। तस्य सर्वथाप्यसम्भवेनार्थक्रियासामर्थ्यशून्यत्वतः करिकेसरकलापकल्पत्वादिति निर्विषयमनुमानम्।

स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तत्वात् भ्रान्तं च । अनुमानं हि स्वात्मनि प्रतिभातेऽनर्थे सामान्यस्वरूपेऽर्थत्वं स्वलक्षणरूपतामारोप्य प्रवर्त्तत इति भ्रान्तम् । तथापि स्वभावकार्यलिङ्गदर्शनजन्यतया पारम्पर्येण स्वभाविनि कारणे च प्रतिबद्धत्वात् तत्प्रापकतयार्थाविसंवादकत्वेन प्रमाणम् । तदुक्तम् 'अतस्मिंस्तद्ग्रहो भ्रान्तिरपि सम्बन्धतः प्रमा' इति । अनुमानविकल्पान्तराणां नियतार्थप्रतिबन्धाभावादप्रापकत्वेनाविसंवादकत्वानुपपत्तेरप्रामाण्यम् । यथाध्यवसितप्रापकं च प्रमाणम् । अतः पीतशङ्खादिग्राहिज्ञानानां शङ्खमात्रादिप्राप्तौ सत्यामपि न प्रामाण्यं यथाध्यवसितस्याप्राप्तेः । अध्यवसितो हि पीतः शङ्खः प्राप्यते । नतु श्वेतः । तस्माद्यथाध्यवसितार्थप्रापकमविसंवादिज्ञानं प्रमाणमिति स्थितम् ।

एतदध्यवसिताखिलवस्तुप्रापकत्वमविसंवदनं यत् ।
व्याहतं सकलमानसमानं लक्ष्म तन्न घटनामुपयाति ॥ २३ ॥

अध्यवसायस्य सुगतशासने वस्तुविषयत्वाभावात् । अवस्तुनश्च प्राप्तुमशक्यत्वात् । तदुक्तम् । 'यथाध्यवसायमतत्वात् यथा तत्त्वं चानध्यवसायात्' इति । मूलभूतवस्तुप्राप्तिः पुनरन्धकंटकीयन्यायमनुसरति । नहि तदन्यतरेणापि प्रमाणेन दृष्टं यद्गत्वा प्राप्यते । सन्तानप्राप्त्या तत्प्राप्तिरित्यपि न पेशलम् । क्षणक्षयिक्षणपरम्परातः पृथग्भूतस्य पारमार्थिकस्य सन्तानस्य ताथागतैरस्वीकरणात् । अथापारमार्थिकेऽपि सन्ताने सति संवृतिमाहात्म्यात् प्रमाणलक्षणमिदं निर्वक्ष्यति । यथोक्तम् । 'सांव्यवहारिकस्य चैतत् प्रमाणस्य लक्षणं । वस्तुतस्त्वनाद्यविद्यावासनारोपितग्राह्यग्राहकादिभेदप्रपञ्चं ज्ञानमात्रमवेदमिति किं प्राप्यते किं वा प्रापयति' इति । तदिदं स्वसमयोद्घोषणमात्रं न कञ्चन प्राकरणिकमर्थं समर्थयते । अविचारितरम्या हि प्रतीतिः संवृतिरिति सम्मतं सौगतानाम् । या च न विचारगोचरे विचरति ।

---

१ 'न' इति प. पुस्तके पाठः । २ स्वागता । ३ अन्धस्य यथा कण्टकोपरि पादो यदृच्छया पतति तद्वदित्यर्थः ।

तयापि प्रमाणलक्षणनिर्वहणमिति महत्कैतवम् । अविद्यावासनानिर्मितश्च न ग्राह्यग्राहकादिव्यवहारः । किन्तु तात्त्विक एवेति ज्ञानाद्वैतविघटनप्रघट्टके प्रकटयिष्यते । यदि चापरमुत्तरप्रकारमनवधारयद्भिः सांवृत एव सन्तानः परिकल्प्यते । हन्त तर्हि नैयायिकादिसम्मता जात्यवयविसमवायप्रभृतयोऽपि संवृतिनिर्मितमूर्त्तयः किमिति न परिकल्प्यन्ते । वृत्तिविकल्पादिबाधकविधुरीकृतत्वादिति यदि मतं तर्हि भेदादिविकल्पैः सन्तानस्य प्रतिहन्यमानत्वात् तत्रापि तुल्यः पन्थाः ।

एवं च सति ।

विसंवादापेतं यदिह किमपि ज्ञानमखिलम् ।
प्रमाणं तद्बौद्धैरभिहितमिदं तु प्रतिहतम् ॥
अविज्ञातज्ञानं त्वभिदधति भट्टस्य तनयाः ।
प्रमाणं तत्सम्प्रत्यवतरतु दूष्यत्वपदवीम् ॥ २४ ॥

तथा हि अनधिगतार्थाधिगन्तृत्वं प्रमाणस्य किमभिधीयते ।

अनधिगतार्थाधिगन्तृत्वं प्रमाणस्येति भाट्टमतस्य खण्डनम् ।

प्रमाणान्तरेणानधिगतस्यार्थस्य यदधिगन्तृत्वं तदिति चेत् ननु प्रमाणान्तरं परकीयं स्वकीयं वा । यदि परकीयम् तदा साधयिष्यमाणसर्वज्ञज्ञानस्य समस्तवस्तुविस्तारगोचरतया तदधिगतार्थाधिगन्तृत्वात् निखिललौकिकज्ञानानामप्रामाण्यं प्रसज्येत । देवदत्तज्ञानस्यापि यज्ञदत्तादिप्रमाणप्रतिपन्नार्थग्राहित्वादप्रमाणत्वं स्यात् । अथ स्वकीयं तदपि न साम्प्रतम् । प्रमाणस्य गृहीततदितरगोचरप्रवृत्तस्य प्रामाण्यं प्रति विशेषानुपलक्षणत्वात् । अथ गृहीते गोचरे प्रवर्त्तमानं प्रमाणं किं कुर्वीत । नन्वगृहीतेऽपि किं कुर्वीत । अज्ञाननिवर्त्तनमिति चेत् गृहीतेऽपि तदेव कुरुताम् । कृतस्य करणायोग इति चेत् मैवम् । अज्ञानविनिवर्त्तनान्तरकरणात् । पुनरज्ञाननिवर्त्तनस्य किं फलमिति चेत् । आयुष्मन्नज्ञानविनिवर्त्तनं स्वयमेव फलं न च फलस्यापि फलमन्वेषणीयम् । तदविरामप्रसक्तेः । न च प्रयोजना-

१ शिखरिणी ।

नुवर्त्ति प्रमाणं भवति । अविकला चेत् तस्य जनिका सामग्री तदा तदुत्पद्यत एव । कस्य चायं पर्यनुयोगस्त्वया विधीयते यदुत गृहीतेऽपि विषये प्रवर्तमानं प्रमाणं किं कुर्यादिति । न तावत् प्रमाणस्य । तद्धि दैवोपनतां स्वजनिकां सामग्रीं समासाद्य समुत्पद्यमानं वराकं कथं पर्यनुयोगभुवमवतरेत् । नापि प्रमातुः तस्यापि च सति योग्ये गोचरेऽभिमुखीभूतेषु करणेषु भूयोऽपि प्रादुर्भवन्त्येव संवेदनानीति सोऽपि तपस्वी किमित्थमुपलभ्यताम् ।

किमिति पश्यसि वस्तु तदेव भो
यदिह पूर्वधिया कलितं किल ।
किमिति वस्तुनि सन्निहितेऽपि च
त्वमसि नैव निमीलितलोचनः ॥ २५ ॥

अपि च

पुनः पुनः प्रमाणानां प्रवृत्तौ विषयेष्विह ।
सर्वथा नास्ति वैयर्थ्यं फलस्याप्युपलम्भनात् ॥ २६ ॥

तथाहि हालाहलजिह्मगादौ हेये मुहुर्वस्तुनि वीक्ष्यमाणे ॥
स कोऽपि तापः स्फुरति प्रकामं न गोचरं यो वचसामुपैति ॥२७॥

निरीक्ष्यमाणे परमार्थतस्तु हेये मुहुर्मोहविकारमुख्ये ॥
विवेकसेकप्लुतमानसानामरोचकस्तीव्रतरोऽभ्युदेति ॥ २८ ॥

प्रेयस्विनीपार्वणशीतरोचिर्मयूरमाणिक्यमुखे त्वजस्रम् ॥
आदेयवस्तुन्यवलोक्यमाने सम्प्राप्यते प्रीतिरसः स कोऽपि ॥२९॥

तत्त्वतस्तु सुधियामभीप्सिते तीर्थनाथपदपङ्कजद्वये ॥
याति दर्शनपथं मुहुर्मुहुः प्रीतिसम्पदमुपैति मानसम् ॥ ३० ॥

ततश्च तस्मिन् हृदयैकशूले कामं तथान्तःकरणानुकूले ॥
हानार्थमादानकृते च सद्यः सञ्जायते प्राणभृतां प्रवृत्तिः ॥ ३१ ॥

---

१ 'तद्विदा' इति प.भ. पुस्तकयोः पाठः । २ द्रुतविलम्बितम् ।

'यत्रापि स्यात्परिच्छेद' इति कुमारिलकारिकाया उद्भावनपूर्वकं निराकरणम्।

यदप्यदः प्रतिपाद्यते कुमारिलेन 'यत्रापिस्यात्परिच्छेदः प्रमाणैरुत्तरैः पुनः। नूनं तत्रापि पूर्वेण सोऽर्थो नावधृतस्तथा ॥ १ ॥' इति तदपि न मनोरमम्। यतो नोत्तराणि प्रमाणानि जायमानानि सर्वात्मनाप्यपूर्वमेवार्थं परिच्छिन्दन्ति। अथापूर्वस्यापि तस्य तत्र परिच्छेदो विद्यत एव। तथा ह्यनुमानेन वह्निमात्रमन्वमायि प्रत्यक्षेण तु ज्वालाकलापशालित्वादिविशेषविशिष्टो वह्निर्निश्चीयत इति चेत्। एवं तर्हि यथानधिगतान् विशेषानिदं परिच्छिन्दत्प्रमाणमेव तथाधिगतं वह्नित्वमपि परिच्छिन्ददप्रमाणमेव किन्न भवेत्। किंच यदि शतकोटिस्फटिकमालोक्य कतिपयकालकलाविलम्बादूर्ध्वं यथास्थितमेव यदा कलयति तदा तत्प्रत्यक्षस्य कुतः प्रामाण्यं स्यात्। अननुभूयमानस्यापि विशेषाकलनस्य तत्र कल्पने धारावाहिष्वपि तत् कल्पनास्तु। अथ तत्कालावस्थितत्वविशेषप्रातिभासः स्फुट एव तत्रास्ति। नन्वसौ धारावाहिष्वपि तथैवास्ति ततस्तान्यपि प्रमाणानि स्युः। अथ प्रमाणान्येव तान्यनधिगतेंऽशेऽधिगतांश एव प्रामाण्यप्रतिषेधादिति चेत्। तदचारु। गृहीतागृहीतांशयोः प्रवर्त्तमानस्य प्रमाणस्य प्रामाण्यं प्रति विशेषाभावात्। ननु यदि गृहीतेऽपि गोचरे प्रमाणं प्रवर्त्तते तर्हि तत्र तस्य प्रवृत्त्यविरामः प्रसज्येत। नहि तद्विरमणे काञ्चन सीमानं जानीमहे। अज्ञानविनिवर्त्तनाख्यस्वफलोत्पादस्वसीमा त्वतिक्रान्तैवानेन। अत्राभिधीयते। नयनादिकरणानां गोचरान्तरव्यापारतो वा प्रमातुः परिश्रमतो वा स्वसामग्रीपरिभ्रंशतो वा प्रमाणस्य विरतेः सम्भवान्नाविरतिप्रसक्तिः। न चानवस्थाप्येवंविधा मूलबाधाविधायिनी। न ह्युत्तरसमयसम्भविविज्ञानपरम्परासमुत्पादमन्तरेण प्राचीनविज्ञानसमुत्पत्तिर्बाध्यते। तस्मादविराम-

---

१ एकस्मिन्नेव घटे 'घटोऽयं घटोऽयम्।' इत्येवमुत्पद्यमानमुत्तरोत्तरज्ञानं धारावाहिकज्ञानम्।

प्रसङ्गापादनद्वारेणानवस्थाप्येषा परैः प्रकाश्यमाना न नः काञ्चन क्षतिमातनोति । तदाह

मूलक्षतिकरीमाहुरनवस्थां हि दूषणम् ।
मूलसिद्धात्वरुद्धापि नानवस्था निवार्यते ॥ १ ॥'

किञ्च यद्यनुपलब्धार्थावबोधकमेव प्रमाणमङ्गीक्रियते, कथं तर्हि तपस्विनी प्रत्यभिज्ञा प्रामाण्यं स्वीकरिष्यति । पूर्वोपलब्धार्थपरिच्छेदकत्वस्यापि तस्यां प्रतीयमानत्वात् ।

अथाधिगतगन्तृत्वे प्रामाण्यं स्यात् स्मृतेरपि ।
यदि स्यात् किं तदा जातं क्षुण्णं जैनेन्द्रशासने ॥ ३२ ॥
परोक्षव्यक्तिरेषा हि प्रमाणं स्मृतिरिष्यते ।
स्वपरव्यवसायित्वात् स्याद्वादन्यायवेदिभिः ॥ ३३ ॥
परिच्छेदे तृतीये च सर्वमेतद् भणिष्यते ।
तस्मादबुद्धबोद्धृत्वे मुच्यतामयमाग्रहः ॥ ३४ ॥

न च प्रकृतं प्रमाणलक्षणमव्यापकमिति मन्तव्यम् । सर्वासामपि प्रत्यक्षपरोक्षप्रमाणव्यक्तीनां स्वपरव्यवसायिज्ञानत्वेन व्याप्तानामुपलभ्यमानत्वात् । ननु सर्वज्ञानानां स्वरूपसंवेदनं प्रमाणं प्रति परव्यवसायासम्भवेनैतल्लक्षणावृत्तेरव्यापकतैवेति चेत् नैवम् । तत्र स्वं चासौ ग्राह्यत्वसाधर्म्येण परश्च स्वपरस्तं व्यवस्यतीत्येवं शीलं यत्तत्तथेत्येवं लक्षणयोजनात्। अतिव्यापकं तद्भविष्यतीत्यपि न परिभावनीयम् । अप्रमाणभूतेषु सन्देहादिषु सर्वथाप्येतदसम्भवस्य प्रदर्शितत्वात् । नाप्यसम्भवदोषकलुषितमेतल्लक्षणम् । तत्सम्भवसाधकस्य प्रमाणत्वाख्यस्य हेतोः सद्भावात् । तथाहि प्रमाणं स्वपरव्यवसायिज्ञानं प्रमाणत्वात् । यत्पुनः स्वपरव्यवसायिज्ञानं न भवति न तत् प्रमाणं यथा संशयादि घटादि च प्रमाणं च विवादापन्नं ततः स्वपरव्यवसायिज्ञानम् । न च

'स्वपरव्यवसायिज्ञानं प्रमाणमिति सिद्धान्तलक्षणेऽतिव्याप्त्यादिदोषपरिहारः।

प्रमाणत्वमासङ्कम् । प्रमाणसामान्ये सर्वप्रावादुकानां विवादाभावात् । अस्यानभ्युपगमे तु स्वाभिमतानभिमतसाधनदूषणयोरनुपपत्तिः । ननु यदेव प्रमाणं धर्मित्वेनात्र निरदेशि कथं तस्यैव हेतुत्वमुपपन्नमिति चेत् । ननु किमस्य हेतुत्वानुपपत्तौ निमित्तम् । किं धर्मित्वहेतुत्वयोर्विरोधः । किं वा प्रतिज्ञार्थैकदेशत्वम् । यद्वाऽनन्वयत्वम् । तत्राद्यपक्षेऽयमभिप्रायः । धर्माणामधिकरणं धर्म्मी तदधिकरणस्तु धर्म्मः । ततो यद्यत्र प्रमाणं धर्मि कथं हेतुः स चेत् कथं धर्मि हेतोर्धर्मत्वाद्धर्मधर्मिणोश्चैक्यानुपपत्तेः । तदयुक्तम् । विशेषं धर्म्मिणं विधाय सामान्यं हेतुमभिदधतां दोषासम्भवात् । प्रमाणं हि प्रत्यक्षपरोक्षव्यक्तिलक्षणं धर्म्मि । प्रमाणत्वसामान्यं हेतुः । ततो नात्र सर्वथैक्यम् । कथञ्चिदैक्यं तु भवदपि न धर्मधर्मिभावं विरुणद्धि । प्रत्युत तत्प्रयोजकमेव । तदन्तरेण धर्म्मधर्म्मिभावेऽतिप्रसङ्गात् । द्वितीयपक्षेऽपि साध्यधर्मधर्मिसमुदायस्य प्रतिज्ञार्थस्यैकदेशोऽत्र धर्मी हेतुतयोपात्तोऽस्ति । नच तथापि किंचिद् दूषणम् । अन्यथानुपपत्तिश्चेन्निश्चिक्ये तदा प्रतिज्ञार्थैकदेशोऽन्यो वा सर्वो गमक एव । ननु प्रतिज्ञार्थैकदेशोऽपि यदि गमकः स्यात्तदाऽनित्यः शब्दोऽनित्यत्वादिति अयमपि गमकतां कल्पेत् । तदप्यत्याकुलम् । न खलु प्रतिज्ञार्थैकदेशत्वं गमकत्वे कारणमभिदध्महे येनानित्यत्वादेरपि तत्प्रसज्येत । किन्त्वगमकत्वं गमकत्वं वा प्रति तदप्रयोजकमिति ब्रूमः । न हि धूमद्रव्यं धूमध्वजं प्रति गमकमिति गगनाङ्गणोत्संगसङ्गिसमुद्धुररजोराजिरपि द्रव्यत्वसद्भावाद्गमिका भवति । तद्वद्वा धूमद्रव्यमप्यगमकम् । तदिहान्यथानुपपत्तिर्गवेषणीया । सा त्वनित्यत्वे नास्ति । तस्य शब्दे प्रतिवादिनः स्वरूपासिद्धत्वादिति तदेवागमकम् । प्रमाणत्वे पुनरसौ विद्यत इति तद्गमकमेव । तृतीयकल्पेऽपि किं बहिर्व्याप्तिरन्तर्व्याप्तिरुभयी वा तत्र नास्तीत्यनन्वयत्वं स्यात् । नाद्यः पक्षः । सर्वं क्षणिकं सत्त्वादित्यादेरप्यनन्वयत्वप्रसक्तेः । अथास्य दृष्टान्तेऽनन्वयस्यापि साध्यधर्मिणि सर्वत्रान्वयसिद्धेर्विपक्षे बाधकप्रमाणसद्भावाच्च निर्दोषतानुमन्यते । न तर्हि

बहिर्व्याप्तेरभावादनन्वयत्वम् । अन्तर्व्याप्तिस्तु सत्त्वादेरिव प्रमाणत्वस्यापि । साध्यधर्मिणि सर्वत्राऽन्वयसिद्धेः विपक्षे बाधकसद्भावाच्च । एतेन तृतीयपक्षोऽपि प्रतिक्षिप्तः । सर्वथा साधर्म्यविप्रयुक्तत्वात् कथमस्य गमकत्वमिति यौगैरपि न तर्कणीयम् । केवलव्यतिरेकिणोऽपि हेतोरविनाभावनियमनिर्णयेन साध्यसाधनसामर्थ्यसद्भावात् । सात्मकं जीवच्छरीरं प्राणादिमत्त्वात् । यत्तु सात्मकं न भवति तत्प्राणादिमदपि न भवति । यथा कलशः प्राणादिमच्च जीवच्छरीरं तस्मात्सात्मकमित्यादिवत् । अनेन च विरुद्धत्वमनैकान्तिकत्वं च प्रतिक्षिप्तमवगन्तव्यम् । अन्यथानुपपत्तिस्वीकृते हेतौ तयोः पर्वथावकाशाभावात् । तस्मान्निरवद्योऽयं हेतुः प्रमाणस्य स्वपरव्यवसायिज्ञानत्वं साधयत्येव । तथा च नासम्भवदोषदुष्टमप्येतत् प्रमाणलक्षणमिति स्थितम् ।

यत्प्रावादुकलक्षणानि नयते सद्यः कथाशेषता-
मव्याप्तिप्रमुखेण न प्रतिहतं दोषत्रयेणापि यत् ॥
स्याद्वादामृतपानपूतवदनैरभ्यस्यमानं बुधैः ।
सिद्धं सम्प्रति मानलक्ष्म तदिदं श्रीमज्जिनैर्जल्पितम् ॥३५॥ २॥

अथ प्रमाणलक्षणे ज्ञानमिति विशेषणस्य समर्थनार्थमुपपत्तिमाह–

**अभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमं हि प्रमाणमतो ज्ञानमेवेदम् ॥ ३ ॥**

अभिमतमुपादेयम् । अनभिमतं हेयम् । तत् द्वितयमपि द्विप्रकारं मुख्यं गौणं च । तत्र मुख्यमभिमतं सुखम् । तदपि द्विभेदमशाश्वतिकं शाश्वतिकं च । तत्राद्यं बाह्यद्रव्यसम्बन्धापेक्षं सद्वेदाख्यपुण्यकर्म्मविपाकात् प्रादुर्भूतः संसार्यात्मनः प्रसादपरिणामः । शाश्वतिकं तु समस्तकर्म्मक्षयतः[1] समुद्भूतो मुक्तात्मनः परमानन्दपरिणामः । गौणं पुनरभिमताशाश्वतिकशाश्वतिकसुखयोः साधनम् । तत्राशाश्वतिकसुखसाधनं गंधसारघन-

१ 'कर्म्मक्लेशानिर्लेपत' इति प. पुस्तके पाठः ।

सारहारहारिप्रियतमाप्रमुखम् । शाश्वतिकसुखसाधनं तु सम्यग्दर्शनज्ञानचारित्रस्वरूपं रत्नत्रयम्[1] । अनभिमतं तु मुख्यं दुःखम् । तत्पुनरसद्वेद्याभिधानपापकर्मविपाके सति विरोधिद्रव्याद्युपनिपातात्मनः पीडालक्षणः परिणामः। गौणं पुनरनभिमतं दुःखसाधनं विषविषधरमकरकान्ताराक्रूपारप्रभृतिकम् । पुरुषदशादेशकालविशेषाच्च भावानां सुखदुःखसाधनत्वमव्यवस्थितमवधार्यम् । तथाहि यदेव दृढकठिनकलेवरस्य प्रबलजाज्वल्यमानजाठरजातवेदसः कस्यचित्पुंसः सुरभिपरिमलोद्गारसुन्दरसरससहकारफलपटलमुपयुक्तं परमानन्दसम्पदे सम्पद्यते । तदेवानवरतविवर्धमानाविविधव्याधिप्रबन्धविधुरस्याधिकतरमंदीभूतौदर्यज्वलनस्य परस्य प्रौढपीडापरम्पराप्रसूतये प्रभवतीति । यदवाचि । **पंचशतीप्रकरणप्रणयनप्रवीणैरत्र भवद्भिरुमास्वातिवाचकमुख्यैः । ' तानेवार्थान् द्विषतस्तानेवार्थान् प्रलीयमानस्य । निश्चयतोऽस्यानिष्टं न विद्यते किञ्चिदिष्टं वा '** इति[2] । एवंविधयोरभिमतानभिमतवस्तुनोर्यौ स्वीकारतिरस्कारौ प्राप्तिपरिहारौ तयोः क्षमं समर्थं प्रापकं परिहारकं चेत्यर्थः । अभिमतानभिमतयोरुपलक्षणत्वादभिमतानभिमतोभयाभावस्वभाव उपेक्षणीयोऽप्यत्रार्थो लक्षयितव्यः । रागगोचरः खल्वभिमतो द्वेषविषयोऽनभिमतो रागद्वेषद्वितयानालम्बनं तृणादिरुपेक्षणीयस्तस्य चोपेक्षकं प्रमाणं तदुपेक्षायां समर्थमित्यर्थः । तत्र प्रापकत्वं प्रमाणस्याभिमतार्थप्रदर्शकत्वमेव । यतो नार्थदेशं पुरुषं नयत् पुरुषदेशं वार्थमानयत् प्रापकं प्रमाणमपि त्वर्थं प्रदर्शयदिति । अभिमतवस्तुप्राप्तिर्हि न प्रमाणपरतन्त्रा । तस्याः पुरुषाभिलाषनिमित्तकप्रवृत्तिप्रभवत्वात् । न च प्रवृत्तेरभावे प्रमाणस्य वस्तुप्रदर्शकस्वरूपो व्यापार एव न सम्भवतीति विभावनीयम् । अनुभवविरोधात् । न खलु कुमुदबान्धवादौ प्रत्यक्षेण दृष्टेऽप्यप्रवर्त्तमानो लोकस्तस्याप्रदर्शकत्वमिति प्रतिपद्यते । ततः प्रवृत्त्यभावेऽपि प्रमाणस्य वस्तुप्रदर्शकत्वमुररीकर्त्तव्यम् । परिहारकत्वमपि प्रमाणस्याभिमतार्थ-

१ सम्यग्दर्शनज्ञानचारित्राणीति रत्नत्रयम् । २ प्रशमरतिप्रकरणे गाथा ४९ ।

प्रदर्शकत्वमेव । एवमुपेक्षकत्वमपि तस्योपेक्षणीयार्थप्रदर्शकत्वमेव द्रष्टव्यम् । हिशब्दो यस्मादर्थे । यस्मादभिमतानभिमतवस्तुस्वीकार-तिरस्कारक्षमं प्रमाणमत इदं ज्ञानमेव भवितुमर्हति नाज्ञानरूपं सन्निकर्षादि । प्रयोगश्चात्र । प्रमाणं ज्ञानमेव अभिमतानभिमतवस्तुस्वीकार-तिरस्कारक्षमत्वात् । यत्पुनर्न ज्ञानं तन्नाभिमतवस्तुस्वीकारतिरस्कारक्षमं यथा सम्प्रतिपन्नं स्तम्भादि अभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमं च प्रमाणं तस्माद् ज्ञानमेव । न चात्र साधनमसिद्धम् । अभिमतवस्तुस्वीकारार्थमनभिमतवस्तुतिरस्कारार्थं च प्रार्थयन्ते प्रेक्षापूर्वकारिणः प्रमाणं । नतु व्यसनपारवश्यादिति समस्तैरपि प्रमाणवादिभिरभिमतत्वात् ।

अभीप्सितानीप्सितयोः समर्थं प्रदर्शकत्वेन तु भोः प्रमाणम् ॥
सर्वैरभीष्टं घटते न चेदं[1] ज्ञानात्मकत्वं प्रविहाय तस्य ॥ ३६ ॥३॥

उपपत्त्यन्तरमाह—

**नवै सन्निकर्षादेरज्ञानस्य प्रामाण्यमुपपन्नं तस्यार्थान्तरस्येव स्वार्थव्यवसितौ साधकतमत्वानुपपत्तेरिति ॥ ४ ॥**

नवै नैव । सन्निकर्ष इन्द्रियार्थसम्बन्धः स एव आदिर्यस्य कारकसाकल्यवुद्धिवृत्त्यादेस्तत्तथा तस्य । कथंभूतस्य । अज्ञानस्याचैतन्यस्वरूपस्य । प्रामाण्यमर्थयाथात्म्यव्यवस्थापित्वम् । उपपन्नं युक्तियुक्तम् । कुतः । तस्य सन्निकर्षादेः । अर्थान्तरस्येवेति अर्थः सन्निकर्षादिस्तस्मादन्यः प्रमेयो घटादिरर्थान्तरं तस्येव । स्वार्थव्यवसितौ स्वार्थयोः स्वपरयोर्व्यवसितिर्निश्चितिस्तस्यां कर्तव्यायामित्यर्थः । साधकतमत्वस्य करणत्वस्य । अनुपपत्तेः अघटनात् । अयमत्र समुदायार्थः । यथा सम्प्रतिपन्नस्य घटादेरर्थान्तरस्याज्ञानस्वभावस्य स्वार्थव्यवसितौ साधकतमत्वाभावात् प्रामाण्यं नोपपद्यते । तथा सन्निकर्षादेरपि प्रयोगः

१ ' चेह ' इति प. पुस्तके पाठः ।

पुनरेवं विरचनीयः । सन्निकर्षादिर्न प्रमाणव्यवहारभाक् स्वार्थव्यवसितावसाधकतमत्वात् । यत् स्वार्थव्यवसितावसाधकतमं न तत् प्रमाणव्यवहारभाग् यथोभयसम्प्रतिपन्नं घटादि । स्वार्थव्यवसितावसाधकतमश्च सन्निकर्षादिस्तस्मान्न प्रमाणव्यवहारभाक् ॥ ४ ॥

साम्प्रतमस्य हेतोरसिद्धतापरिहारार्थं सूत्रद्वयमाह—

**न खल्वस्य स्वनिर्णीतौ करणत्वं स्तम्भादेरिवाचेतनत्वादिति ॥ ५ ॥**

**नाप्यर्थनिश्चितौ स्वनिश्चितावकरणस्य कुम्भादेरिव तत्राप्यकरणत्वादिति ॥ ६ ॥**

अस्येति सन्निकर्षादेः । स्वनिर्णीताविति स्वव्यवसितौ । अचेतनत्वादिति अचिद्रूपत्वात् । नाप्यर्थनिश्चिताविति अस्य करणत्वमिति प्राक्तनेन सम्बन्धः । तत्रापीति अर्थनिश्चितावपि, शेषं तु व्यक्तम् । प्रयोगयुगलं पुनरित्थमिहोपन्यसनीयम् । सन्निकर्षादिः स्वनिर्णीतौ करणं न भवति अचेतनत्वात् य इत्थं स इत्थं यथा स्तम्भादिस्तथा चायं तस्मात्तथा । सन्निकर्षादिरर्थनिश्चितौ करणं न भवति स्वनिश्चितावकरणत्वात् य एवं स एवं यथा कुम्भादि । यथोक्तसाधनसम्पन्नश्चायं तस्माद्यथोक्तसाध्य इति । एवं च ।

न सन्निकर्षप्रमुखं प्रमाणमज्ञानरूपं घटते कथंचित् ॥
न मुख्यतो यत्करणत्वमस्य वस्तुप्रमायां घटते कथंचित् ॥ २७ ॥

सन्निकर्षादिर्न प्रमाणव्यवहारभागिति नैयायिकमतपरीक्षणम् ।

अत्राहुर्नैयायिकाः यदभाषि सन्निकर्षादिर्न प्रमाणव्यवहारभागित्यादि तत्रादिशब्दसूचितकारकसाकल्यादीनां प्रमाणव्यवहारपराकरणे वयमपि सहायाः । सन्निकर्षस्य तु तत्पराकरणं न क्षमामहे । स्वव्यवसितावसाधकतमत्वासिद्धावप्यर्थव्यवसितावसाधकतमत्वस्य हेत्वेकदेशस्यासिद्धत्वात् ।

यत्पुनरनुमानं तत्सिद्धावभ्यधायि । सन्निकर्षादिरर्थानिश्चितौ करणं न भवति स्वनिश्चितावकरणत्वादिति । तत्रार्थनिश्चितेस्तावदावाभ्यामविवादेन फलत्वं प्रतिपन्नम् । तच्च सन्निकर्षस्य करणता समस्तप्रतिपत्तृसाक्षिकं समर्पयतीति कथमकितवः कश्चित्तस्य तदपलापं विदधीत । तथाहि न फलं किञ्चित्करणमन्तरेणोत्पद्यमानमीक्ष्यते । न चात्र प्रमाता प्रमेय वा करणतया कल्पनीयम् । कर्तृकर्म्मतया तयोर्व्यवस्थितत्वात् । तस्माद्दारुद्वैधीभावस्वभावे फले परश्वधादिवदर्थनिश्चितिरूपे फले सन्निकर्ष एव करणम् । तस्यैव तत्र घटमानत्वादित्यनुमानवाधितः पक्षः । हेतोश्चात्र प्रदीपेन व्यभिचारः । तस्य स्वनिश्चितावकरणस्याप्यर्थनिश्चितौ करणत्वात् । तथा चाहुर्लौकिकाः प्रदीपेन पन्थानं पश्याम इति । एवं च सन्निकर्षस्य करणत्वप्रतिषेधानुपपत्त्यार्थव्यवसितावसाधकतमत्वस्यासिद्धेर्लब्धावकाशमिदम् । सन्निकर्षः प्रमाणमर्थप्रमितौ साधकतमत्वाद्यत्तु नैवं तन्नैवं यथा सम्प्रतिपन्नम् । न च नार्थप्रमितौ साधकतमः सन्निकर्षः । तस्मात्तथा । ननु सन्निकर्षप्रसिद्धौ किं प्रमाणं यतो नाश्रयासिद्धता हेतोः स्यादिति चेत् । उच्यते । स्पर्शनादीन्द्रियेषु सन्निकर्षस्तावदविवादसिद्धस्तेषामसन्निकृष्टानुपलम्भकत्वात् । लोचन एव त्वावयोर्विप्रतिप्रत्तिः । सापि वाह्येन्द्रियत्वादिना साधनेन स्पर्शनादिवच्चक्षुषः प्राप्यकारित्वसिद्धया निरस्तावकाशैवेति सिद्धः सन्निकर्षः । स चैवं प्रमाणप्रतिपन्नस्वरूपः सन्निकर्षः षोढा । संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, उक्तसम्बन्धसम्बद्धवस्तुविशेषणविशेष्यभावश्चेति । तत्र द्रव्यं चक्षुषा त्वगिन्द्रियेण च संयोगात् गृह्यते, द्रव्यसमवेतानि गुणकर्म्मसामान्यानि संयुक्तसमवायात् गृह्यते, गुणकर्मसमवेतानि सामान्यानि संयुक्तसमवेतसमवायादववुद्धयन्ते, चक्षुषा हि संयुक्तं द्रव्यं तत्र समवेतानि गुणकर्म्माणि गुणकर्मसु च समवेतानि तत्सामान्यानीति समवायाच्छब्दः परिच्छिद्यते, विशिष्टादृष्टाधिष्ठितः कर्णशष्कुल्यवच्छिन्नो व्योमद्रव्यैकदेशो

हि श्रोत्रम्, तत्र च समवेतः शब्दः अम्बरगुणः शब्द इति सिद्धान्तात्। शब्दत्वसामान्यं समवेतसमवायादवसीयते श्रोत्राकाशसमवेते शब्दे तद्धि समवेतमिति । उक्तसम्बन्धसम्बद्धवस्तुविशेषणविशेष्यभावादभावः समवायश्च निश्चीयते । तद्यथा । संयुक्तविशेषणत्वादभावग्रहणमफलवती शाखेति । चक्षुषा हि संयुक्ता शाखा तस्या विशेषणं फलाभावः । एवमघटं भूतलमित्यादीन्यप्यत्रोदाहरणानि द्रष्टव्यानि संयुक्तविशेष्यत्वादिह शाखायां फलाभाव इति । संयुक्तसमवेतविशेषणत्वात् पटगतः शुक्लगुणो रूपशून्य इति संयुक्तसमवेतविशेष्यत्वादिह शुक्लगुणे रूपाभाव इति । संयुक्तसमवेतसमवेतविशेषणत्वात् गुणगतं सामान्यं सामान्यान्तरशून्यमिति । संयुक्तसमवेतसमवेताविशेष्यत्वादिह गुणगतसामान्ये सामान्यान्तराभाव इति । समवेतविशेषणत्वात् गुणशून्योऽयं शब्द इति । समवेतविशेष्यत्वादिह शब्दे गुणाभाव इति । समवेतसमवेतविशेषणत्वाच्छब्दत्वादिसामान्यं सामान्यान्तरशून्यमिति । समवेतसमवेताविशेष्यत्वादिह शब्दत्वादिसामान्ये सामान्यान्तराभाव इति। एवं[2] समवायस्यापि यथासम्भवमुदाहरणानि दर्श्यन्ते । तद्यथा संयुक्तविशेष्यत्वात् समवायस्य ग्रहणम् । इह पटे रूपसमवाय इति । संयुक्तविशेषणत्वाद्रूपसमवायवानयं पट इति । संयुक्तसमवेतविशेष्यत्वादिह गुणे जातिसमवाय इति । संयुक्तसमवेतविशेषणत्वाज्जातिसमवायवानयं गुण इति । संयुक्तसमवेतसमवेते गुणगतजातिविशेषेऽधिकरणभूते वस्त्वन्तरसमवायाभावात् संयुक्तसमवेतसमवेतविशेष्यत्वविशेषणत्वाभ्या समवायस्य ग्रहणोदाहरणे न सम्भवतः । समवेतविशेष्यत्वादिह शब्दे शब्दत्वादिजातिसमवाय इति । समवेतविशेषणत्वादिह जातिसमवायवानयं शब्द इति । समवेतसमवेते शब्दत्वादिसामान्ये वस्त्वन्तरसमवायस्याभावात् समवेतसमवेतविशेष्यविशेषणनिबन्धनं समवायग्रहणं नास्ति तस्मादितः परमिहापि

२ ' एव ' इति नास्ति प. पुस्तके ।

श्रोत्रेन्द्रियसम्बन्ध उदाहर्त्तुं न शक्यते । ततः समवायस्य क्वचिदेवोदाहरणं सम्भवति नाभावस्यैव पंचस्वपि सम्बन्धेष्विति षोढा सन्निकर्षः। तत्र बाह्ये विषये रूपादौ चतुष्टयसन्निकर्षाज्ज्ञानं समुत्पद्यते आत्मा मनसा युज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति , सुखादौ तु त्रयसन्निकर्षाज्ज्ञानमुत्पद्यते तत्र चक्षुरादिव्यापाराभावात् । आत्मा मनसा संयुज्यते मनोलक्षणं चेन्द्रियं सुखादिना संयुक्तसमवायेन सम्बध्यते मनसा संयुक्त आत्मा तत्र समवेतं सुखादिकमिति । आत्मनि तु योगिनां द्वयोरात्ममनसोरेव संयोगादुत्पद्यते ज्ञानमिति । सोऽयं प्रत्यक्षज्ञानं प्रति सन्निकर्षः प्रोक्तः । अनुमानादिकं तु प्रति द्वयोरेवात्ममनसोः सन्निकर्ष इति ।

तदित्थमर्थप्रमितिप्रसिद्धये न सन्निकर्षः करणं न युज्यते ॥
तत्र प्रमाणत्वममुष्य मन्यता विमुच्य मात्सर्यमकार्यचेष्टितम् ॥३८॥
इत्यक्षपादानुगतैः प्रमाणमाख्यायि यः षड्विधसन्निकर्षः ॥
स्याद्वादसान्द्रामृतपानशौण्डैः संयुज्यते नैव विचार्यमाणः ॥ ३९ ॥

तथाहि यत्तावदर्थव्यवसितावसाधकतमत्वादिति हेत्वेकदेशासिद्धताविध्वंसकानुमानेन तस्माद्दारुद्वैधीभावस्वभावे फले परश्वधादिवदर्थनिश्चितिरूपे फले सन्निकर्ष एव करणं तस्यैव तत्र घटमानत्वादित्यवादि तन्नावदातम् । तस्यैवेत्यादिहेतोरसिद्धत्वात् । सन्निकर्षातिरिक्तस्य भावेन्द्रियविशेषस्यैव करणत्वेन तत्र घटमानत्वात् । इह खलूभयं भावेन्द्रियं लब्धिरुपयोगश्च, 'लब्ध्युपयोगौ[३] भावेन्द्रियम्' इति वचनात् । तत्रार्थग्रहणशक्तिर्लब्धिः । तन्निमित्त आत्मव्यापारपरिणामविशेष उपयोगः । तच्च द्वयमप्यात्मनः फले योग्यत्वाद्व्याप्रियमाणत्वाच्च प्रसिद्धम् । तदुक्तम् ।

'[४]भावेन्द्रियाणि लब्ध्यात्मोपयोगात्मानि जानते ।
स्वार्थसंविदि योग्यत्वाद्व्यापृतत्वाच्च संविदः ॥ १ ॥'

१ 'वशस्थम्' २ 'स' इति प. पुस्तके पाठः । ३ तत्त्वार्थसू. २–१८. ४ तत्त्वार्थश्लोकवार्तिके २–१८ श्लो. १ ।

संविद इति संविदात्मा तस्य। तथाहि लब्धिस्वभावं भावेन्द्रियं स्वार्थसंविदि योग्यत्वादात्मनः सतः प्रतिपद्यते। नहि तत्रायोग्यस्यात्मनस्तदुत्पत्तिराकाशवत्। स्वार्थसंविद्योग्यतैव च लब्धिः। एतच्चेन्द्रियमत्रानौपयिकमुपयोगरूपस्यैव तस्य प्रस्तुतोपयोगित्वात्तस्यैव प्रमितौ साधकतमत्वात्। तत्पुनरात्मनो व्यापारमन्तरेण स्वार्थसंविदोऽनुपपत्तेः प्रतीयते। नह्यव्यापृत आत्मा स्पर्शादिप्रकाशको भवितुमर्हति। सुषुप्तस्यापि तत्प्रसङ्गात्। नच सुषुप्तावस्थायां स्पर्शनादीन्द्रियसन्निकर्षाभावादेव न तत्प्रसङ्ग इति जल्पनीयम्। अतिमसृणतूलिकाताम्बूलमालतीमांसलामोदसुन्दरगेयशब्दादिसान्निकर्षस्य स्पर्शनादीन्द्रियाणां तदानीमपि भावात्। नापि मनसस्तदानीमिन्द्रियसन्निकर्षाभावात्तदप्रसङ्गः। त्वदुक्तस्याणुपरिमाणस्य मनसो निरासेनाशेषात्मप्रदेशव्यापिनः पौद्गलिकस्य तस्य व्यवस्थापयिष्यमाणत्वादिन्द्रियैः संयोगासिद्धेः। न चात्मनो व्यापकत्वेन व्यापाराभावः। परिस्पन्दात्मकस्यैव तस्य ततस्तत्राभावसिद्धेः। ज्ञानरूपस्य तु तस्य तद्विलक्षणत्वात्। न च हेतुरप्यत्र सिद्धः। आत्मनि व्यापकत्वस्य व्याहतत्वेन निर्देक्ष्यमाणत्वात्। यदि वा आत्मा कंचन व्यापारं विनैव प्रमितिप्रारंभप्रागल्भ्यमभ्यस्येत् तर्हि कारकान्तरमपि निर्व्यापारमेव स्वस्वकार्योपार्जनचर्यता[1]माविश्रीत। तथा च यावत्सत्त्वं कुठारादिच्छेदनं कुर्यात् ततोऽस्ति कश्चिदात्मनः प्रमितौ व्यापारः। इतोऽप्यस्ति यदसन्निधाने कारकान्तरसन्निधानेऽपि यन्नोत्पद्यते तत्तत्करणम्। यथा परश्वधासन्निधाने व्रश्चनादिसन्निधाने दारुदारणमनुत्पद्यमानं परश्वधकरणकम्। नोत्पद्यते च प्रस्तुतेन्द्रियासन्निधानेऽर्थसंवेदनमुपकरणसद्भावेऽपि। न चात्र हेतोरसिद्धिः। अतिकर्कशतर्कशास्त्रपरामर्शैकतानस्य प्रमातुः पुरःपरिचलदचलशिखरानुकारिकुञ्जै[3]रकुञ्जरेणेन्द्रियसन्निकर्षसम्भवेऽपि प्रस्तुतेन्द्रियासान्निधाने तद्गोचरपरिच्छेदानुत्पादात्।

---

१ 'वर्धताम्' इति म. पुस्तके पाठः। २ 'अपि' इत्यधिकं प. म. पुस्तकयोः। ३ 'कुञ्जर' इति नास्ति प. पुस्तके।

इन्द्रियमनःसन्निकर्षोऽपि च तत्र पूर्ववत् प्रकटनीयः । नन्वेवमप्युपयोगस्य त्वन्मतेन कर्तुरभेदात् स एव कर्त्ता तदेव करणमित्यायातमेतच्च विरुद्धमित्यलमेनं दुःशिक्षितक्षत्रियपुत्रमिव स्वजनकविरोधदायिनं स्वीकृत्येति चेत् तदनिपुणम् । परिणामपरिणामिनोर्भेदविवक्षायां तदभिधाने विरोधासम्भवात् । ज्ञानपरिणामो हि करणमात्मनः कर्तुः कथञ्चिद्भिन्नम् । अन्यथा स्वप्रज्ञयैव शास्त्रसंदर्भगर्भमेनमवैमीति विभक्तकर्तृकरणनिर्देशानुपपत्तेः ।

ज्ञानात्मनोः कथञ्चिद्भेदस्याभेदस्य च सिद्धिः।

स्यान्मतं ज्ञानमात्मनः सर्वथाभिन्नं गुणत्वात्सुखादिवदिति चेत् तदयुक्तम् । हेतोः कालात्ययापदिष्टत्वात् । प्रत्यक्षतो ज्ञानकरणस्यात्मनः कर्तुः कथञ्चिदभिन्नस्य प्रतीतेः संवद्धत्वात् । तत्र तथाप्रतीतिरिति चेत् ननु न तावत्संयोगः । सम्बन्धः । तस्य गुणत्वेन द्रव्यमात्रवृत्तितया गुणरूपे ज्ञाने सम्भवाभावात् । संयोगाच्च तथाप्रतीतिस्वीकृतौ कोपाटोपसंघटमानमेषयुग्मेऽप्यसौ स्यात् । समवायः पुन कथञ्चित्तादात्म्यादपरः कश्चिन्नास्त्येव । तथाहि यद्यसौ समवायिभ्यः सर्वथा भिन्नः । तर्हि कथं तेषां सम्बन्धिनामियं संबन्ध इति व्यपदिश्येत । सम्बन्धान्तराच्चेत् तदपि यदि सम्बन्धिभ्यः सर्वथा पृथक् तर्हि तस्यापि तत्सम्बन्धित्वे किं नाम निमित्तम् । यदि सम्बन्धान्तरमेव ब्रुवीथाः तर्हि कतमामातिथेयीमनवस्थादौस्थ्यातिथये समुपस्थिताय कुर्वीथाः । सुदूरमपि गत्वा यदि सम्बन्धसम्बन्धिनोः कथञ्चिदैक्यमाख्यायते तदा समवायसमवायिनोरपि तदिष्यताम् । तथाच सिद्धं ज्ञानात्मनोरपि कथञ्चित्तादात्म्यम् । समवायिभ्यामभिन्नस्य समवायस्यैव तत्त्वादिति ज्ञानात्मनोः कथञ्चिदभेदप्रतीतेः कालात्ययापदिष्टो हेतुः । दृष्टान्तश्च साध्यविकलः

---

१ 'तस्य' इत्यधिकं प. पुस्तके । २ 'नित्यः शब्दोऽमूर्तत्वाद्दुःखवदिति' साध्यधर्मविकलदृष्टान्तः ( प्र. ला. ६-६०

सुखादेरप्यात्मनः कथञ्चिदभेदसिद्धेः । ततः सिद्धं ज्ञानं करणमात्मनः कथञ्चिद्भिन्नम् ।

ज्ञानस्याथ प्रमाणत्वे फलत्वं कस्य कथ्यते ।
स्वार्थसंवित्तिरस्त्येव ननु किं न विलोक्यते ॥ ४० ॥
स्यात्फलं स्वार्थसंवित्तिर्यदि नाम तदा कथम् ।
स्वपरव्यवसायित्वं प्रमाणे घटनामियात् ॥ ४१ ॥

उच्यते–

स्यादभेदात्प्रमाणस्य स्वार्थव्यवसितेः फलात् ॥
नैव ते सर्वथा कश्चिद्दूषणक्षण ईक्ष्यते ॥ ४२ ॥
आश्चर्यमाश्चर्यमहो तदेतद्विलोक्यतां **शुक्लपटाङ्कितानाम्** ॥
ज्ञानं यदेकं नितरां विरुद्धप्रमाप्रमाणत्वपद वदन्ति ॥ ४३ ॥

अत्रोच्यते–

आश्चर्यमाश्चर्यमहो तदेतद्विलोक्यतां **भस्मकणाङ्कितानाम्**
कथञ्चिदेकत्र मतौ वदन्ति प्रमाप्रमाणत्वविरुद्धतां यत् ॥४४॥

ज्ञानात्मनोर्भेदस्याभेदस्य वा एकान्तस्य स्वीकरणमसङ्गतम् ।

यदि हि तदेकान्तेनैकरूपमुपेयेमहि, यदि च येनैव रूपेण प्रमाणं तेनैव वा फलं येनैव फलं तेनैव वा प्रमाणमाचक्षीमहि, तदा स्यादेव विरोधसम्चन्धदुर्गन्धता । न चैवम् तस्यानैकान्तात्मकत्वेनैव कक्षीकारात् । आत्माऽनेन जानातीति साधकतमस्वभावेन ज्ञाने प्रमाणत्वव्यपदेशाज्ज्ञप्तिक्रियारूपतया तु फलत्वाभिधानस्य स्वीकाराच्च । यथा प्रदीपः प्रकाशात्मना प्रकाशयतीत्यत्र साधकतमः प्रकाशात्मा करणं क्रियात्मा फलमिति । सप्रपञ्चं चैतत् पुरस्तात् प्रपञ्चयिष्यते । तदित्थमुपयोगात्मकं भावेन्द्रियमेव प्रमितौ साधकतमत्वेन घटते न सन्निकर्षः ।

लब्धीन्द्रियं प्रमाणमिति केषाचिन्मतस्य खण्डनम्।

केचित्तु 'ततोऽर्थग्रहणाकारा शक्तिर्ज्ञानमिहात्मनः । करणत्वे विनिर्दिष्टा न विरुद्धा कथञ्चन ॥ १ ॥' इति परमार्थतो भावेन्द्रियस्यैवार्थग्रहणशक्तिलक्षणस्य साधकतमतया करणताध्यवसायादिति च ब्रुवाणा लब्धीन्द्रियं प्रमाणं समगिरन्त, तन्न समगंस्त । उपयोगात्मना करणेन लब्धेः फले व्यवधानात् । सन्निकर्षादिवदुपचारत एव प्रमाणतोपपत्तेः ।

किञ्चेयं यदि ज्ञानशक्तिः प्रत्यक्षा कक्षीक्रियते तदा शक्तीनां परोक्षत्वसमर्थनमनवसरमेव जैनानां भवेत् । अथाप्रत्यक्षासौ, तदा तस्याः करणज्ञानत्वे प्रभाकरमतापत्तिः । तत्र करणज्ञानस्य परोक्षत्वव्यवस्थितेः फलज्ञानस्य च प्रत्यक्षतोपगमात् । ततः प्रत्यक्षं करणमिच्छता न तच्छक्तिरूपमेषितव्यं स्याद्वादिना । अथ न जैनानामेकान्तेन किञ्चित् प्रत्यक्षमप्रत्यक्षं वा । तदिह द्रव्यार्थतः प्रत्यक्षा ज्ञानशक्तिः । पर्यायार्थवस्तु परोक्षा । अयमर्थः–स्वपरपरिच्छित्तिरूपात्फलात् कथञ्चिदपृथग्भूते आत्मनि परिच्छिन्ने तथाभूता तज्जननशक्तिरपि परिच्छिन्नैवेति । नन्वेवमात्मवर्त्तिनामतीतानागतवर्त्तमानपर्यायाणामशेषाणामपि द्रव्यार्थतः प्रत्यक्षत्वाद्यथा ज्ञानं स्वसंविदितमेवं तेऽपि स्वसंविदिताः किं न स्युः । तथाच बौद्धान् प्रति सुखादीनां स्वसंविदितत्वप्रतिषेधप्रयासो निःसार एव स्यात् । तदिह यत् स्वयमात्मानं वेत्ति तत् स्वसंविदितमुच्यते । उपयोग एव च तादृशो न शक्तिः सुखादयश्च । शक्तिर्हि द्रव्याधिगमद्वारग्रहणा सुखादयः पुनरुपयोगाख्यपर्यायान्तरसमधिगम्याः । किञ्च यदि द्रव्यार्थतः प्रत्यक्षत्वात् स्वसंविदिता ज्ञानशक्तिः। तदाऽहं घटज्ञानेन घटं जानामीति करणोल्लेखो न स्यात् । नहि कलशसमाकलनवेलायां द्रव्यार्थतः प्रत्यक्षत्वेऽपि प्रतिक्षणपरिणामिनामतीतानागतानां च कुशूलकपालादीनामुल्लेखोऽस्ति । तत उपयोग एव साधकतमः प्रत्यक्षेऽपि प्रमां प्रतीत्यासिद्धः । तस्यैव तत्र घटमानत्वादिति । यदपि प्रदीपेन व्यभिचारोद्भावनमकारि तदप्यचारु । यतः

प्रदीपस्य पदार्थपरिच्छित्तौ करणत्वं मुख्यत उपचारतो वा स्वीक्रियते। न तावन्मुख्यतः। प्रदीपस्य नयनमनोरूपमुख्यकरणसहकारितयोपचारत एव करणत्वव्यवहारात्। अथोपचारत एव करणत्वमस्येष्यते। नास्ति तर्हि व्यभिचारः। यथाह्यर्थपरिच्छित्तौ करणत्वमस्योपचारतः समस्ति तथा स्वपरिच्छित्तावपि तद्विद्यत एव। नयनादेरर्थसंवेदनमिव प्रदीपसंवेदनमप्युपजनयतः प्रदीपस्य सहकारित्वाविशेषेणार्थप्रकाशनवत् स्वप्रकाशनेऽपि करणतोपचारव्यवस्थितिः। नयनादिनाऽनेकान्त इत्यपि न कान्तम्। यतस्तेनापि द्रव्येन्द्रियरूपेण भावेन्द्रियरूपेण वाऽनेकान्तः स्यात्। न तावदाद्येन। तस्य भावेन्द्रियोपकरणरूपस्योपचारेणैव करणत्वात्। नापि द्वितीयेन तस्यापि लब्ध्यात्मन उपयोगात्मकभावकरणकारणत्वेन करणत्वव्यवहारात्। उपयोगात्मकस्य तु तस्यार्थपरिच्छित्ताविव स्वपरिच्छित्तावपि करणत्वसद्भावात्। न चैतादृशमिन्द्रियमसिद्धम्। अनन्तरमेव प्रसाधितत्वात्। ततो न नयनादीन्द्रियेणापि स्वनिश्चितावकरणत्वादिति हेतोरनेकान्तः। एवं च सन्निकर्षे करणत्वप्रतिषेधस्य प्रतिषेद्धुमशक्यत्वात् स्वपरव्यवसायिज्ञानस्य करणतयोपपादितत्वाच्च सन्निकर्षः प्रमाणमर्थप्रमितौ साधकतमत्वादित्यत्र हेतोरसिद्धिः सिद्धा भवति। अपि च यत्र प्रमात्रा व्यापारिते सत्यवश्यं कार्यमुपजायते तदन्तरेण तु नोपजायत एव तत्तत्र साधकतममिति व्यपदिश्यते यथा च्छिदायां दात्रादि।

आकाशादौ नयनसंनिकर्षस्य सत्त्वेऽपि प्रत्यक्षानुत्पत्तेर्न तस्य साधकतमत्वाभ्युपपादनम्।

न च नयननभःसन्निकर्षसद्भावेऽपि संवेदनं कदाचिदाकाशगोचरमुन्मज्जति। ततः कथं सन्निकर्षः क्वचिदपि ज्ञाने साधकतमतया व्यपदिश्येत। न च नभसि नयनसन्निकर्ष एव नास्तीति वक्तव्यम्। अन्यतरकर्मजस्य संयोगस्य तत्र सद्भावात्। अन्यथा समस्तमूर्तद्रव्यसंयोगाद्गगनसर्वगतत्वसाधनविरोधात्। अथाभिधीयते वियति विलोचनसन्निकर्षस्य योग्यतावियोगान्न ज्ञानोत्पत्तिः। ननु किमिदं यो-

तानामधेयं तत्त्वमिष्टमायुष्मतः । शक्तिरिति चेत् सा तर्हि सहकारिसान्निध्यस्वरूपैवात्र स्वीकर्त्तव्या । स्वरूपशक्तेः सन्निकर्षे सत्त्वात् । तस्यां च वक्ष्यमाणकारकसाकल्यपक्षानिक्षिप्तसमस्तदोषानुषङ्गः । सहकारिसान्निध्यस्य कारकसाकल्यान्नाममात्रेण भिन्नत्वात् । किञ्च किमत्र द्रव्यं गुणः कर्म पदार्थधर्मः कश्चिदभावो वा सहकारितया कथ्येत । द्रव्यं चेत् । व्यापकमव्यापकं वा । व्यापकं तावदात्मादि चक्षुरन्तरिक्षसन्निकर्षस्य सहकारि समस्त्येव । अव्यापकमपि तन्मनो नयनमालोको वा कलशचक्षुःसन्निकर्षस्येव तत्सन्निकर्षस्य सहकारि विद्यत एव ।

गुणसहकारित्वपक्षस्य खण्डनम् ।

गुणोऽपि प्रमातृगतः प्रमेयगत इन्द्रियगतो वा तत्सहकारी स्यात् । यदि प्रमातृगतः सोऽपि धर्मविशेषोऽन्यो वा । धर्मविशेषस्तावद्विद्यत एव । न खलु गगननयनसन्निकर्षस्य धर्मविशेषेण सह विरोधो येन तत्सद्भावे धर्मविशेषस्यानुत्पादः प्रध्वंसो वा भवेत् । विरोधे वा कुम्भाद्युपलम्भोऽपि न कदाचिदुत्पद्येत । विरोधिगगननयनसन्निकर्षस्य सदा सद्भावेन तदुत्पत्तिसहकारिणो धर्मविशेषस्यासम्भवात् । अथ गगनगोचरज्ञानोत्पादकेनैवधर्म्माविशेषेण व्योमनयनसन्निकर्षस्य विरोधो न पुनः कुम्भादिविषयविज्ञानोत्पादकेनेति वियद्गोचरस्यैवोपलम्भस्याभावो नतु कुम्भादिविषयस्येति । ननु कुत एतन्निश्चितम् । नयनगगनसन्निकर्षसद्भावेऽपि गगनगोचरस्यैव ज्ञानस्यानुत्पत्तेरिति चेत् । मैवम् । किमियं तदुत्पादकधर्म्माविशेषाभावाद्वियद्विषयकविज्ञानस्यानुत्पत्तिरुताहो तस्य साधकतमत्वाभावादिति न[1] तदनुत्पत्तिः[2] सन्दिग्धाऽनैकान्तिकत्वकलङ्कितत्वात् । अपरोऽपि प्रयत्नादिः प्रमातृगुणस्तत्सहकारी न नाम[3] नास्ति । अथ प्रमेयगतो गुणः सान्निकर्षसहकारी स्वीक्रियते । नन्वसावपि समस्त्येव । व्योमनयनसान्निकर्षे द्रव्यत्वेन व्योम्नो गुणसङ्गित्वात् । अथ न गुण इत्येव सहकारी किन्तु गुणविशेषः । स किं महत्त्वं रूपमुभयं वा ।

---

१ 'न' इति नास्ति म. प. पुस्तकयोः । २ 'तदनुत्पत्तेः' इति प. म. पुस्तकयोः पाठः । ३ ' न नानाऽस्ति-' इति प. पुस्तके पाठः ।

महत्त्वं तावद्व्योम्नि परमप्रकर्षपर्यन्तप्राप्तं सन्निकर्षसहकारि समस्त्येवेति सुतरां तदुपलब्धिः स्यात् । रूपमपि यत्र द्रव्ये समवेतं तस्यैवोपलब्धौ सन्निकर्षसहकारि स्यात् । तद्वर्त्तिनामन्येषामपि द्रव्यत्वादीनां वा । आद्यभेदे सामान्यादीनां कथं कदाचिदप्युपलब्धिः । तेषामद्रव्यत्वेन रूपसमवायासम्भवात् । यत्र द्रव्ये समवेतं रूपं तद्वर्त्तिनामन्येषामपि द्रव्यत्वादीनामुपलब्धौ सन्निकर्षसहकारि तदिति पक्षेऽपि कथं क्वापि रूपस्योपलम्भः । नहि तत्र रूपान्तरमस्ति । यत्तदुपलब्धौ सहकारि स्यात् । यावत् द्रव्यभाविसमानजातीयगुणद्वयस्य युगपदेकत्र त्वयानभ्युपगमात् । न च तदेव रूपं स्वोपलब्धौ सहकारीति वक्तव्यम् । एवं विहायसोऽपि नयनसन्निकर्षे सहकारित्वप्रसङ्गेनोपलम्भो भवेत् । रूपमपि हि रूपान्तरमन्तरेणैव स्वरूपमात्रेण स्वोपलब्धिं विधत्ते । तच्चान्तरिक्षेऽप्यक्षुण्णमस्त्येव । किञ्च यदि रूपं तत्सहकारि कथन्तर्हि पार्थिवादिपरमाणौ रूपवत्यपि नोपलब्धिः । अथ महत्त्वं रूपं चेत्युभयमपि तत्सहकारि न च परमाणौ तदस्ति । सत्यपि तत्र रूपमात्रेऽनुपचरिताणुपरिमाणाधिकरणत्वेन महत्त्वशून्यत्वात् । तथा च सूत्रम् । '**महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः**' इति । तदपि विचारासहम् । महतो रूपवतोऽपि सन्तप्तपयोवर्त्तिनस्तेजोवयविनः सत्यपीक्षणरश्मिसन्निकर्षेऽनुपलम्भात् । अथ न महत्त्वसहचरितं रूपमात्रमेव सन्निकर्षसहकारि किन्तूद्भूतरूपं न च तन्नीरवर्त्तिनि तेजसि समस्तीति कौतस्कुती तदुपलब्धिः । तदपि नोपपन्नम् । महत उद्भूतरूपस्य परिकरितनेत्रगोलकस्य तिमिरादिरोगावयविनो विद्यमानेऽपि नेत्ररश्मिसन्निकर्षेऽनुपलम्भात् । न च तत्र रश्मिसन्निकर्ष एव नास्तीति वक्तव्यम् । तेनासंयुक्ताना तेषां कुम्भादिभावप्रकाशनाय बहिर्निःसरणासम्भवात् । न खलु स्वच्छसूर्यकान्तशिलासङ्घातघटितभित्त्या संसर्गमनासाद्य चक्षूरश्मयस्तत्परभागभागिनो भावानवभासयन्ति । भित्त्यनवभासप्रसङ्गात् ।

---

१ 'सन्निकर्ष' इत्यधिकं प. भ. पुस्तकयोः ।

न च तिमिरे सति रश्मिप्रसरणमेव नास्तीति वाच्यम् । दूरासन्नतिमिरयोः सतोर्दूरासन्नवर्तिवस्तूपलम्भस्याभावप्रसक्तेः। तन्न प्रमेयगतोऽपि गुणः सन्निकर्षसहकारी । नापीन्द्रियगतः । तस्य कलशादिवाद्वियत्यपि चक्षुःसन्निकर्षसहकारिणः सद्भावात् । तद्गुणस्य गगनेनाविरोधात्। विरोधे वा तस्य सदा सत्त्वेन लोचने कदाचिदपि गुणानुत्पत्त्या रूपमात्रोपलम्भस्याप्यभावात्कष्टमिदानीमस्तमितस्त्रैलोक्यां प्रकृतिप्रसन्नसज्जनवदनारविन्दावलोकनमहोत्सवः । तन्न गुणोऽपि तत्सहकारी ।

कर्म पदार्थधर्मोऽभावो वा सन्निकर्षसहकारीति पक्षस्य खण्डनम् ।

नापि कर्म । तस्योन्मीलनादेर्विलोचनगतस्य तत्रापि सम्भवात् । विषयगतस्य तूपलब्धिं प्रत्यनङ्गत्वात् । अन्यथा स्थिरपदार्थानां कथमुपलम्भो भवेत् । अथ पदार्थधर्मः कश्चित्सहकारी सोऽपि न नाम नयनगगनसन्निकर्षे नास्ति । प्रमातृस्थस्य सन्तृप्तत्वादेरिन्द्रियस्थस्य नैर्मल्यालोकसहकृतत्वादेर्विद्यमानत्वात् । प्रमेयस्थोऽपि दृश्यस्वभावतारूपोऽसौ नभसि सम्भवत्येव । कथमन्यथा शूलिनस्तदुपलम्भः । विरूपाक्षापेक्षया दृश्यस्वभावताधर्मादपर एवायमस्मादृक्षापेक्षया । नचासौ नभसि विद्यत इति कुतस्तदुपलब्धिरिति चेत् । तर्कि त्वादृशो यदि कदाचिद्योगित्वमापत्स्यते तदा न द्रक्ष्यत्यन्तरिक्षम् । तथात्वे वा त्वन्निदर्शनेनैव न विरूपाक्षादपरस्य कस्यचिद्विश्ववेदिता स्यादिति सर्वथा व्यर्थस्तदर्थः प्राणिनां प्रयासः स्यात् । तस्मादस्त्येव त्वादृक्षाप्रेक्षयाप्यन्तरिक्षे दृश्यस्वभावता । नच योगिदशायामेवासौ तस्य समुत्पद्यत इति वाच्यम् । पूर्वमपरस्वरूपत्वेन गगनस्यानित्यत्वप्रसङ्गात् । तन्न पदार्थधर्मोऽपि सहकारी नाप्यभावः । सोऽपि हि नयने काचकामलादिदोषाभावस्वभावो नभसि त स्तम्भकुम्भाद्यावरणाभावस्वभावः सन्निकर्षसहकारी समस्ति न च गगनगोचरसंवेदनोदयः ।

प्रतिबन्धकापगमः सन्निकर्षसहकारीति मतस्य खण्डनम् ।

अथ प्रमातृगतस्य प्रतिबन्धकापगमरूपस्य तस्य सन्निकर्षसहकारित्वं स्वीक्रियते तदपि न समगतम् । प्रमातुः[1] खलु प्रमामुपजनयतः सन्निकर्षः प्रतिबन्धकापगमश्च सहकारीत्येव युक्तम् । प्रतिबन्धकापगमः सन्निकर्षसहकारीति तु कौतस्कुती नीतिः । नहि दाह्यसंयोगसहकारिणः कृपीटयोनेः स्फोटं घटयतो मणिमन्त्रादिप्रतिबन्धकाभावः संयोगस्य सहकारीति वक्तुं युक्तम् । ननु प्रमोपजनने प्रमातृसहकारिणश्चक्षुषो व्याप्रियमाणस्याञ्जनादिकं चक्षुष एव सहकारि न प्रमातुरेवमत्रापि प्रतिबन्धकापगमः सन्निकर्षस्यैव सचिवो भविष्यतीति चेत् मैवम् । अञ्जनादिकं हि चक्षुषस्तिमिराद्यभावस्वभावातिशयविशेषं पोषयतीति तत्रैव तस्य साचिव्यमुपपद्यते । प्रक्रान्ते तु नैवमुभयस्यापि प्रमां प्रत्येव व्यापारात् । तथापि सन्निकर्षमेव प्रतिप्रतिबन्धकापगमस्य सहकारित्वकल्पने तच्छिद्रेणैव विपर्ययपाटच्चरः प्रविशन्नशक्यः प्रतिरोद्धुम् । तथाच प्रतिबन्धकापगम एव साधकतम एवं स्यात् । नन्वेवं प्रतिबन्धकापगमस्य साधकतमत्वसिद्धौ बद्धकक्षाणां वः स एव प्रमाणं स्यात् तथा चोपयोगस्यादितः प्रमाणत्वसमर्थनमनर्थायैव भवेदिति चेत् नैवम् । प्रतिबन्धकापगमे साधकतमत्वस्य [2]प्रतिबन्धिन्यायेनैवाभिधानात् । यदि प्रमातृसहकारितायामुभयोरविशिष्टायामपि सन्निकर्षस्यैव साधकतमत्वमिष्यते तदा प्रतिबन्धकापगमस्यैव किं न स्यादिति । तत्त्वतस्तु यत्फलं प्रत्यत्यन्ताव्यवहितव्यापारं तदेव साधकं साधकतमम् । अत एव च प्रमाणम् । तच्च नोपयोगादपरमुपपद्यते । अयं चोपयोगः-स्वपरप्रमितिरूपफलस्या एव व्यापारांशमाश्रित्य प्रमाणताव्यवहारादिति ज्ञानमेव प्रमाणम् । प्रमाणभूतस्य ज्ञानस्य हेतुत्वात् सन्निकर्षस्यापि प्रामाण्यं प्रतिजानीमह इति चेत् ।

---

१ ‘ प्रमातुः खलु ’ इत्यस्य स्थाने ‘ तस्य तु ’ इति म. पुस्तके पाठः ।
२ प्रतिप्रश्नेन समाधानं यत्र क्रियते तत्र प्रतिबन्धिन्यायोऽवतरति ।

किमपि कौतुकमेतदहो जनाः शृणुत यूयममुष्य मनस्विनः ।
कवलितोत्कटहालहलोऽपि सन्नवसुधारसमुद्गिरतीह यत् ॥ ४५ ॥
प्रामाण्यं मुख्यया वृत्त्या ज्ञानस्यैव सुसंगतम् ॥
गौण्या तु सन्निकर्षस्य को हि धीमान्न मन्यते ॥ ४६ ॥
तस्मादवस्थितमिदं नियतमसिद्ध्या कटाक्षितो हेतुः ।
अर्थप्रमितावित्यादिलक्षणः पूर्वमुक्तो यः ॥ ४७ ॥

अगतिकगतिनीत्या यस्तु हेतोरसिद्धा-
दपि वदति विशुद्धामत्र साध्यस्य सिद्धिम् ।
स खलु गलितबुद्धिर्वन्ध्यसीमन्तिनीतः
स्पृहयति भुवनानां भूषणं पुत्ररत्नम् ॥ ४८ ॥

नैयायिकाभिमतसन्निकर्षषट्कस्य खण्डनम् ।

यत्तु सन्निकर्षप्रसिद्धौ बाह्येन्द्रियत्वादिनेत्यादि गदितम् । तच्चक्षुःप्राप्यकारित्वपराकरणप्रस्तावे सविस्तरमपाकरिष्यते । यदपि प्रपञ्चतः सन्निकर्षषट्कघोषणमकारि । तदपि स्वसिद्धान्तश्रद्धालुताप्रसूतप्रक्रियामात्रम् । तथाह्यप्राप्यकारित्वेन चक्षुषः समर्थयिष्यमाणत्वान्न कुम्भादिना संयोगः सम्भवति । तदभावान्न संयुक्तसमवायादिः । यदि च संयुक्तसमवायाच्चक्षुषा रूपादि परिच्छिद्यते । तर्हि तदविशेषादम्भसि शब्दः, सहकारफलादौ रसादिः, सहस्रदीधितौ कर्म च तेन परिच्छिद्येत । संयुक्तसमवेतसमवायाच्च रूपत्व इव रसत्वादावपि चाक्षुषज्ञानमुपजायेत । समवायाच्च श्रवणेन्द्रियस्य ध्वनाविव व्योम्नो महापरिमाणादिगुणेऽपि । समवेतसमवायात्तु शब्दत्व इव महापरिमाणत्वादिसामान्यसमूहेऽपि प्रमितिः समुत्पद्येत । न्यायस्य समानत्वात् । अथ योग्यतामाहात्म्यात्प्रतिनियत एव वस्तुनि नयनादीन्द्रियाणां संवेदनमुन्मीलति तेन नातिप्रसङ्ग इति निगद्यते । तर्हि धीमन् योग्यतामेव सर्वत्र नियामिकामङ्गीकुरु । किमनया प्रतिपदं विचारतो विशीर्यमाणया सन्निकर्षकथाकंथया । यस्तूक्तसम्बन्धसम्बद्धवस्तुविशेषणविशेष्यभावाभिधानः

षष्ठः सन्निकर्षः । सोऽपि संयोगादिसम्बन्धान्तरनिराकरणादेव निरस्तः । न हि संयोगसमवाययोरन्यतरेण सम्बन्धेनासम्बद्धयोर्वस्तुनोर्मलयहिमालयशैलयोरिव स सङ्गच्छते । यदप्यसन्निकृष्टस्य ग्रहणे सर्वस्य सर्वत्रार्थे ज्ञानमुत्पद्येतेति नैयायिकैरुद्ग्रीवमुद्गीर्यते । तदप्येतेन प्रक्षिप्तम् । असन्निकृष्टस्य योग्यस्यैव ग्रहणाभ्युपगमात् । कथमन्यथा सन्निकृष्टेऽपि सर्वत्रार्थे ज्ञानं नोत्पद्येत । एवं च सति यस्मिन् सत्यपि यन्नोपजायते न तत्तत्कारणम्[1] । यथा सत्यपि शालिबीजेऽनुपजायमानः कोद्रवाङ्कुरः । सत्यपि सन्निकर्षे नोपजायते चार्थप्रमितिरितीदमनवद्यं सन्निकर्षप्रामाण्यबाधाविधायि साधनमवतरति । ततस्तत्र बाह्ये विषये रूपादौ चक्षुष्यसन्निकर्षाज्ज्ञानमुत्पद्यते इत्याद्यपि व्योमकमलिनीकुसुमसुकुमारताश्लाघां नातिशेते ।

किञ्च

यदि निगदसि विद्वन्मानतां सन्निकर्षे
कथय कथमिदानीमस्तु सर्वज्ञवार्ता ।
असति न खलु तीतानागते[2] वस्तुजाते
प्रमितिजननहेतुः सन्निकर्षः समस्ति ॥ ४९ ॥

अथो भवेज्जन्म यदैव यस्य संवेदनं तस्य तदैव च स्यात् ।
इत्थं कथं हन्त मृगाङ्कमौलेः सर्वज्ञता कल्पशतैरपि स्यात् ॥ ५० ॥
वर्त्तमानविषयानथ सर्वान् वेत्ति विश्वविदुरत्वमतश्चेत् ।
नैव भाविविषयाणि वचांसि स्युः प्रमाणमिह तस्य तदानीम् ॥ ५१ ॥

ततश्च

तदुपदेशवशेन विशङ्किताः कथय कोविद भाविफलार्थिनः ।
क्वचन कर्मणि किं कलितोद्यमाः स्युरिति तस्य भवेत्कथमाप्तता ॥ ५२ ॥

---

१ 'कारणम्' इति भ. पुस्तके पाठः । २ 'तीतानागते' शब्देऽकारलोपः प्रामाणिकः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।' इति भागुरिमतेनावाप्योरेवाकारलोपस्यानुशासनादतीत्युपसर्गगताकारलोपस्याननुशासनाच्च । कदाचिच्छन्दोभङ्गभियाकारलोप आदृतः स्यात् ।

अर्थं वेदनमिष्यतेऽस्य नित्यं न ततो दूषणमम्बरप्रसङ्गः ।
कुरु मैवमलीकचापलोक्तिं नित्यैकान्तविकुट्टनात्पुरस्तात् ॥ ५३ ॥

व्याप्तिस्तथानुमितिहेतुरियं बुधानां
दिग्देशकालनियमेन विनाऽप्रसिद्धा ।
तस्याश्च न ग्रहणकारणमस्य किञ्चित्
नैयायिकस्य कृपणस्य विलोकयामः ॥ ५४ ॥

तथाहि

इन्द्रियाधीनमध्यक्षमुत्पद्यते सन्निकृष्टे यथागोचरे जन्मिनाम् ।
मानसाध्यक्षमप्येवमेवेत्यतस्तेन नैवाविनाभावसंवेदनम् ॥ ५५ ॥

इति

यदपि प्रभाकरमतमाविष्कुर्वन् शालिकः प्रमाणपारायणे ।

प्रभाकरानुसारिशालिकमतखण्डनम्।

'मानत्वे संविदो बाह्यहानादानादिकं फलम् ॥
ज्ञानस्य तु फलं सैव व्यवहारोपयोगिनी ॥१॥'

इति कारिकां विवृण्वन् 'यदा मितिर्मानमिति भावसाधनं मानमाश्रीयते । तदा संविदेव प्रमाणम् । तस्याश्च व्यवहारानुगुणस्वभावत्वाद्धानादानोपेक्षाः फलम् । मीयते अनेनेति तु करणसाधने मानशब्दे आत्मनः सन्निकर्षान्मनोज्ञानस्य ज्ञायते ज्ञप्तिर्जन्यतेऽनेनेति व्युत्पत्तिबलात्प्रमाणत्वे तद्बलभाविनी फलसंविदेव बाह्यव्यवहारोपयोगिनी सती' इति प्राह । यदपि च ।

'आपेक्षिकं च करणं मन इन्द्रियमेव वा ॥
तदर्थसन्निकर्षो वा मानं चेत्पूर्वकं फलम् ॥ १ ॥'

इति कारिकां व्याख्यायन् 'यदा तु साधकतमस्य करणत्वात्तमप्प्रत्ययार्थस्यवातिशयस्य बाह्यापेक्षत्वादालोकाद्यपेक्षं मन इन्द्रियमेव वा तस्य वा विषयसन्निकर्षस्तस्य चात्मनः

---

१ मालभारिणी । २ अत्र छन्दोभङ्गो दृश्यते तच्च लेखकप्रमादादिति मन्ये । अत. 'नियतैकान्त' इति युक्त विभावयामि । ३ प्र. पं. प्र. ५ प. १ पृ. ६४ प. १

सन्निकर्षः प्रमाणम् । तदापि संविदेव फलम् । तदर्थं प्रवृत्तत्वात् साधनानाम्' इत्याह तत्रात्ममनःसन्निकर्षस्येन्द्रियविषयसन्निकर्षस्येन्द्रियमनःसन्निकर्षस्य वा प्रामाण्यमेतेनैव सन्निकर्षप्रामाण्यपराकरणेन प्रत्यादिष्टम्। यच्च मनस इन्द्रियस्य वा प्रामाण्यमुक्तम्। तदपि पूर्वमेव वाचस्पतिमपहस्तयद्भिर्हेतुमात्रोक्तावपि यः साक्षादुपलब्धौ हेतुरिन्द्रियादिः स एव चेत् प्रमाणतयाभिप्रेतः सूक्ष्मदर्शिनोऽस्य तदा स्वपरव्यवसायिज्ञानमेव तथाभ्युपगन्तुमुचितमित्यादिना दत्तनिर्वचनम् । यदपि यदा मितिर्मानमिति भावसाधनं मानमाश्रीयते तदप्यस्य विशेषोत्प्रेक्षणैकबद्धकक्षस्याप्यत्यन्तमार्जवम्। प्रमितौ साधकतमत्वेन हि प्राप्तप्रमाणाभिख्ये प्रमाणे विप्रतिपत्तेस्तस्यैव स्वरूपं प्ररूपणीयं प्रामाणिकेन। तत्साध्यायास्तु प्रमितिरूपायाः क्रियायाः प्रामाण्यमुपदिश्यमानं कथं सङ्गच्छेत। कथं वा प्रमितिस्वरूपफलरूपां क्रियामेव प्रमाणत्वेन प्रतिपाद्य तस्या अपि हानोपादानोपेक्षारूपफलाभिधानं साधीयः। हानोपादानोपेक्षासु प्रमितेः साधकतमत्वाच्चेत् तर्हि त्यक्तमिदानीं मितिर्मानमिति भावसाधनो मानशब्द इति। मितेरपि हानादौ फले साधकतमतया करणत्वेन मानशब्दवाच्यत्वाभ्युपगमात्। एवमभ्युपगमे च न काचिदावयोर्विप्रतिपत्तिः। अस्माभिरपि स्वपरव्यवसायिनः संवेदनस्य हानादिफलसाधकस्य प्रमाणतया स्वीकृतत्वादिति ।

सन्निकर्षस्य नैवातश्चिन्त्यमानं कथञ्चन ।
गौणीं वृत्तिं परित्यज्य प्रामाण्यमुपपद्यते ॥ ५६ ॥
सुशिक्षितास्तु प्रतिपादयन्ति नैयायिकाः स्वस्य रहस्यमेतत् ।
प्रमासमुत्पादककारकाणां साकल्यमेवेह समस्तु मानम् ॥५७॥

तथा च सन्देहव्यभिचारशून्यवस्तूपलब्धिहेतुर्बोधाबोधस्वभावा सामग्र्येव प्रमाणम् । सामग्रीति कारकसाकल्यमिति चैक एवार्थः। प्रामाण्यसिद्धिश्चास्याः सामग्री प्रमाणमर्थप्रमितौ साधकतमत्वात्। यत्तु नैवं न तदेवं यथोभयाभिमतम् ।

सामग्रीप्रमाणमिति व्यवस्थापनम् ।

न चार्थप्रमितावसाधकतमा सामग्री ततः प्रमाणमित्यतोऽनुमानात् । न चात्र हेतोरसिद्धिः। फलोत्पादाविनाभाविस्वभावाव्यभिचारित्वं हि साधकतमत्वम्। तच्च सामग्र्यंतर्गतस्य न कस्यचिदेकस्य वक्तुं शक्यते । सामग्र्यास्तु सुवचम्। सन्निहिता चेत्सामग्री सम्पन्नमेव फलमिति सैव साधकतमा। ननु प्रमामुपजनयतो मुख्यस्य प्रमातुः प्रमाविषयीभूतस्य मुख्यस्य प्रमेयस्य च फलोत्पादाविनाभाविस्वभावमव्यभिचारित्वलक्षणसाधकतमत्वमस्त्येव । प्रमितिसम्बन्धमन्तरेण तयोस्तथात्वाभावात् । प्रमिणोतीति हि प्रमाता भवति । प्रमीयत इति च प्रमेयम् । न चानयोः प्रमाणतोपगता त्वयेत्याभ्यां व्यभिचारः साधनस्येति चेत् । न व्यभिचारः । साकल्यप्रसादलब्धप्रमितिसम्बन्धनिबन्धनो हि प्रमातृप्रमेयधर्माख्यस्वरूपलाभः । साकल्यापाये च प्रमित्यभावाद्गौणे प्रमातृप्रमेये संपद्यते । एवं च साकल्यमन्तरेण यदि प्रमितिः कल्प्येत भवेद्व्यभिचारो नत्वसौ तथा दृश्यत इति । ननु यदि सामग्र्याः साधकतमत्वं स्यात्तदावश्यमस्याङ्करणविभक्तिनिर्देशो दृश्येत । नचैवम् । नह्येवं वक्तारो भवन्ति लौकिकाः सामग्र्या पश्याम इति किन्तु दीपेन पश्यामश्चक्षुषा वीक्षामह इत्याचक्षते । तन्न सूक्ष्मम् । सामग्री हि संहतिः सा च सहन्यमानव्यतिरेकेण न व्यवहारपदवीमवतरति । तेन सामग्र्या पश्याम इति न व्यपदेशः । यस्तु दीपेन्द्रियादीना तृतीयया निर्देशः स फलोपजननाविनाभावित्वाख्यसामग्रीस्वरूपसमारोपनिबन्धनः । अन्यत्रापि च तद्रूपसमारोपणेन स्थाल्या पचतीति व्यपदेशो दृश्यत एव । ननु कर्तृकर्मापेक्षया करणसामग्री मध्यमाऽग्र्ययोश्च कर्तृकर्म्मणोः स्वरूपप्रध्वंसतोऽसम्भवात् तदपेक्षया कथं साकल्यस्य करणत्वमिति । एवं च प्रमाता प्रमाणं प्रमेयं प्रमितिरिति चतसृषु विधासु तत्त्वं परिसमाप्येत इति रिक्ता वाचोयुक्तिः । अयुक्तमेतत् । साकल्यमध्यपतितत्वेऽपि कर्तृकर्मणोः स्वरूपानपायात् । साकल्यं खलु सकलकारकाणा स्वकीयो धर्म्मो न च स्वकीयो धर्म्मः स्वरूपध्वंसाय जायते । साकल्यदशायामपि कारकाणा स्वरूपस्य प्रत्यभिज्ञायमानत्वा-

दिति कथंविधश्चतुष्टयप्रक्षयः । तथाच समाचष्ट भट्टजयन्तः पल्लवे-

तत्रासन्दिग्धनिर्बाधवस्तुबोधविधायिनी ।
सामग्री चिदचिद्रूपा प्रमाणमभिधीयते ॥ १ ॥

फलोत्पादाविनाभाविस्वभावाव्यभिचारि यत् ।
तत्साधकतमं युक्तं साकल्यान्न परञ्च तत् ॥ २ ॥

साकल्यात् सदसद्भावे निमित्तं कर्तृकर्म्मणोः ।
गौणमुख्यत्वमित्येवं न ताभ्यां व्यभिचारिता ॥ ३ ॥

संहन्यमानहानेन संहतेरनुपग्रहात् ।
सामग्र्या पश्यतीत्येवं व्यपदेशो न दृश्यते ॥ ४ ॥

लोचनालोकलिङ्गादेर्निर्देशो यस्तृतीयया ।
स तद्रूपसमारोपादुखया पचतीतिवत् ॥ ५ ॥

तदन्तर्गतकर्मादिकारकापेक्षया च सा ।
करणं कारकाणां हि धर्म्मोऽसौ न स्वरूपवत् ॥ ६ ॥

सामग्र्यन्तःप्रवेशेऽपि स्वरूपं कर्तृकर्म्मणोः ।
फलवत् प्रतिभातीति न चतुष्टं विनंक्ष्यति ॥ ७ ॥' इति ।

ततः साकल्यमेव प्रमाणं न पुनर्ज्ञानं तस्य फलरूपत्वात् । फलस्य च प्रमाणत्वमनुपपन्नं तस्य प्रमाणात् पृथग्भूतत्वात् । अथ पृथग्भूतफलोत्पादकमपि स्वकीयहेवाकात् ज्ञानरूपमेव प्रमाणमिष्यते । तदा शब्दलिङ्गादेः समस्तजनस्वीकृताज्ञानस्वरूपस्याप्रमाणत्वप्रसङ्गः । तस्मात् ज्ञानमपि साकल्यान्तर्गतमेव विशेषणज्ञानमेव विशेष्यप्रत्यक्षे लिङ्गज्ञानमिव लिङ्गिज्ञानानुमाने सादृश्यदर्शनमिवोपमाने शब्दज्ञानमिव शाब्दार्थज्ञाने प्रमाणतामास्तिघ्नुते, एवं च—

१ अधुना मुद्रितायां न्यायमञ्जर्यामिदं नोपलभ्यते । न्यायमञ्जर्येव पल्लवसंज्ञया श्रीवादिदेवसूरिभिः संमन्यते । २ उखाशब्दोऽग्निवाचकः । 'उख दाहे' इत्यस्मात्पाणिनीयधातोर्निष्पन्न. भ्वा. ग. धा. ६९७.

बाधं नैव समाश्रिता कथमपि श्लिष्टा न या शङ्कया
तामर्थप्रमितिं सदा विदधती बोधेतरात्मास्थितिः ।
सामग्री भवति प्रमाणमनघं नैयायिकानां मते
ज्ञानं केवलमेव ये पुनरमी प्राहुर्न ते तार्किकाः ॥ ५८ ॥

कारकसाकल्यमहो जल्पन्तोमी प्रमाणमिति निपुणाः ।
वैकल्यं किमपि गताः स्मरन्ति यन्नैव नीतिमार्गस्य ॥ ५९ ॥

नैयायिकोक्तस्य सामग्रीप्रामाण्यखण्डनस्य खण्डनम् ।

तथाहि यत्तावत्कथितमर्थप्रमितौ साधकतमत्वादिति साधनस्यासिद्धताध्वंसनाय फलोत्पादाविनाभाविस्वभावाव्यभिचारित्वं हि साधकतमत्वमिति तत्र फलोत्पादेन विना सामग्री न भवतीति कोऽर्थः । किं फलोत्पादेन विना सामग्री नोत्पद्यते पावकेनेव विना धूमः । किंवा फलोत्पादेन विना सामग्री न सत्तामनुभवति यथा वृक्षत्वेन विना शिंशपात्वम् । यद्वा फलोत्पादेन विना फलमनुत्पाद्य सामग्री नावतिष्ठते यथा सातिशयोन्नतिशाली जलभृद्वर्षमकृत्वा । न तावदाद्यः पक्षः पेशलः परस्पराश्रयपराहतत्वात् उत्पन्नया हि सामग्र्यां फलोत्पादः समुत्पन्ने च फले सामग्री समुत्पत्स्यत इति । नापि द्वितीयः । असिद्धत्वात् । यदि हि वृक्षत्वेन शिंशपात्वस्येव फलोत्पादेन सामग्र्याः सदैव सहचारित्वं स्यात् द्वितीयविकल्पपरिकल्पना । न चैवम् । तत्त्वे हि फलादिव्यपदेश एव न भवेत् समकालभाविनि व्यापाराभावात् । तृतीयविकल्पेऽप्यर्थप्रमितिस्वरूपस्य फलस्याव्यवधानेनोत्पादिकायाः सामाग्र्याः साधकतमत्वमुच्यते व्यवधानेन वा । आद्यकल्पे हेतोरसिद्धिः । सामग्र्याः सकाशादर्थप्रमितेरव्यवधानेनोत्पादायोगात् । ज्ञानेन तत्र व्यवधिसम्भवात् । न च किमनेनान्तराले गलितप्रमाणप्रसादेन ज्ञानेन परिकल्पितेनेत्यभिधानीयम् । तस्योपयोगरूपभावेन्द्रियस्वभावस्य साक्षात्फले व्याप्रियमाणस्य यदसन्निधान इत्यानुद्यमाननः पूर्वं प्रसाधितत्वात् । अथ व्यवधानेन फलोत्पादिकायाः सामग्र्याः साधकतमत्वमत्र विवक्षितम् ।

तत्किं मुख्यमौपचारिकं वा भवेत् । न तावन्मुख्यम् । अन्यव्यवहितव्यापारस्य कारकस्य मुख्यकरणव्यवहारागोचरत्वात् । तथाहि यद्यत्रान्येन व्यवहितं तत्तत्र न मुख्यसाधकतमत्वव्यवहारगोचरः । यथा दारुदारणकर्म्मणि कुठारेण व्यवहितो लोहकारः । अर्थप्रमितौ विज्ञानेन व्यवहिता च सामग्रीति । अथौपचारिकं सामग्र्याः साधकतमत्वं साधनत्वेनोपदिष्टम् । मुख्यं ह्यर्थप्रमितौ साधकतमत्वं ज्ञानस्य । तस्य जनकत्वात्तु सामग्र्यामपि तदुपचर्यते । कारणे कार्योपचारात् तण्डुलान्वर्षति पर्जन्य इतिवत् । एवं तर्हि तस्याः प्रामाण्यमप्यौपचारिकमेव सिद्ध्येत् । न खलूपचरितधूमत्वादतिसमुद्धुरसमीरसमुत्पाटितपारावतपतत्रधूसरधूलिपटलीविशेषादनुपचरितचित्रभानोः कणस्यापि प्रसिद्धिः । अथौपचारिकमेव प्रामाण्यं सामग्र्या सिषाधयिषितम्,

साधु साधु सुधियाऽवधारितं यत्समागतमिहाध्वनि क्षणात् ।
एवमेव तव जल्पतः सखे वारयन्तु दुरितानि देवताः ॥ ६० ॥

अव्यवहितव्यापारत्वेन साधकतमत्वाज्ज्ञानं प्रमाणं तद्धेतुत्वात्तु सामग्र्यपि प्रमाणमिति हि को नाम प्रामाणिको नाभ्युपैति । एवं च प्रतिज्ञायाः सिद्धसाध्यतावतारः । अपि च कारकसाकल्यस्य सद्भावेऽपि क्वचित्प्रमारूपं फलमुत्पद्यमानं नावलोकितमिति कुतोऽस्य कुत्रापि साधकतमत्वं सिद्ध्येत् । आः किमिदमदृष्टपूर्वमुच्यते यत्साकल्यसद्भावेऽपि न प्रमोत्पत्तिरिति । अलमावेगेन । यतः पश्य वयस्य विहायस्येव तावत्तत्सद्भावेऽपि न प्रमोत्पत्तिरिति । नन्वसिद्धः कारकसाकल्यसद्भावस्तत्रेति चेत् कुतोऽसिद्धः । प्रमातुरवहितस्य प्रमेयस्याऽव्यवहितस्य प्रमेयेण साकं हृषीक[1]सन्निकर्षस्य च सद्भावात् । ननु गगने योग्यता नास्ति तत्कुतस्तत्र तत्साकल्यस्यावैकल्यमिति चेत् । नैतद्युक्तम् । विचारितत्वात्पूर्वं योग्यतायाः । एवं चासिद्धं साधकतमत्वं सामग्र्याः । ततश्च यदसिद्धताप्रतिबन्धकमभिदधे तच्च सामग्र्यन्तर्गतस्य न कस्यचिदेकस्य

---

१ हृषीक–इन्द्रियम् ।

वक्तुं शक्यत इत्यादि । तदपास्तम् । यदपि मुख्यप्रमातृप्रमेयाभ्यां व्यभिचारमाशङ्क्य साकल्यप्रसादलब्धप्रमितिसम्बन्धनिबन्धनो हि प्रमातृप्रमेययोर्मुख्यस्वरूपलाभ इत्याद्यभाणि तदपि न भणनीयम् । अनवधानव्यवधानपराधीने हि प्रमातृप्रमेये गौणस्वरूपे सती न प्रमाणमुपजनयत इति प्रमोत्पत्त्यर्थं स्वस्य प्रमेयस्य च मुख्यं ह्यवधानाव्यवधानरूपस्वरूपं प्रार्थयन्ते प्रमातारः । यदा तु प्रमासम्बन्धनिबन्धनो मुख्यस्वरूपलाभः । तदा पूर्वं गौणाभ्यामपि प्रमातृप्रमेयाभ्यां सकाशात् प्रमा समजनि । संजातायां च प्रमायां किमनेन तत्सम्बन्धनिबन्धनेन मुख्यस्वरूपलाभेन कृतक्षौरस्य नक्षत्रपरीक्षणप्रायेण पश्चात्कर्त्तव्यम् । प्रमित्यर्थं हि प्रार्थ्यतेऽसौ सा चैनमन्तरेणापि समुत्पन्नैव । भवतु वा प्रमितिसम्बन्धनिबन्धनः प्रमातृप्रमेययोर्मुख्यस्वरूपलाभः । तथापि तयोः प्रमोत्पत्तौ व्यापारोऽस्ति न वा । न तावन्नास्ति । तयोः प्रमातृप्रमेयस्वरूपत्वाभावप्रसङ्गात् न खलु परश्वधादिकं छिदायामव्यापारयन्नेव देवदत्तश्छेदको नाम । नापि द्वैधीभावमननुभवदेव पादपादिकं छेद्यम् । अथास्ति तयोस्तत्र व्यापारः । तर्हि यत्तस्यामवस्थायां तयोः स्वरूपं तेन कलिते प्रमातृप्रमेये फलोत्पादाविनाभाविस्वभावाव्यभिचाररूपसाधकतमत्वसुभगे भवतो न च तयोः प्रमाणतेति हेतोः स्पष्टस्ताभ्यां व्यभिचारः । यदप्यवादीः सामग्री हि संहतिरित्यादि । तत्र यदि संहन्यमानव्यतिरेकेण व्यवहारपदवीमनवतीर्णायाः सामग्र्याः सामग्र्या पश्याम इति व्यपदेशो नास्ति । माभूत् । यस्तु दीपेन्द्रियादीनां तृतीयया निर्देशः स फलोपजननाविनाभावित्वाख्यसामग्रीस्वरूपसमारोपनिबन्धन इति तु दुश्चरितं कथं प्रस्थापयिष्यते । मुख्यत्वेन हि क्वचित्किञ्चिन्निश्चितं सदन्यत्र समारोप्यत इति तावदशेषवादिपरिषदामुपनिषत्[1] । अत्र तु सामग्र्यां करणविभक्तिमप्रयुञ्जानैर्जैनैर्न फलोपजननाविनाभावित्वं तत्स्वरूपं कदाचिन्निश्चितमिति कथं दीपादौ

---

१ उपनिषत्–रहस्यम् ।

सामग्रीस्वरूपसमारोपेण तृतीयानिर्देशः स्यात् । अथ प्रयुञ्जत एव प्रामाणिकास्तत्र तृतीयां सामग्र्या पश्याम इति चेत् । मैवम् । उपचरित एव तेषां तृतीयाप्रयोगो मुख्यस्य तस्य ज्ञान एव सद्भावाद्गाढोपयोगेनेदमवगतं मयेति । उपयोगश्च ज्ञानमेव । अस्तु वा प्रामाणिकानां सामग्र्यां मुख्यः प्रदीपादिषु तु सामग्रीस्वरूपसमारोपात्तृतीयानिर्देशः । लौकिकानां तु कथमसौ भविष्यति । नहि ते सामाग्र्या नामापि जानते । न च तेषां मुख्यस्वरूपापरिज्ञानेऽप्यारोपो भविष्यतीत्यालपनीयम् । अनाकलितकलधौतानां मुक्ताकरतीरवर्त्तिनि शुक्तिशकले कलधौतारोपाभावात् । तन्न सामग्र्यां मुख्यः प्रदीपादिषु तूपचरितस्तृतीयानिर्देश इत्युपपन्नम् । तथा च

करणत्वमपह्नुते प्रदीपे सामग्र्यां पुनरभ्युपैत्यशङ्कः ॥
लोकव्यवहारवत्सलत्वं कीदृशमस्य मनीषिशेखरस्य ॥ ६१ ॥

यदप्युदितं साकल्यमध्यपतितत्वेऽपि कर्तृकर्म्मणोः स्वरूपानपायात्साकल्यं खलु सकलकारकाणां स्वकीयो धर्म इत्यादि तदप्यनवदातम् । यतस्तेषां स धर्म्मः किन्नित्योऽथानित्यः । न तावन्नित्यः कादाचित्कत्वात् । कटादिवत् । अथानित्यः स कुतः समुत्पद्येत । तेभ्य एवान्यतो वा । न तावदन्यतोऽनङ्गीकारात् । अथ तेभ्य एव तर्ह्ययमर्थः सम्पन्नः । सकलास्तावत्साकल्यलक्षणं धर्मं जनयन्ति साकल्यलक्षणश्च धर्मः प्रमामुत्पादयति । एवं च साकल्यलक्षणधर्मस्य जनने व्यापृताः कर्त्रादयस्तस्मिन् कर्तृत्वेन प्रतीयन्ते । स च प्रमितिलक्षणे फले करणत्वेन । ततश्चैतत्फलं प्रति साकल्यलक्षणो धर्म्म एव व्याप्रियमाणः कथं साकल्यस्वभावे विषयान्तरे व्यापृताभ्या कर्तृकर्म्मभ्यां साधकतमत्वस्वरूपमतिशयं प्रतिपद्येत । अथ कर्तृकर्मणी साकल्यमुत्पाद्य प्रमायामपि व्याप्रियेते

साकल्य सकलकारकाणां स्वकीयो धर्म इति मतस्य विकल्पप्रदर्शनपूर्वकं खण्डनम् ।

---

१ 'रूप' इति प. भ. पुस्तकयोः पाठः ।

ततस्तदपेक्षयाऽस्योपपन्नमेव साधकतमत्वमिति चेत् । ननु वृद्धनैयायिकोपकल्पितेन्द्रियादिप्रामाण्यमुपेक्ष्य किमितीयत्कल्पनाकष्टसङ्कटमाविष्टोऽसि । प्रमां प्रति तस्यानेन व्यवहितव्यापारत्वान्न मुख्यं साधकतमत्वमिति चेत् । एवमेतत् । किन्तु यद्यस्मिन्नेवार्थे तव दोहदस्तदा ज्ञानमेव च तथा स्वीक्रियतां तस्यैव प्रमितावव्यवहितव्यापारत्वात् । साकल्यस्य तु तेन व्यवहितव्यापारत्वात् । किञ्च सकलानि कारकाणि साकल्याभिधानधर्मसमुत्पत्तौ प्रवर्त्तन्तेऽसकलानि वा । न तावत्सकलानि अन्योन्याश्रयप्रसङ्गात् । सिद्धे हि साकल्याभिधाने धर्म्मे तेषां सकलरूपतासिद्धिस्तत्सद्धौ च साकल्याभिधानधर्म्मासिद्धिरिति । नाप्यसकलानि अतिप्रसङ्गात् । अपि च यया प्रत्यासत्त्या सकलानि साकल्याख्यं धर्म्ममुत्पादयन्ति तयैवार्थोपलब्धिमप्युत्पादयिष्यन्तीति व्यर्था साकल्याख्यधर्मकल्पना ।

किञ्च 'शब्दपदार्थिकाऽर्थपदार्थिका वा भावप्रत्ययप्रकृतयो भवन्ति' इति सकल इत्येतस्य शब्दस्य भावः सकलेषु अर्थेषु वाच्येषु प्रवृत्तौ निमित्तमिति शब्दपदार्थकात् सकलानामर्थानां भावः स्ववाचकसकलशब्दस्य प्रवृत्तौ निमित्तमित्यर्थपदार्थकाद्वा सकलशब्दादुत्पन्नेन भावप्रत्ययेन ष्यञा प्रवृत्तिनिमित्तमेवाभिधीयते । तच्चेह सत्ता, स्वरूपमात्रम्, समुदायः, सम्बन्धो, ज्ञानजनकत्वं वा व्याक्रियेत, पक्षान्तराभावात् । तत्र प्रथमपक्षद्वयं पापीयः । वैकल्यदशायामपि कारकाणां सत्तायाः स्वरूपमात्रस्य च सद्भावतः प्रमाणताप्रसंगात् । अथ समुदायो भावशब्देनाभिधीयते । सोऽपि किमेकाभिप्रायतालक्षणः, एकदेशे मीलनस्वभावो वा । आद्यपक्षस्तावदसम्भवी, केषांचिच्चक्षुरादीनां कारकाणामभिप्रायशून्यत्वेन समस्तानामेकाभिप्रायत्वस्या-

'शब्दपदार्थिका अर्थपदार्थिका वा भावपत्ययप्रकृतयो भवन्ति' इति आश्रित्य शब्दपदार्थकादर्थपदार्थकाद्वा सकलपदात् ष्यञाभिधीयमानस्य प्रवृत्तिनिमित्तस्य सत्त्वात्स्वरूपसमुदायसम्बन्धज्ञानजनकत्वरूपत्व विकल्प्य खण्डितम्

१ 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति पा. सू. ५-१-१२४.

योगात्। द्वितीयपक्षोऽपि परीक्षां न क्षमते। क्षपाकरभास्करादेर्गोचरस्य चक्षुरिन्द्रियस्य चैकदेशे मीलनासम्भवात्। चक्षुषोऽप्राप्यकारित्वेन समर्थयिष्यमाणत्वात्। एतेन सम्बन्धपक्षोऽपि विसृष्टोत्तरः[1]। यदा ह्येकदेशे चन्द्रादेश्चक्षुषो मीलनं नास्ति तदा कथं तस्य तेन साकं संयोगादिः सम्बन्धः सम्भवेत्। अथ ज्ञानजनकत्वं भावशब्देनाभिधीयते तदा तस्य प्रतिकारकं भिद्यमानत्वाद्यावन्ति कारकाणि तावन्त्यः प्रमाः प्रसज्येरन्। भवतु वा किञ्चित्साकल्यम्। तथापि सकलेभ्यः किमेतद्भिन्नमभिन्नं वा। यद्यभिन्नम्, तदा सकलान्येव सन्ति न साकल्यं नाम किञ्चित्। अथ भिन्नम्, तर्हि सकलेषु सम्बद्धमसम्बद्धं वा स्यात्। यद्यसम्बद्धं, कथमेतत्तेषां धर्मोऽतिप्रसक्तेः। अथ सम्बद्धम्, तत्किं समवायेन, संयोगेन, विशेषणविशेष्यभावेन वा। न तावत्समवायेन, तस्य षट्पदार्थविचारावसरे निराकरिष्यमाणत्वेनासिद्धत्वात्। नापि संयोगेन। तस्य गुणत्वेन द्रव्येष्वेव सम्भवात्। साकल्यस्य च धर्मरूपत्वेनाद्रव्यत्वात्। नापि विशेषणविशेष्यभावेन। संयोगसमवायाभ्यामसम्बद्धे वस्तुनि विशेषणविशेष्यभावस्यासम्भवात्। अन्यथा सर्वस्य सर्वविशेषणतानुषङ्गात्। समवायवत्समवायिषु संयोगसमवायासत्त्वेऽपि तस्य विशेषणतेति चेत् न। तस्यापि तथासाध्यत्वात्। न चाभाववद्भावेषु तस्य विशेषणता, तस्यापि तथासिद्ध्यभावात्। नह्यसिद्धमसिद्धस्योदाहरणमतिप्रसङ्गात्। ननु चैते सकलाः समवायिनावेतौ नास्तीह घट इति विशिष्टप्रत्ययः कथं विशेषणविशेष्यभावमन्तरेण स्याद्दण्डीति प्रत्ययवत्। भवति चायमबाधितवपुः। न च द्रव्यादिषट्पदार्थानामन्यतमनिमित्तोऽयम्। तदनुरूपत्वाप्रतीतेः। नाप्यनिमित्तः, कदाचित्कचिद्भावात्। ततोऽस्यापरेण हेतुना भवितव्यम्। स नो विशेषणविशेष्यभावः सम्बन्धविशेषः पदार्थविशेषश्चाविनाभाववदिति। मैवम्। समवायवदभाववद्वा साकल्यस्य विशेषण-

१ दत्तोत्तरः।

विशेष्यभावाद्धि क्वचिद्विशेषणत्वसिद्धौ तस्यापि विशेषणविशेष्यभावस्य स्वाश्रयविशेष्याश्रयिणः कुतस्तद्विशेषणविशेष्यत्वम् । परस्माद्विशेषणविशेष्यभावादिति चेत्, तस्यापि स्वविशेष्यविशेषणत्वं परस्माद्विशेषणविशेष्यभावादित्यनवस्थानादप्रतिपत्तिः । विशेष्यस्य विशेषणप्रतिपत्तिमन्तरेण तदनिष्टेः । '**नागृहीतविशेषणा विशेष्ये बुद्धिः**' इति वचनात्, अतिदूरमपि गत्वा विशेषणविशेष्यभावस्यापरविशेषणविशेष्यभावाभावेऽपि स्वाश्रयविशेषणत्वोपगमे साकल्यादेरपि क्वचिद्विशेषणत्वं तदभावेऽपि किं न स्यादिति न विशेषणविशेष्यभावसिद्धिः । तथा च तेनापि न सम्बद्धं साकल्यं सकलेषु । अस्तु वा केनाचित्सम्बन्धेन सम्बद्धं तत्तेषु । तथापि युगपत्सकलेषु सम्बध्यते क्रमेण वा । यदि युगपत् किमेकं सदनेकं वा । एकं चेत् तर्हि तस्य सामान्यादिस्वभावताप्रसक्तिः । न च सैवास्त्विति वक्तव्यम् । सामान्यादेर्नित्यतया नित्यमर्थप्रमितिरूपफलोत्पत्तिप्रसक्तेः । वक्ष्यमाणसामान्यादिदूषणदुष्टत्वाच्च । अथानेकं सद्युगपत्साकल्यं सकलेषु सम्बध्यते तर्हि यावन्ति कारकाणि तावन्ति साकल्यानि स्युः । एवं च भवतां कृतान्त[२]प्रकोपः। एकस्यैव साकल्यस्य स्वीकरणात् । अथ क्रमेण तत्तेषु सम्बध्यते तर्हि सकलकारकधर्मता साकल्यस्य न स्यात् । यदा हि तस्यैकेन सम्बन्धसकलाकारधर्मता साकल्यस्य न स्यात् । यदा हि तस्यैकेन सम्बन्धस्तदैव नापरेणेति । यदप्यभिदधे शब्दलिङ्गादेः समस्तजनस्वीकृताज्ञानस्वरूपस्याप्रमाणत्वप्रसङ्ग इति । तदपि न पीडाकरम् । शब्दलिङ्गादेरज्ञानस्वभावस्यास्माकमप्रमाणत्वेनाभीप्सितत्वात् । उपचारादेव तस्य प्रामाण्यप्रतिपादनादिति । एवं च ।

समग्रता याऽपि च कारकाणां **नैयायिकै**र्व्याक्रियते स्म नव्यैः ॥
नैषोपचारं परिमुच्य जातु प्रमाणतां स्वीकुरुते वराकी ॥ ६२ ॥

**कापिलः** पुन. प्राहु ।

१ 'विशेषणत्वम्' इति प. भ. पुस्तकयोः पाठ.　२ कृतान्तः-सिद्धान्तः ।

साकल्यं सन्निकर्षं यदिह दलितवांस्तत्प्रियं नः सुदूरम्
दूरेणैषा तथापि व्रजतु तव मतिर्ज्ञानमेव प्रमाणम् ।
एषा वस्तूपलब्धौ करणमिति हठान्मानतामुद्वहन्ती
यस्माज्जागर्त्ति नित्यं कपिलमुनिमते वल्लभा बुद्धिवृत्तिः ॥६३॥

इन्द्रियमनोऽहङ्कारबुद्धिवृत्तीनां प्रामाण्यं क्रमेणोपवर्ण्य खण्डितम् ।

तथाहि विषयाकारपरिणतेन्द्रियादिवृत्त्यनुपातिनी बुद्धिवृत्तिरेवं[1] पुरुषमुपरञ्जयन्ती प्रमाणम् । इन्द्रियाणां हि वृत्तिर्विषयाकारपरिणतिरुच्यते । नहि प्रतिनियतशब्दाद्याकारपरिणतिमन्तरेणेन्द्रियाणां प्रतिनियतशब्दाद्यालोचनं घटते । तस्माद्विषयसम्पर्कात्प्रथममिन्द्रियाणां विषयरूपतापत्तिरिन्द्रियवृत्तिः । तदनु विषयाकारपरिणतेन्द्रियवृत्त्यालम्बना मनोवृत्तिः । मनोवृत्त्यालम्बनाहंकारवृत्तिः । अहंकारवृत्त्यालम्बना च बुद्धिवृत्तिः । सा पुनः पुरुषमुपरञ्जयति । तदुपरक्तो हि पुरुषः प्रतिनियतविषयद्रष्टा सम्पद्यते । तथा चाभिहितम्, ' **इन्द्रियाण्यर्थमालोचयन्ति । इन्द्रियालोचितमर्थं मनः सङ्कल्पयति । मनःसङ्कल्पितमर्थमहङ्कारोऽभिमन्यते । अहंकाराभिमतमर्थं बुद्धिरध्यवस्यति । बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते** ' इति ।

एवं व्याख्यातं **पारमर्षैः**[2] प्रमाणं श्रद्धाप्राधान्याद् बुद्धिवृत्तिस्वरूपम् ॥
कोऽपि **स्याद्वादस्वादनस्मेरवक्त्रः** सम्प्रत्येतस्य क्षोदकेलिं करोति ॥६४॥

तथाहि यदुक्तं विषयाकारपरिणतेन्द्रियादिवृत्त्यनुपातिनीत्यादि । तत्रेन्द्रियाणां वृत्तिस्तावद्विषयाकारपरिणतिरूपा विषयाकारधारित्वमेवोच्यते । तत्पुनरनुपपन्नम् । प्रतीतिप्रतिहतत्वात् । नहि स्फटिकमुकुरादिकमिव तदाकारधारित्वेन श्रवणादिकमिन्द्रियं प्रत्यक्षतः प्रतीयते । तद्वत्तत्रापि विप्रतिपत्तिविरहप्रसक्तेः । न खलु प्रत्यक्षपरिच्छिन्ने वस्तुनि कश्चिद्बालिशः कलहायते । नाप्यनुमानाद्विषयाकारधारित्व-

---

१ ' वृत्तिरेव ' इति म. भ. पुस्तकयोः पाठः । २ कापिलैः ।

मिन्द्रियाणामवगम्यते । तदन्यथानुपपन्नस्य लिङ्गस्यासम्भवात् । न च प्रतिनियतपदार्थपरिच्छित्तिरेव लिङ्गमिति निगदितव्यम् । तस्याः श्रवणादीन्द्रियाणा विषयाकारपरिणतिमन्तरेणापि स्वयोग्यतामाहात्म्यादुपपद्यमानत्वात् । किञ्च हृषीकाणां वृत्तिरभिन्ना भिन्ना वा तेभ्यो भवेत् । यद्यभिन्ना, तर्हि सा श्रवणादिमात्रमेव तच्च स्वापदशायामपि समस्तीति जाग्रद्दशावत्तत्रापि परिच्छेदः प्रसज्यते । अथ भिन्ना, किमियं तत्र सम्बद्धा भवेदसम्बद्धा वा । असम्बद्धा चेत्, तदा कथं श्रवणादेरिन्द्रियस्य वृत्तिरिति व्यपदेशं समश्नुवीत । सम्बद्धा चेत्तदप्यसम्बद्धम् । पंचविंशतितत्त्वातिरिक्तस्य समवायादेः सम्बन्धस्य कस्यचित्कापिलैरप्रतिज्ञानात् । तस्मादित्थमिन्द्रियवृत्तेर्विचार्यमाणायास्सत्त्वासम्भवात्कथं विषयाकारपरिणतेन्द्रियवृत्त्यालम्बना मनोवृत्तिरिति सुघटं स्यात् । तस्माद्बाह्यार्थालम्बनैव मनोवृत्तिरपि युक्ता । न चैवं बाह्येन्द्रियकल्पनानर्थक्यप्रसक्तिः । मनसो बाह्येन्द्रियसव्यपेक्षस्यैव बहिरर्थे प्रवृत्तिप्रतीतेः विज्ञानोत्पत्ताविन्द्रियमनसामन्योन्यं सहकारित्वात् । न खलु बाह्येन्द्रियनिरपेक्षा मनसो विज्ञानोत्पत्तौ प्रवृत्तिः सम्भवति । श्रवणादीन्द्रियेणाप्रतिपन्नेऽपि निस्वनादौ वस्तुनि मनसः सकाशाद्विज्ञानोत्पत्तिप्रसक्तेः । नापि मनोऽनपेक्षा बाह्येन्द्रियाणां विज्ञानोत्पत्तौ प्रवृत्तिः । अन्यत्र गतचित्तस्यापि बाह्येन्द्रियेभ्यो विज्ञानोत्पत्तिप्रसक्तेः । एवं च मनोवृत्त्यालम्बना अहंकारवृत्तिरित्यादिपरपरिकल्पितप्रक्रियानुपपत्तेर्न बुद्धिवृत्तिः कापि घटते यतः प्रमाणं स्यात् । अपि च यो जानाति न तस्यार्थदर्शनं फलमचेतनत्वान्महतः । यस्य वार्थदर्शनं न स जानातीति भिन्नाधिकरणत्वं प्रमाणफलयोः । ज्ञानधर्मयोग. प्रमीणं पुंसि न विद्यते तत्फलं त्वर्थदर्शनं बुद्धौ नास्ताति । अथोच्यते[1] स्वच्छत्वात्पुंसो बुद्धिवृत्त्यनुपीतितास्ति यद्वा चेतनाकोरसंस्पर्श इव बुद्धेर्लक्ष्यत इति तद-

१ ‘ अत्रोच्यते ’ इति प पुस्तके पाठः ।

तत् । एवं हि स्ववाचैव त्वया प्रमाणफलयोर्मिथ्यात्वं कथितं भवेत् । मृषा हि चिद्धर्म्मो बुद्धौ बुद्धिधर्म्मोऽपि चितौ मृषेति । तस्मात् ।

अलं वितथजल्पितैः श्लथय बुद्धिवृत्त्यात्मकं
प्रमाणमिति दर्शनं किमपि कश्मलं दूषणैः ।
यदेव हि सुयुक्तिकं तदिह सज्जनः सेवते ।
न तु स्वपितृकुर्कुरोद्वहननीतिमालम्बते ॥ ६५ ॥

एवं च—

निर्लूनः सन्निकर्षस्तदनु सकलता कारकाणां परास्ता
विख्याता यापि बुद्धेः कपिलमुनिगृहे वृत्तिरेषा निरुद्धा ।
त्यक्त्वा तत्तीर्थिकानां मतमखिलमपि प्रेप्सुभिर्न्यायमुद्रा-
मङ्गीकर्त्तव्यमेतज्जिनपतिगदितं ज्ञानमेव प्रमाणम् ॥६६॥६॥

समर्थितमेवं ज्ञानमिति विशेषणं संप्रति व्यवसायीति तद्विशेषणसमर्थनार्थमाह—

## तद्व्यवसायस्वभावं समारोपपरिपंथित्वात् प्रमाणत्वाद्वेति ॥ ७ ॥

तत्प्रमाणत्वेन सम्मतं ज्ञानम् । व्यवसायस्वभावं निश्चयात्मकमित्यर्थः । कुतः समारोपपरिपन्थित्वात् । विपर्ययसंशयानध्यवसायस्वरूपसमारोपोऽनन्तरमेव निरूपयिष्यमाणस्तत्परिपन्थित्वं तद्विरुद्धत्वं यथास्थितवस्तुग्राहकत्वमिति यावत् । तस्मात् प्रमाणत्वाद्वा हेतोस्तद्व्यवसायस्वभावम् । वाशब्दो विकल्पार्थस्तेन प्रत्येकमेवामू हेतू प्रमाणत्वाभिमतज्ञानस्य व्यवसायस्वभावत्वसिद्धौ समर्थावित्यर्थः सिद्धो भवति । प्रयोगौ पुनरेवं विरचनीयौ । प्रमाणत्वाभिमतं ज्ञानं व्यवसायस्वभावं समारोपपरिपन्थित्वात् प्रमाणत्वाद्वा । यत्पुनर्व्यवसायस्वभावं न भवति

---

१ पृथ्वीछन्दः । २ मम पिता श्वानं शिरसोद्वहत्यतो मयापि तदुद्वहन क्रियत इति । केन चित्पुत्रेण कथ्यते तद्युक्त्यसहत्वादसगतम् । यतो न केवल पितृकृतमनुष्ठातव्य किंतु युक्तियुक्तं तत् । ३ 'मन्दाक्रान्ता' ४ 'नाय' इति म. पुस्तके पाठः ।

न तत्समारोपपरिपन्थि प्रमाणं वा यथा घटः। समारोपपरिपन्थि प्रमाणं च पुनरिदं तस्माद्व्यवसायस्वभावमिति।

बौद्धमतस्योपपादनपूर्वकं खण्डनम्।

अत्रानुमानयोः पक्षैकदेशे प्रत्यक्षबाधितत्वं समुद्भावयन्तः सौगताः प्रत्यवतिष्ठन्ते। तथाहि न प्रमाणत्वाभिमतज्ञानस्य धर्मिणः एकस्मिन् देशे प्रथमाक्षसन्निपातप्रभवसंवेदनस्वरूपे कल्पनात्मकं व्यवसायस्वभावत्व सम्भवति। स्वसंवेदनप्रत्यक्षेण तस्य कल्पनाशून्यस्यैवानुभूयमानत्वात्। अथात्र विप्रतिपद्येत कश्चित्। नासौ विपश्चित्। तथाहि प्रत्यक्षस्य शब्दविकल्पनीयाद्यर्थसामर्थ्येनात्मलाभात्तद्रूपप्रतिभासित्वमेव न्याय्यं नाभिलापरूपप्रतिभासित्वमपि। असति चाभिलापरूपप्रतिभासित्वे कथं तत्र व्यवसायस्वभावत्वं सङ्गच्छते। किञ्च—

स्वलक्षणनिनादयोर्न खलु विद्यते सङ्गतिः
परस्परमभिन्नता न हि तयोः पृथग्दर्शनात्।
समस्ति न तदुत्थताप्यपरहेतुजन्यत्वतः
स्वलक्षणसमुद्भवं तदविकल्पकं वेदनम्॥ ६७॥

अपि च यदि जनकनीलाद्यर्थोपयोगेऽपीन्द्रियजं ज्ञानं तमर्थं न परिच्छिन्द्यात् किन्तु विलम्बमानं तावदवतिष्ठेत यावत्स्मृतिसामर्थ्यसमुद्भूतं तदर्थप्रतिपादकशब्दसंघटनं भवतीति तर्हि त्वयैव विहितमौर्ध्वदेहिकमर्थग्रहणस्य[1]। तथा हि नीलादिकमर्थमनिरीक्ष्यमाणस्तत्र प्रतिपन्नसमयं तद्वाचकं शब्दं नानुस्मरत्युपयोगाभावात्। अननुस्मरंश्च पुरश्चारिणि नीलादिवस्तुनि न तं संघटयति स्मृतिदर्पणप्रतिबिम्बनमन्तरेण तत्संघटनासामर्थ्यात्। असंघटयंश्च शब्दं त्वदाकूतेन न निरीक्ष्यत एव नीलादिकमर्थमिति सुषुप्तप्रायं जगज्जायेतेति।

निर्विकल्पकमेवातः प्रत्यक्षमनुभूयते।
नतु दुर्वासनाजन्यकल्पनाजालधूसरम्॥ ६८॥

१ मरणानन्तरं पुत्रादिनानुष्ठीयमानः क्रियाकलापः।

पक्षैकदेशं गदितानुमानयुग्मे तदध्यक्षमपाकरोति ।
एवं च मुञ्च व्यवसायिमानं संवेदनं सर्वमिमां दुराशाम् ॥ ६९ ॥
अहो महासाहसमस्य भिक्षोर्यत्स्वीयशस्त्रस्य बलं न वेत्ति ॥
स्पर्द्धानुबन्धादथ च त्वरावान् पक्षैकदेशक्षपणाय मुग्धः ॥७०॥

प्रत्यक्षस्य निर्विकल्पकत्वमिति बौद्धमतस्य खण्डनम् ।

तथाहि । यदवादि स्वसंवेदनप्रत्यक्षेण तस्य कल्पनाशून्यस्यैवानुभूयमानत्वादिति । तत्कोशपानप्रत्यायनीयम्[1] । नीलमहं विलोकयामीत्युल्लेखशेखरं व्यवसायात्मकमेव हि प्रत्यक्षं सर्वदा सर्वत्र सर्वैरनुभूयते । यदप्यवादि प्रत्यक्षस्य शब्दविकलनीलाद्यर्थसामर्थ्येनात्मलाभादिति । तदपि नावदातम् । नहि निःशब्दकार्थजनितमित्येतावतैव ध्वानिं विना कृत्यमभिधातुं पार्यते । अन्यथा ह्यचेतनवस्तुसमुत्पादितमित्यचेतनमपि तद्भवेत् ।

अथ चेतनस्वरूपमनस्कारसहितादर्थात् समुत्पन्नं विज्ञानमतो नाचेतनं तद्भवितुमर्हतीति प्रतिपादयेथाः । तथा सत्यभिलापसंपृक्तमनस्कारव्यापारात्साभिलापमपि तत्किन्न स्यात् । यदपि स्वलक्षणनिनादयोरित्यादिना वृत्तेन तादात्म्यतदुत्पत्तिसम्बन्धनिराकरणद्वारेणार्थे प्रतिभासमाने शब्दाप्रतिभासादविकल्पकत्वं प्रत्यक्षस्य प्रत्यपादि । तदप्यसत् । तादात्म्यतदुत्पत्तिसंम्बन्धविधुराणामपि परस्परं बहूनामर्थानां युगपदेकत्र ज्ञाने प्रतिभासनात् । यच्चोक्तं यदि जनकनीलाद्यर्थोपयोगेऽपीन्द्रियजं ज्ञानं तमर्थं न परिच्छिन्द्यादित्यादि सुषुप्तप्रायं जगज्जायेतेति पर्यवसानम् । तदपि सकलमफलम् । भवत्पक्षेऽपि समानत्वात् । तथा हि स्वलक्षणगोचरे निर्विकल्पकप्रत्यक्षे समुत्पन्नेऽपि न यावद्विधिनिषेधद्वारा पश्चाद्भाविविकल्पयुग्मं समुल्लसति । न तावदिदं नीलं नेदं पीतमिति इदन्तयाऽनिदन्तया वा प्रतिनियतपदार्थव्यवस्थानमास्थीयते **ताथागतैः** **'यत्रैव जनयेदेनां तत्रैवाऽस्य प्रमाणता'** इति वचनात् उत्पन्नस्यापि

---

१ शपथेन विभावनीयम् ।

निर्विकल्पकस्य व्यवहारं प्रत्यनुत्पन्नप्रायत्वात् । तच्च व्यवस्थापकं प्रत्यक्षपृष्ठभाविविकल्पयुगलकं प्रतिपत्तुः प्राक्प्रवृत्तसंकेतकावसरसमवधारितं शब्दसामान्यमनुस्मरत एव भवितुमर्हति । शब्दसामान्यस्मरणहेतुश्च वासनारूपः संस्कारः कुतः प्रबुध्यत इति अभिधातव्यम् । यदि तादृशार्थदर्शनादित्यभिधत्से । तदसत् । तदपि हि दर्शनं निर्विकल्पकत्वेनार्थान्न विशिष्यते । ततः कथं शब्दसामान्यगोचरस्मरणहेतुभूतं संस्कारं तत्प्रबोधयेत् । अप्रबुद्धः संस्कारः कथं स्मरणमुत्पादयेत् । अनुत्पन्नं स्मरणं कथं शब्दं योजयेत् । अयोजिते शब्दे कथमर्थो विकल्प्येत । अविकल्पितोऽर्थः कथं व्यवहारवीथीमवतरेत् । तामनवतीर्णो नादृष्टाद्विशिष्येत तदविशिष्टश्च सुषुप्ततां जगतः सूचयतीति सर्वं त्वत्पक्षेऽपि समानम् । तस्माद्यथा स्वात्मनिश्चयाभावतः स्वयं प्रतीतमपि निर्विकल्पकज्ञानं कयाचिदचिन्त्यया शक्त्या संस्कारप्रबोधद्वारेण पश्चाद्भाविविधिप्रतिषेधविकल्पयुगलमुत्थाप्य स्वकीयव्यापारं कतिपयांशविषयमभिलापयाति । तथार्थोऽपि यद्यप्रतीत एव स्वयं तथास्वभावत्वान्नयनादिसामग्र्यन्तःपातित्वेन संकेतकालभाविस्वाभिलापसामान्याविषयात्मसंस्कारबोधद्वारेणात्मविषयमभिलापं संसृष्टसंवेदनमाविर्भावयेत्तदा नातिमात्रमसमंजसमालोकयामः । नन्वेवं प्रत्यक्षस्य सविकल्पतां समर्थयमानैर्भवद्भिः शब्दब्रह्मवादिभिरिव शब्दसंपृक्तमेव प्रत्यक्षं समर्थितं स्यात् । मैवं वोचः ।

यतः—

शब्दब्रह्माख्यपक्षादपि तदतितरामक्षमं क्षीणबोधै-
 र्बौद्धैर्यत्प्रोच्यते स्म व्यवसितिरहितं सर्वथाऽध्यक्षमानम् ।
एतत्सन्दर्शनार्थं निबिडपरिचयः कल्पितोऽध्यक्षबोधे
 तत्त्वन्यायेन नासौ भवति करणजे वेदने स्पष्टरूपे ॥ ७१ ॥

स्वत एव हि व्यवसायात्मकं प्रत्यक्षं न पुनः शब्दसम्पर्कापेक्षया । तदपेक्षाया हि वर्णपदव्यवसायः कथं नाम स्यात् । तद्व्यवसायेऽपि परस्य

नाम्नोऽवश्यं स्मरणेनानवस्थोपनिपातात् । नामान्तरस्मरणमन्तरेण स्वत एव वर्णपदव्यवसाये तु वस्तुव्यवसायोऽपि स्ववाचकनामस्मरणमन्तरेण स्वत एवास्तु न कार्यं शब्दसम्पर्केण एवं च शब्दसम्पर्करहितमपि विशदसंवेदनम् । यतः, सविधवर्तिनं निजांशव्यापिनं कालान्तरस्थायिनं स्थगितप्रतिक्षणपरिणाममलक्ष्यमाणपरमाणुपरिमाणं वस्त्वन्तरैः सह सदृशविसदृशाकारं कुम्भादिकं भावमवभासयतीति कृत्वा सविकल्पकमित्यभिधीयते । पराभिमतायःशलाकाकल्पक्षणक्षयिपरमाणुलक्षणग्रहणनिपुणनिर्विकल्पकप्रत्यक्षप्रतिक्षेपार्थं प्रत्यक्षस्य शब्दसम्पर्कयोग्यगोचरतासंदर्शनार्थं च । एवं चाऽध्यक्षविषयीकृते वस्तुनि व्यवहाराः संज्ञासंज्ञिसंबन्धग्रहणादयस्तत्त्ववृत्त्यैव घटन्त इति सुव्यक्तमावेदितं भवति । अन्यथा विकल्पानुत्पादेन निखिलव्यवहारविलयप्रसक्तिः । तथा हि भवदभिमतं निर्विकल्पकदर्शनं परिस्फुटप्रतिभासमपि स्मृतिहेतुभूतं संस्कारं कर्तुं न समर्थम् । तदुत्तरसमयभावि च तादृशपदार्थदर्शनं प्राक्तनसंस्कारप्रबोधनं विधातुं न क्षमम् । यतः सामान्यविकल्पोत्पादद्वारेणास्खलितं निखिलो व्यवहारः प्रवर्त्तते । क्षणिकत्वनैरात्म्यादिषु सदैव निर्विकल्पप्रत्यक्षदृष्टत्वेन स्वीकृतेष्वपि पश्चाद्भाविसामान्यविकल्पोत्पत्त्या व्यवहारप्रवृत्तेरनुपलम्भात् । तस्माद्यत्र कुत्रचिदर्थांशे पाश्चात्यव्यवहारस्य प्रवृत्तिस्तत्र प्राग्भाविसंवेदनं निश्चायकमङ्गीकर्त्तव्यम् । इतरथा क्षणिकत्वाद्यंशवन्निखिलांशेषु व्यवहारः समुच्छिद्येतेति ।

हे शौद्धोदनिशिष्य सम्प्रति ततः सद्युक्तिभिः प्रोज्झ्यताम्
प्रत्यक्षं खलु निर्विकल्पकमिति त्यक्त्वा दुराशां त्वया ।
निःशेषव्यवहारकारणतया सर्वत्र लब्धास्पदम्
विज्ञानं व्यवसायसुन्दरमिदं निःसंशयं मन्यताम् ॥ ७२ ॥

किञ्च करणव्यापारानन्तरं स्वपरव्यवसायात्मनो नीलादिविकल्पस्यैव वैशद्येनानुभवात्कौतस्कुती निर्विकल्पककल्पना । न चेदं वाच्यं युगपद्वृत्तेराशुवृत्तेर्वा विकल्पाविकल्पयोरेकत्वाध्यवसायाद्विकल्पे वैशद्यप्रती-

तिरिति । विकल्पव्यतिरेकेणापरस्याप्रतीयमानत्वात् । पार्थक्येन हि प्रतीतावपरत्रापरस्यारोप उपपन्नश्चैत्रे मैत्रारोपवत् । न चास्पष्टाभो विकल्पः स्पष्टाभं च निर्विकल्पकं प्रत्यक्षतः प्रतीतम् । तथापि परिस्फुटत्वेनानुभूयमानस्वरूपं विकल्पं परित्यज्याननुभूयमानस्वभावं निर्विकल्पकं परिकल्पयन् कथं नाम परीक्षकः स्यात् अनवस्थाप्रसक्तेः । निर्विकल्पकस्वभावादप्यन्यादृक् स्वभावं प्रत्यक्षमित्यपि कल्पनापत्तेः । युगपद्वृत्तेश्चाभेदाध्यवसाये स्वीक्रियमाणे यदा—

लास्यं लोचनगोचरे रचयतस्ताम्बूलकर्पूरयोः
स्वादं खादयतः स्फुटं सुमनसामाजिघ्रतः सौरभम् ।
तूलीं संस्पृशतो मृदङ्गसुभगं सङ्गीतकं शृण्वतः
किञ्चिच्चिन्तयतो भवन्ति युगपज्ज्ञानानि षट् कस्यचित् ॥७३॥

तदा रूपादिज्ञानषट्कस्यापि भवन्मते सहोत्पत्तेरभेदाध्यवसायः किं न भवेत् । अथ भिन्नविषयत्वात्तेषां तदभावः । तर्हि प्रकृतयोरपि स न स्यात् क्षणसन्तानविषयत्वेन निर्विकल्पकसविकल्पकयोरपि भिन्नविषयत्वस्याविशेषात् । आशुवृत्तेः पुनरेकत्वाध्यवसाये जिननमनमित्यादावपि नकारयोरेकत्वाध्यवसायप्रसङ्गः । यदि च विकल्पाविकल्पयोरप्रतीयमानोऽपि भेदस्त्वया स्वीक्रियते । तर्हि कापिलपरिकल्पितः कथं बुद्धिचैतन्ययोर्भेदः पराक्रियते । अप्रतीयमानत्वाविशेषात् । अथ विकल्पाविकल्पयोः सादृश्यादभिभवाद्वा भेदेनानुपलम्भः प्रतिपाद्यते भोस्तार्किक किं कृतमनयोःसादृश्यम् । विषयाभेदकृतं ज्ञानरूपताकृतं वा । न तावद्विषयाभेदकृतम् । सन्तानेतरविषयत्वेनानयोर्विषयाभेदासिद्धेः । नापि ज्ञानरूपताकृतं सादृश्यमभेदाध्यवसायनिबन्धनम् । एवं सति नीलपीतादिज्ञानानामपि भेदेनोपलम्भो न भवेत् । ज्ञानरूपताकृतसादृश्यतस्तत्राप्यभेदाध्यवसायप्रसक्तेः । अथाभिभवादनयोर्भेदेनानुपलम्भः प्रतिपाद्यते । ननु केन कस्याभिभवः । तिग्मभानुना विभावरीभुजंगस्येवेति चेत् , ननु विकल्पस्याप्यविकल्पकेनाभिभवः कस्मान्न भवति ।

वलीयस्त्वादस्येति चेत् कुतोऽस्य बलीयस्त्वम् । बहुविषयत्वान्निश्चयात्मकत्वाद्वा । प्रथमपक्षोऽनुपपन्नः, निर्विकल्पकविषय एव विकल्पस्य प्रवृत्तेः स्वीकरणात् । इतरथा ह्यगृहीतार्थग्राहित्वेन तस्य प्रमाणान्तरत्वप्रसक्तिः । द्वितीयपक्षेऽपि स्वरूपे निश्चयात्मकत्व विकल्पस्यार्थरूपे वा । न तावत् स्वरूपे, सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षमित्यस्य विरोधात् । नाप्यर्थरूपे, विकल्पस्यैकस्यैक[1]स्वरूपार्थरूपे अपेक्ष्य निश्चयानिश्चयस्वभावद्वयप्रसङ्गात् । तच्च स्वभावद्वयं विकल्पाद्यदि सर्वथा भिन्नम् तदा समवायादेरनङ्गीकरणात्सम्बन्धासिद्धेर्बलवान् विकल्पो निश्चयात्मकत्वादित्यस्यासिद्धिः । अथ तत्सर्वथाप्यभिन्नं विकल्पात् तर्हि विकल्प एव भवेन्न स्वभावद्वयं तस्य तदन्तर्निगीर्णत्वात् । अथ कथमपि तादात्म्यान्निश्चयानिश्चयस्वरूपसाधारणमात्मानं प्रतिपद्यते विकल्पः, तर्हि स्वरूपेऽपि निश्चायकोऽसौ स्यात्, अन्यथा निश्चयस्वरूपेण तादात्म्यविरोधापत्तेः, न च स्वरूपमनिश्चिन्वन्विकल्पोऽर्थनिश्चायको युक्तोऽन्यथा ह्यगृहीतस्वरूपमपि ज्ञानमर्थग्राहकं भवेत् । तथा च ' **अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति** ' इति वचः कीर्त्तेः कीर्त्तिशेषं स्यात् । कश्चानयोरेकत्वाध्यवसायः किमेकविषयत्वमन्यतरेण वाऽन्यतरस्य विषयीकरणमपरत्रेतरस्याध्यारोपो वा । न तावदेकविषयत्वम् , सामान्यविशेषविषयत्वेनानयोर्भिन्नविषयत्वात् । दृश्यविकल्पयोरेकत्वाध्यवसायादभिन्नविषयत्वमित्यपि न सङ्गतम् । एकत्वाध्यवसायो हि दृश्ये विकल्प्यस्याध्यारोप उच्यते। स च गृहीतयोरगृहीतयोर्वा दृश्यविकल्प्ययोर्भवेत् । न तावद्गृहीतयोः । भिन्नस्वभावतया प्रतिभासमानयोः स्तंभकुम्भयोरिवैकत्वाध्यवसायायोगात् । न च तयोर्ग्रहणं दर्शनेन । तस्य विकल्पाविषयत्वात् । नापि विकल्पेन, तस्य दृश्यागोचरत्वात् । नापि ज्ञानान्तरेणोभयोरपि ग्रहणम् । तस्यापि निर्विकल्पत्वे विकल्पात्मकत्वे वा प्रोक्तदोषानतिवृत्तेः । नाप्यगृहीतयोः

---

१ ' एकस्यैव स्व '-इति भ. म. पुस्तकयोः पाठः ।

स सम्भवत्यतिप्रसक्तेः। सादृश्यनिबन्धनश्चारोपः समुपलब्धः वस्त्ववस्तुनोश्च दृश्यविकल्प्ययोः कल्पद्रुमनभःकुसुमयोरिव सादृश्याभावान्नासावुपपन्नः। तस्मान्नैक्यविषयत्वमेकत्वाध्यवसायः। अन्यतरेणान्यतरस्य विषयीकरणमपि समानकालभाविनोर्निर्विकल्पकसविकल्पकयोरपारतन्त्र्यादघटमानमेव । असमानकालभाविनोस्तु तयोः सुतरामन्योन्यं विषयीकरणाभावः । क्षणिकत्वेनैकस्योत्पत्तिसमयेऽपरस्यासम्भवात् । अपरत्रेतरस्याध्यारोपलक्षणोऽप्येकविषयत्वाध्यवसायोऽसम्भवी । तथाहि किं विकल्पे निर्विकल्पस्याध्यारोपो निर्विकल्पके विकल्पस्य वा । प्रथमपक्षे विकल्पव्यवहारच्छेदः समस्तज्ञानानां निर्विकल्पत्वप्रसक्तेः । द्वितीयपक्षे निर्विकल्पकवार्त्तोच्छेदः । सकलज्ञानाना सविकल्पकत्वप्राप्तेः। अन्यच्च विकल्पे निर्विकल्पकधर्मारोपाद्वैशद्यव्यवहारवन्निर्विकल्पके विकल्पधर्म्मारोपादवैशद्यव्यवहारः किं न भवेत् । अथ निर्विकल्पकधर्मेण वैशद्येन विकल्पधर्मस्यावैशद्यस्याभिभूतत्वात् कथं निर्विकल्पके तस्यारोपणेनावैशद्यव्यवहार इत्यभिधीयते । तर्हि विकल्पधर्मेणावैशद्येन निर्विकल्पकधर्मस्य वैशद्यस्याभिभूतत्वात्कथं तस्यारोपणेन विकल्पे वैशद्यव्यवहार इत्यपि व्याक्रियताम्। भवतु वा निर्विकल्पकधर्मेणैव विकल्पधर्मस्याभिभवस्तथापि तस्य कारणं वाच्यम्। समसमयभावित्वमिति चेत्, तर्हि गोदर्शनसमये भवतामभिमते तुरङ्गमविकल्पे स्पष्टप्रतिभासो भवेत् । समसमयभावित्वविशेषात् । अथानयोर्भिन्नविषयत्वान्नास्पष्टप्रतिभासमभिभूय तुरङ्गमविकल्पे स्पष्टतया प्रतिभासः। तर्हि शब्दस्वलक्षणं प्रत्यक्षेणानुभवता भवता तद्विषयं क्षणक्षयानुमानं स्पष्टमनुभूयतामभिन्नविषयत्वाविशेषान्नीलादिविकल्पवत्। अथ भिन्नसामग्रीजन्यत्वादनुमानविकल्पस्य प्रत्यक्षेणावैशद्यलक्षणस्तद्धर्मो नाभिभूयते, तर्हि सकलविकल्पानां विशदावभासिना स्वसंवेदनप्रत्यक्षेणैकसामग्रीसमुत्पाद्येनाभिभवप्रसक्तिः । अथ तत्रैकसामग्रीसमुत्पाद्यत्वं नेष्यते । विकल्पानां वासनासमुत्पाद्यत्वात् । स्वसंवेदनस्य तु संवेदनमात्रप्रभवत्वात् । तर्हि नीलादिविकल्पस्यापि प्रत्यक्षेणाभिभवाभाव-

प्रसङ्गः । तत्रापि भिन्नसामग्रीसमुत्पाद्यत्वाविशेषात् । वासनाजन्यो हि नीलादिविकल्पश्चक्षुरादिसामग्रीसमुत्पाद्यं पुनर्नीलादिप्रत्यक्षम् । अपि च विकल्पनिर्विकल्पकयोरेकत्वमध्यवस्यति किं निर्विकल्पकं विकल्पो वा । न तावन्निर्विकल्पकं, तस्याध्यवसायशून्यत्वादितरथा भ्रान्तत्वप्रसक्तिः । नापि विकल्पस्तेन निर्विकल्पकस्याविषयीकरणात् । अन्यथा तस्य स्वलक्षणगोचरताप्रसङ्गात्, 'विकल्पोऽवस्तुनिर्भासात्' इति वचो विरुद्धयते । न चाविषयीकृतस्यान्यत्रारोपो युज्यते । नह्यन्यत्राप्रतिपन्नपञ्चाननः क्वापि शौर्यादिगुणग्रामभाजि पुरुषविशेषे पञ्चाननत्वमध्यारोपयति । यच्चोच्यते संहृतसकलविकल्पावस्थायां रूपादिदर्शनं निर्विकल्पकं प्रत्यक्षतोऽनुभूयते ।

तदुक्तम् ।

'संहृत्य सर्वतश्चिन्तां स्तिमितेनान्तरात्मना ।
स्थितोऽपि चक्षुषा रूपमीक्षते साक्षजा मतिः ॥ १ ॥'

सर्वतः सर्वस्माद्विकल्पादर्थात् । चिन्तां कल्पनाविषयिणीम् । प्रतिसंहृत्य व्यावृत्य । स्तिमितेनैकार्थाप्रसक्तया निष्प्रकम्पेन । अन्तरात्मना चित्तावस्थाविशेषेण । स्थितो युक्तः प्रमाता यच्चक्षुषा रूपमीक्षते यच्चक्षुषा करणभूतेन रूपदर्शनं सा तादृश्यक्षजा मतिः प्रत्यक्षा प्रसिद्धा । तथा ।

'प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिद्ध्यति ।
प्रत्यात्मवेद्यः सर्वेषां विकल्पो नामसंश्रयः' ॥ इति ॥

एतदपि प्रलापमात्रम् । तस्यामवस्थायां सन्मात्रग्राहिदर्शनसद्भावेन विशेषावभासिनो विज्ञानस्यैवाभावात् । किञ्च तुरङ्गं विकल्पयतो गोदर्शनावस्थायां त्वदभ्युपगतायां गोपिण्डसाक्षात्कारिणः प्रत्यक्षस्य निश्चयात्मकत्वमेवोपपद्यते । अनिश्चयात्मकत्वेऽप्रत्यक्षं स्वीक्रियत एव । गोरित्याद्यभिधानोल्लेखी तु विकल्पः पराक्रियते ।

हंहो सखे सौगत साधु साधु सम्बुद्ध्यसे किञ्चन बोध्यमानः ।
यदत्र मुक्त्वा मतपक्षपातं प्रतीतिमार्गं समुपागतोऽसि ॥ ७४ ॥

एवं हि त्वया वदता न किञ्चित् प्रतिकूलमनुशीलितमस्माकम् । यतो नैव सविकल्पप्रत्यक्षाणां नामसंश्रयता[1] स्वरूपमिति वयं साङ्गिरामहे । समारोपपरिपन्थिस्पष्टग्रहणस्वलक्षणत्वाच्चेषाम् । न चानिश्चयात्मनः प्रामाण्यं संगच्छते । गच्छत्तृणस्पर्शादिसंवेदनस्यापि प्रमाणत्वप्रसक्तेः । निश्चयहेतुत्वान्निर्विकल्पकस्यापि प्रामाण्यमित्यप्यशिक्षितलक्षितम् । संशयादिविकल्पजनकस्यापि प्रामाण्यप्राप्तेः । स्वलक्षणानध्यवसायित्वात् संशयादिविकल्पाना न यथोक्तदोषानुषङ्ग इति यदुच्यते तदितरत्रापि तुल्यम् । न हि नीलादिविकल्पोऽपि स्वलक्षणाध्यवसायी । तदनालम्बनस्य न[2] निर्विकल्पकस्याविषयीकरणादध्यवसायित्वविरोधात् । तथाहि यद्यन्नालम्बते न तत्तदध्यवस्यति यथा घटज्ञानं पटम् । नालम्बते च नीलादिविकल्पः स्वलक्षणमित्यपि । मनोराज्यादिविकल्पस्तदनालम्बनः कथं तदध्यवसायीत्यपि न वाच्यम् । मनोराज्यादिविकल्पस्यापि कथञ्चित्सत्यराज्यादिगोचरत्वेन तद्ग्राहकस्वभावताभ्युपगमात् । न च निर्विकल्पकस्य विकल्पोत्पादकत्वं घटते । स्वयमविकल्पत्वादर्थस्वलक्षणवत विकल्पोत्पादनसामर्थ्याविकल्पत्वयोरर्थस्वलक्षणे परस्परं विरोधस्य त्वदभिप्रायेण प्रतीतेः। अथ विकल्पवासनां सहकारिणीमपेक्ष्य निर्विकल्पकमपि प्रत्यक्षं विकल्पोत्पादनसमर्थमपि स्वीक्रियते। हन्त तर्हि तथाविधसामर्थ्यसमन्वितोऽर्थ एवास्तु किमन्तर्गडुना निर्विकल्पकेन । अथाज्ञातोऽर्थः कथं विकल्पस्य जनकोऽतिप्रसङ्गात् । ननु दर्शनमपि कथमनिश्चयात्मकं सद्विकल्पजनकमित्यपि समानम् । तस्यानुभूतिमात्रेण जनकत्वे नीलादाविव क्षणक्षयादावपि विकल्पोत्पत्तिप्रसक्तिः। यत्र दर्शनं विकल्पवासनायाः प्रबोधकं तत्रैव विकल्पजनकमित्यपि न यौक्तिकम् । तस्यानुभवमात्रेण

१ ‘ संश्रयता ’ इति म. भ. पुस्तकयोः पाठः । २ ‘ तत् ’ इत्यधिकं भ. पुस्तके । ‘ तदध्यवसायित्व ’ इति म. पुस्तके पाठः।

तत्प्रबोधकत्वे क्षणक्षयादावपि तत्प्रबोधकत्वानुषक्तेः । तत्राभ्यासप्रकरणपाटवार्थित्वाभावान्न दर्शनं वासनायाः प्रबोधकमिति चेत् । ननु कोऽयमभ्यासो नाम । भूयो दर्शनं बहुशो विकल्पोत्पत्तिर्वा । न तावद्भूयो दर्शनम्, तस्य नीलादाविव क्षणक्षयादावपि विशेषणभावात् । अथ बहुशो विकल्पोत्पत्तिरभ्यासस्तस्य क्षणक्षयादिदर्शनस्य विकल्पवासनाप्रबोधकत्वाभावेनाभावात्तर्हि परस्पराश्रयप्रसङ्गः । तथाहि सिद्धे क्षणक्षयादौ दर्शनस्य विकल्पवासनाप्रबोधकत्वाभावे बहुशो विकल्पोत्पत्तिस्वभावाभ्यासस्याभावसिद्धिस्तत्सिद्धौ चास्य सिद्धिरिति । क्षणिकाक्षणिकविचारणायां क्षणिकप्रकरणमप्यस्त्येव । पाटवं पुनर्नीलादौ दर्शनस्य किं विकल्पोत्पादकत्वं स्फुटतरानुभवोऽविद्यावासनाविनाशादात्मलाभो वा भवेत् । प्रथमपक्षेऽन्योन्याऽश्रयप्रसक्तिः । सिद्धे हि नीलादौ दर्शनस्य विकल्पोत्पादकत्वस्वरूपे पाटवे वासनाप्रबोधकत्वसिद्धिस्तत्सिद्धौ च विकल्पोत्पादकत्वस्वरूपपाटवसिद्धिरिति । द्वितीयपक्षे पुनः क्षणक्षयादावपि वासनाप्रबोधकत्वसिद्धिः स्फुटतरानुभवस्वभावस्य पाटवस्यात्रापि विद्यमानत्वात् । तृतीयपक्षोऽप्युपेक्षणीयः परीक्षकाणाम् । तुच्छस्वभावस्याविद्यावासनाविनाशस्याऽनभ्युपगमात् कथं तस्मादात्मलाभलक्षणं नीलादौ दर्शनस्य पाटवं घटेत । अथ दर्शनस्योत्पादकानि यानि कारणानि तत्स्वभावोऽविद्यावासनाविनाशः स्वीक्रियते तस्माच्चात्मलाभलक्षणं पाटवं सुघटमेव दर्शनस्य । नन्वेवंविधपाटवस्य विशेषाभावाद्यथा तद्वशान्नीलादौ दर्शनस्य विकल्पवासनाप्रबोधकत्वं तथा क्षणक्षयादौ किन्न स्यात् । न चैकस्यैव दर्शनस्य नीलादिविकल्पवासनाप्रबोधकत्वं प्रति पाटवं क्षणक्षयादिविकल्पवासनाप्रबोधकत्वं प्रति पुनरपाटवमिति प्रकटयितुं पटीयसां समुचितम् । विरुद्धधर्माध्यासतो दर्शनस्य भेदप्रसङ्गात् । तथा च ताथागतानां राद्धान्तः ' अयमेव हि भेदो भेदहेतुर्वा यदुत विरुद्धधर्माध्यासः कारणभेदश्च ' इति । किञ्च । यद्यस्मदादीनामप्यविद्यावासनाशविनाशादाविर्भूतं दर्शनं विकल्प-

वासनाप्रतिबोधहेतुस्तर्हि समस्ताविद्यावासनाप्रलयात्प्रस्तुतं सुगतसंवेदनं सुतरां विकल्पवासनोद्बोधहेतुः सम्पद्यते । ततश्च ।

विधूतकल्पनाजालगम्भीरोदारमूर्त्तये ।
नमः समन्तभद्राय समन्तस्फुरणत्विषे ॥ १ ॥

इति प्रमाणवार्त्तिकस्य[1] प्रथमश्लोके विधूतकल्पनाजालेति विशेषणं वन्ध्यास्तनन्धयसमानं प्रसज्येतेति । अर्थित्वमप्यभिलषितत्वं जिज्ञासितत्वं वा । न तावत्प्रथमपक्षः परीक्षाक्षेत्रम् । कुत्रचिदनभिलषितेऽपि वस्तुनि दर्शनस्य वासनाप्रबोधकत्वदर्शनात्, चक्रकक्रकचपातप्रसङ्गश्च । अभिलषितत्वस्य वस्तुनिश्चयपूर्वकत्वात् । वस्तुनिश्चयस्य च वासनाप्रबोधपूर्वकत्वात्, वासनाप्रबोधस्य चाभिलषितत्वपूर्वकत्वात्, ततो यावन्न वस्तुनिश्चयस्तावन्नाभिलषितत्वं सिद्ध्यति यावन्नाभिलषितत्वं न तावद्वासनाप्रबोधो यावच्च नायं न तावद्वस्तुनिश्चयो यावन्नासौ न तावदभिलषितत्वमिति । द्वितीयपक्षे तु क्षणक्षयादौ तद्वासनाप्रबोधप्रसक्तिः, नीलादाविवात्रापि जिज्ञासितत्वाविशेषात् । ननु यावन्मात्रं वस्त्वनुभूतं निर्विकल्पकेन यदि तावन्त एव निश्चये निर्विकल्पकवादिनां प्राप्नुवन्तीति प्रेर्यते तर्हि सविकल्पकप्रत्यक्षवादिनामपि प्रतिवाद्युपन्यस्तस्य समस्तव्यापिमात्रावर्णपादादेः स्वकीयोच्छ्वासादिसङ्ख्यायाश्च विशेषेण स्मरणं प्रसज्यते[2] स्मरणकारणस्य निश्चयात्मनोऽनुभवस्य सर्वत्राविशेषात् ।

परमतमविदित्वा मूढ ताथागत त्वं
प्रबलतरनिरूढाहंकृतिग्रस्तबुद्धिः ॥
कृतरभसमिदानीं स्पर्द्धसे सार्द्धमुद्य-
न्मतिविभवसमर्थैस्तीर्थनाथस्य शिष्यैः ॥ ७५ ॥

---

१ प्रमाणसमुच्चयग्रन्थस्य धर्मकीर्तिना प्रमाणवार्तिकाह्वया टीका विरचिता ।
२ ' प्रसज्येत ' इति म. पुस्तके पाठः ।

अवग्रहेहावायज्ञानादनभ्यासात्मकादन्यदेव ह्यभ्यासात्मकं धारणाज्ञानस्वरूपं प्रत्यक्षं तैः कक्षीक्रियते तदभावात्परोपन्यस्तसमस्तमात्रावर्णादाववग्रहादित्रयसद्भावेऽपि स्मरणानुत्पत्तिः । तत्सद्भावे तु स्यादेव सर्वत्र तत् । यथाधारणं स्मरणाभ्युपगमात् । न च **सौगतानामप्ययं** युक्तः, दर्शनभेदाभावात् । एकस्यैव दर्शनस्य क्वचिदभ्यासादीनामितरेषां च तैरभ्युपगमात् । अस्य चाभ्युपगमस्याघटमानत्वात् । तथा चावाचि प्रकरणचतुर्दशशतीसमुत्तुङ्गप्रासादपरम्परासूत्रणैकसूत्रधारैरगाधसंसारवार्द्धिनिमज्जज्जन्तुजातसमुत्तारणप्रवणप्रधानधर्मप्रवहणप्रवर्त्तनकर्णधारैर्भगवत्तीर्थकरप्रवचनावितथतत्त्वप्रबोधप्रस्तुतप्रवरप्रज्ञाप्रकाशतिरस्कृतसमस्ततीर्थिकचक्रप्रवादध्वान्तप्रचारैः प्रस्तुतनिरतिशयस्याद्वादविचारैः **श्रीहरिभद्रसूरिभिः शास्त्रवार्त्तासमुच्चये 'एकत्र निश्चयोऽन्यत्र निरंशानुभवादपि । न तथा पाटवाभावादित्यपूर्वमिदं तमः'** इति । न च तद्व्यावृत्तिद्वारेणैकस्यापि दर्शनस्याभ्यासेतरादियोगः । स्वयमतत्स्वभावस्य तदन्यव्यावृत्तिसम्भवे पावकस्य शीतादिव्यावृत्तिप्रसङ्गात् । तत्स्वभावस्य तदन्यव्यावृत्तिकल्पने फलाभावात् । प्रतिनियततत्स्वभावस्यैवान्यव्यावृत्तिरूपत्वात् ।

प्राचीनविकल्पवासनाप्रभवत्वमेव विकल्पस्येति बौद्धशङ्कानिरासः ।

स्यान्मतमभ्यासादिसापेक्षं तन्निरपेक्षं वा दर्शनं न विकल्पकस्योत्पादकं प्राचीनविकल्पवासनाप्रभवत्वात्तस्य । तदावासनाया अपि तदावासनाप्रभवत्वमनादित्वाद्विकल्पजनकवासनासन्तानस्येति ।

सभासदः सादरमेतदेकं विलोक्यतां कौतुकमस्य भिक्षोः ॥
उपेक्ष्य पक्षं सहसा स्वकीयं यदल्पधीर्वक्ति विलूनशीर्णम् ॥७६॥

निर्विकल्पकस्य हि विकल्पाजनकत्वे **'यत्रैव जनयेदेनां तत्रैवास्य प्रमाणता'** इत्यस्य विरोधानुषङ्गः । कथं वा वासनाविशेषप्रभवाद्विकल्पा-

---

१ १४४४ ग्रन्था हरिभद्रकृता इति प्रथितिः । २. चतुर्थस्तबके श्लो. ३५.

त्प्रत्यक्षस्य रूपादिविषयत्वनियमो मनोराज्यादिविकल्पादपि प्रत्यक्षस्य रूपादिविषयत्वानियमप्रसक्तेः । प्रत्यक्षसहकारिणो वासनाविशेषादुत्पन्नाद्रूपादिविकल्पात्प्रत्यक्षस्य रूपादिविषयत्वानियमेऽभ्युपगम्यमानेऽनुमानसाध्यत्वाभिमतक्षणिकताविषयत्व. ऽपि यथोक्तहेतोरुत्पन्नात् क्षणिकत्वविकल्पादेवाभ्युपगम्यताम् । अन्यथा रूपादिविषयत्वानियमोऽप्यतो माभूदविशेषात् । तथा च क्षणिकत्वगोचरो विकल्पः प्रत्यक्षस्य क्षणिकत्वगोचरत्वनियमहेतुत्वान्यथानुपपत्तेरिति प्रसज्यते । रूपाद्युल्लेखित्वाद्विकल्पस्य तद्बलात्तन्नियमस्यैवाभ्युपगमे प्रत्यक्षस्याभिलापसंसर्गोऽपि तद्धेतुरनुमीयेत विकल्पस्याभिलापोल्लेखितयोत्पत्त्यन्यथानुपपत्तेः । किञ्च निर्विकल्पकदर्शनस्याप्रमाणसिद्धत्वादात्मैवाहंप्रत्ययप्रसिद्धः प्रतिबन्धकापायेऽभ्यासाद्यपेक्षो विकल्पोत्पादकोऽस्तु किमदृष्टपरिकल्पनया ।

सविकल्पकप्रत्यक्षस्याप्रामाण्यहेतवो विकल्प्य खण्डिताः ।

अपि च सविकल्पकप्रत्यक्षस्याप्रामाण्यं किं स्पष्टाकारविकलत्वात्, गृहीतग्राहित्वात्, असति प्रवर्त्तनात्, हिताहितप्राप्तिपरिहारासमर्थत्वात्, कदाचिद्विसंवादात्, समारोपस्यानिषेधकत्वात्, व्यवहारानुपयोगात्, स्वलक्षणागोचरत्वात्, शब्दसंसर्गयोग्यप्रतिभासत्वात् शब्दप्रभवत्वाद्वा स्यात् । न तावदस्पष्टाकारत्वात्तस्याप्रामाण्यं अप्रसिद्धत्वात्, अनुमानस्याप्रामाण्यप्रसङ्गाच्च । नापि गृहीतग्राहित्वात् । अनुमानाप्रामाण्यानुषङ्गादेव व्याप्तिज्ञानयोगिसंवेदनाभ्यां गृहीतस्यार्थस्य तेन ग्रहणात् । कथं वा शब्दविषयस्य क्षणक्षयानुमानस्य प्रामाण्यं शब्दरूपावभास्यध्यक्षावगतक्षणक्षयविषयत्वात् । नाप्यसति प्रवर्त्तनात् निर्विकल्पकस्याप्रामाण्यानुषङ्गात्तद्विषयस्यापि तत्काले सत्त्वाभावविशेषात् । हिताहितप्राप्तिपरिहारासमर्थत्वात् इत्यप्यसम्भाव्यमेव । सविकल्पकप्रत्यक्षादेव हिताहितप्राप्तिपरिहारसिद्धेः । कदाचित्तदभावः पुनर्निर्विकल्पकेऽपि समानः । कदाचिद्विसंवादादित्यप्यसाम्प्रतम् । निर्विकल्पकस्याप्यप्रामाण्यप्रसङ्गात् । तिमिराद्युपहतचक्षुषोऽर्थाभावेऽपि तत्प्रवृत्ति-

दर्शनात्, भ्रान्तादस्य भेदोऽन्यत्रापि समानः । समारोपानिषेधकत्वादित्यप्यरमणीयम् । विकल्पविषये समारोपासम्भवात् । नापि व्यवहारानुपयोगात् । सकलव्यवहाराणां विकल्पमूलत्वात् । स्वलक्षणागोचरत्वादित्यसमीक्षिताभिधानम् । अनुमानेऽप्यप्रामाण्यप्रसङ्गात् । त्वन्मत्या विकल्पस्यैवानुमानस्यापि सामान्यगोचरत्वात् । न चानुमानग्राह्यस्य सामान्यरूपत्वेऽप्यध्यवसेयस्य स्वलक्षणरूपत्वाद्दृश्यविकल्प्यावर्थावेकीकृत्य ततः प्रवृत्तेरनुमानस्य प्रामाण्यम् । प्रकृतविकल्पेऽप्यस्य समानत्वात् । शब्दसंसर्गयोग्यप्रतिभासत्वादित्यप्यसमीचीनम् । अनुमानेऽपि तुल्यत्वात् । शब्दप्रभवत्वादित्यप्यसाम्प्रतम् । शब्दस्वलक्षणाध्यक्षस्याप्यप्रामाण्यप्रसङ्गात् । ग्राह्यार्थं विना शब्दमात्रप्रभवत्वं त्वसिद्धमस्माकं नीलादिविकल्पानामर्थे सत्येव भावात्, कस्यचित्तु तमन्तरेणापि भावो निर्विकल्पकेऽपि समानः । द्विचन्द्रादिनिर्विकल्पकस्यार्थाभावेऽपि भावात् । भ्रान्तादभ्रान्तस्य भिन्नत्वमत्रापि तुल्यम् ।

एवं तावत्परेषामुपगमपदवीं प्रापिता सर्वतोऽमी
स्याद्वादस्वाददिग्धैः करणकृतमतौ निर्विकल्पप्रवादाः ।
एवं चाध्यक्षबाधा भवतु कथमिव प्रोक्तपक्षैकदेशे
सिद्धा सन्तस्ततश्च व्यवसितिसुभगा मानभूतेह बुद्धिः ॥७७॥

अत्राहुः **शब्दब्रह्मवादिनः** ।

शब्दब्रह्मवादिमत सविस्तरमुद्भाव्य खण्डितम् ।

प्रियं प्रियं न सकलापि बुद्धिः
प्रमाणभूता व्यवसायिनी यत् ॥
न युज्यते तु व्यवसाय एव
शब्दानुवेधं परिमुच्य जातु ॥ ७८ ॥

शब्दसम्पर्कपरित्यागे हि प्रत्ययानां प्रकाशरूपताया एवाभाव-

---

१ ' अपि ' इत्यधिकं भ. म. पुस्तकयो. । २ ' चानिद्र ' इति म. पुस्तके पाठ ।

प्रसक्तिः । वाग्रूपता हि शाश्वती प्रत्यवमर्शनी च तदभावे प्रत्ययानां नापरं रूपमवशिष्यते । तदुक्तम् ।

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन वर्त्तते ॥ १ ॥
वाग्रूपता चेत् व्युत्क्रामेत् अवबोधस्य शाश्वती ।
न हि बोधैः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥२ ॥' इति

सा चेयं वाक् त्रैविध्येन व्यवस्थिता वैखरी मध्यमा पश्यन्तीति । तत्र येयं स्थानकरणप्रयत्नक्रमव्यज्यमानाकारादिवर्णसमुदायात्मिका वाक् सा वैखरीत्युच्यते । तदुक्तम् ।

' स्थानेषु विधृते वायौ कृतवर्णपरिग्रहा ।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥ १ ॥ '

अस्यार्थः । स्थानेष्विति ताल्वादिस्थानेषु । वायौ प्राणसंज्ञे । विधृतेऽभिघातार्थं निरुद्धे सति कृतवर्णपरिग्रहेति हेतुद्वारेण विशेषणं ततः ककारादिवर्णरूपस्वीकारात् वैखरीसंज्ञा वक्तृभिर्विशिष्टायां खरावस्थायां स्पष्टरूपायां भवा वैखरीति निरुक्तेः । वाक्प्रयोक्तॄणां सम्बन्धिनी । यद्वा तेषां स्थानेषु तस्याश्च प्राणवृत्तिरेव निबन्धनं तत्रैव निबद्धा सा तन्मयत्वादिति । या पुनरन्तःसङ्कल्प्यमाना क्रमवती श्रोत्रग्राह्यवर्णरूपाभिव्यक्तिरहिता वाक् सा मध्यमेत्युच्यते । तदुक्तम् ।

' केवलं बुद्ध्युपादा॰नात्क्रमरूपानुपातिनी ।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्त्तते ॥ १ ॥'

अस्यार्थः । स्थूलां प्राणवृत्तिं हेतुत्वेन वैखरीवदनपेक्ष्य केवलं बुद्धिरेवोपादानं हेतुर्यस्याः सा प्राणस्थत्वात्क्रमरूपमनुपतति । अस्याश्च

---

१ वाक्यपदीये प्रथमकाण्डे श्लो. १२४, १२५. २ 'प्रकाशः प्रकाशेत' इति भ. प. पुस्तकयोः पाठः । ३ ' उपादानां ' इति भ. पुस्तके तथा 'उपादान' इति प. पुस्तके पाठ. ।

मनोभूमाववस्थानं, वैखरीपश्यन्त्योर्मध्ये भावान्मध्यमा वागिति । या तु ग्राह्यभेदक्रमादिरहिता स्वप्रकाशा संविद्रूपा वाक् सा पश्यन्तीत्युच्यते । तदुक्तम् ।

‘ अविभागा तु[1] पश्यन्ती सर्वतः संहृतक्रमा ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥ १ ॥ ’

अस्यार्थः । पश्यन्ती यस्यां वाच्यवाचकयोर्विभागेनावभासो नास्ति सर्वतश्च सजातीयविजातीयापेक्षया संहृतो वाच्यानां वाचकानां च क्रमो देशकालकृतो यत्र क्रमविवर्त्तशक्तिस्तु विद्यते । स्वरूपज्योतिः स्वप्रकाशा वेद्यते वेदकभेदातिक्रमात् । सूक्ष्मा दुर्लक्ष्या । अनपायिनी कालभेदास्पर्शादिति । अपि च सकलमेवेदं वाच्यवाचकतत्त्वं शब्दब्रह्मण एव विवर्त्तो नान्यविवर्त्तो नापि स्वतन्त्रमिति । यथोक्तम्-

‘[2]अनादिनिधनं शब्दब्रह्मतत्त्वं यदक्षरम् ।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ १ ॥’

अनादिनिधनं हि शब्दब्रह्म उत्पादविनाशाभावात् । अक्षरं चाकाराद्यक्षरस्य निमित्तत्वात् । अनेन वाचकरूपता । अर्थभावेनेत्यनेन तु वाच्यरूपता सूचिता । प्रक्रियेति भेदाः, शब्दब्रह्मेति नामसंकीर्त्तनमिति । व्यवहारोऽपि सकलः शब्दानुविद्ध एवानुभूयते । न हि भोक्ष्ये दास्यामीत्याद्यनुल्लिखितशब्दः कश्चिदपि स्वयं भोजनदानादिनिष्पत्तये प्रयतते । परं वा भुंक्ष्व देहीत्यादिशब्दं विना प्रवर्त्तयति । जीवितमरणस्वरूपाविर्भावोऽपि शब्दाधीन एव । तथाहि सुषुप्तिदशायामनुल्लिखितशब्दस्वरूपत्वान्न कश्चित्पञ्चता प्राप्तादिविशिष्यते। तदुत्तरसमयं तु कुतश्चिच्छब्दात् प्रबुद्धः पुमान् शब्देनैवान्तर्जल्पात्मनात्मानमनुसन्धानो जीवितमनुव्रजति । न चाद्वयरूपे तत्त्वे कथमाविर्भावतिरोभावादिरूपभेदप्रपञ्चप्रतिभासः स्यादिति वचनं चेतसि निधेयम् । अविद्या-

१ ‘नु’ इति भ. प. पुस्तकयोः पाठः । २ वाक्यप. का १. श्लो. १.

तस्तत्र तत्प्रतिभासाविरोधादाकाशवत् । यथैव हि तिमिरतिरस्कृतलोचनो जनो विशुद्धमप्याकाशं विचित्ररेखानिकरकरम्बितमिव मन्यते । तथाऽनादिनिधनमभिन्नस्वभावमपगतानिखिलभेदप्रपञ्चमपि शब्दब्रह्माविद्यातिमिरविधुरितविवेकलोचनः प्रादुर्भावतिरोभावादिभेदप्रपञ्चान्वितमिव प्रतिपद्यते । तदुक्तम् ।

'यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
संकीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥१ ॥
तथेदममलं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं[1] भेदरूपं तु पश्यति ॥ २ ॥'

इति । सकलाविद्याविलासविलये तु योगिनस्तत्प्रपञ्चानन्वितं यथावत्तस्वरूपं प्रतिपद्यन्ते । यथा च वीचीबुद्बुदफेनरूपो वारिविकारः सारभूतममलं जलमाविर्भावतिरोभावार्थमपेक्षते तथा व्यावहारिकः स्थूलोऽयमकारादिशब्दभेदप्रपञ्चः परमसूक्ष्मप्रतिभासमात्रैकरूपं सर्वशब्दविषयविज्ञानप्रसवनिमित्तं क्वाप्यनियमितैकनिजस्वभावं शब्दमयं ब्रह्मापेक्षते । उक्तं च—

'अनुविद्धैकरूपत्वाद्वीचीबुद्बुदफेनवत् ।
वाचः सारमपेक्षन्ते शब्दब्रह्मोदकाद्वयम् ॥ १ ॥' इति ॥

वाग्रूपतामवगणय्य जगत्सु नैव
कस्यापि किञ्चन कदाचन संचकास्ति ।
संवेदनं तदिह शब्दमयं प्रसिद्धं
स्यादन्यथा कथमिवास्य ननु प्रकाशः ॥ ७९ ॥

एतत्समीरणसमीरितनीरबिन्दु-
नाशं विनश्यतु सतां पुरतः समस्तम् ॥
यस्मात्प्रमाणपरिपन्थि निरुप्यमाणं
दारेषु गौरवमुपैति न कोविदेषु ॥ ८० ॥

१ 'आपन्न' इति प. म. पुस्तकयोः पाठः ।

तथाहि यत्तावदवादि शब्दानुवेधं परिमुच्य जात्वित्यादि । तत्र कोऽयं शब्दानुवेधो नाम । बोधस्य शब्देन संयोगविशेषः पारदेनेव ताम्रादेरिति चेत् । तदिदमतिरभसेन विस्मृत्य स्वमतमुक्तमायुष्मता । शब्दाद्वैतवादी हि भवान् न च तत्र शब्दो बोधश्चेति द्वयमस्ति । द्वैतप्रसक्तेः द्वैताभावे च शब्दबोधयोरसम्भवी संयोगविशेषः । तस्य द्वैतेनैव व्याप्तत्वात् । न चाद्वैतवाददुर्विदग्धानां संयोगोऽपि कश्चिदस्ति द्वैतप्राप्तेरेवेति । न संयोगविशेषोऽनुवेधशब्दवाच्यः शब्देन बोधस्य तादात्म्यमनुवेधो नीलगुणेनेव पटादेरिति चेत् । तदप्यविशदम् । शब्दबोधयोरेकान्तेन तादात्म्येऽनुवेधशब्दप्रयोगस्यायोगात् । न हि प्रयुञ्जते यौक्तिकाः कुम्भस्य कुम्भेनानुवेध इति । ननु कथं पटादेरनुवेधो नीलगुणेनेति प्रयुक्तिरिति चेत् । न गुणगुणिनोस्तादात्म्यैकान्तस्य निराकरिष्यमाणत्वात् । अस्तु वाऽनुवेधशब्दाभिधेयमेकान्तेन तादात्म्यं तदापीदं शब्दबोधयोर्नोपपद्यते । सति ह्यस्मिन् बोधस्याचेतनत्वं स्यादचेतनशब्दतात्म्येनावस्थितत्वात्तथा चानुभवविरोधः । शब्दस्य वा बोधमात्रतापत्तिरिति बोधमात्रवादासिद्धिः स्यात् । तथा च जिनदत्तेन प्रोक्तः शब्दः समीपवर्तिनापि जिनदासेन न श्रुयेत । जिनदत्तबोधतादात्म्येन तस्यावस्थिततया जिनदासश्रवणसरणिं यावदनुसरणासम्भवात् । अथ बोधात्माप्ययमनुसरति तां तेन श्रवणान्यथानुपपत्तेरितीष्यते तर्हि यः कश्चित् कस्यचिद्बोधः स सकल एकस्यापि शब्दस्य श्रवणे श्रोत्रा प्रतीयेत । तस्य सकलप्रमातृबोधतादात्म्येनावस्थितत्वात् । तथा च सकलः श्रोता परचित्तपरिच्छेदकः स्याच्छब्दस्यैव चित्तत्वात् । तथा चाभाणि समन्तभद्रेण ।

'बोधात्मता चेच्छब्दस्य न स्यादन्यत्र तच्छ्रुतिः ।
यद्बोद्धारं परित्यज्य न बोधोऽन्यत्र गच्छति ' ॥१॥ इति,
'न च स्यात्प्रत्ययो लोके यः श्रोत्रा न प्रतीयते ।
शब्दाभेदेन सत्येवं सर्वः स्यात्परचित्तवित् ॥ २ ॥' इति,

'अथाभिधीयते योऽयं शब्दात्मा विदितः सताम् ।
चेतनोऽचेतनश्चायमित्यभ्युपगमो मम ॥ ३ ॥

सिद्ध्यत्वेष तवायुष्मान्निःप्रत्यूहतया यतः ।
विश्ववैचित्र्यमेवेत्थं शब्दशब्देन शब्दितम् ॥ ४ ॥

विवादो न च नामास्ति नाम्नि वस्तुपरीक्षिणाम् ।
कश्चिन्न कंचिदाचष्टे राममन्यस्तु रावणम् ॥ ५ ॥

तन्नैकान्ततादात्म्यं शब्देनानुवेधो बोधस्याभिधातुं युक्तः । अपि चानयोस्तादात्म्यं कुतः प्रत्येयम् । न तावत् प्रत्यक्षात् तस्य स्वस्माद्भेदेनैव शब्दग्रहणे शब्दाद्भेदेनैव स्वग्रहणे प्रवृत्तेः । नाप्यनुमानात्तस्य निर्बाधस्य कस्यचिदसम्भवात् । अथ शब्दार्थयोस्तादात्म्यप्रसिद्धेः सिद्धमेव शब्देन बोधस्य तादात्म्यं बोधस्यार्थत्वादिति चेत् । तन्नोपपन्नम् । शब्दार्थयोस्तादात्म्यस्य कुतोऽप्यप्रसिद्धेः । यत्प्रतीतावेव यत्प्रतीयते तयोस्तादात्म्यं यथा वृक्षत्वशिंशपात्वयोः । शब्दप्रतीतावेव प्रतीयते च तदर्थ इत्यतोऽनुमानात्तत्सिद्धिरिति चेत् । तदचतुरस्रम् । त्वन्मतेन शब्दार्थयोस्तादात्म्यमिति शब्दार्थस्याघटनात् । तथाहि । शब्दार्थयोस्तादात्म्यमिति कोऽर्थः । यदि तदात्मनोर्भावस्तादात्म्यमेवं तर्हि तौ द्वावपीष्टावेव पृथग्भावाभिधानादिति नानयोरैक्यमेव । अथ यत्र भवतामर्थ इति प्रसिद्धिरसौ शब्दपरिणाम एव । न खलु शब्दात्पृथगर्थः कश्चिदस्ति । शब्दब्रह्मपरिवर्त्तमात्रत्वाज्जगत इति कुतो द्वये दृष्टिरस्माकं स्यादिति चेत् । नन्वेवं कथं तदात्मनोः शब्दार्थात्मनोर्भावस्तादात्म्यमिति द्विवचनाभिधानं न विरोधमधिरोक्ष्यति । शब्दाद्भिन्नस्यार्थात्मनः कस्यचिदभावात् । अथ तदात्मनो भावस्तादात्म्यमित्यभिधीयते । नन्वत्रापि वक्तव्यं कस्यायमात्मा यदात्मनो भाव इति

१ 'कश्चित्' इति प. पुस्तके तथा 'कश्चित्कदाचित्' इति म. पुस्तके पाठः ।

भापसे । यदि शब्दस्य तदा तद्व्यतिरेकेणार्थाभावात् सर्वस्य शब्दमात्रत्वाच्छब्दार्थयोस्तादात्म्यमिति न न्यायसङ्गतम् । न हि देवदत्तवन्ध्यासुतयोस्तादात्म्यमित्यभिदधति सुधियः । अथार्थस्य तदाप्ये-तदेव दूषणम् । अर्थाद्वैतापत्त्या शब्दाद्वैताभावप्रसक्तिश्च । इति न शब्दार्थयोस्तादात्म्यमिति शब्दार्थ उपपद्यते । अपि च शब्दार्थयोस्ता-दात्म्यं प्रत्यक्षप्रतिक्षिप्तम् । चाक्षुषप्रत्यक्षं हि पटकुटादिपदार्थसार्थं परिच्छिन्दत् शब्दाद्भिन्नमेव परिच्छिनत्ति । श्रोत्रप्रत्यक्षमपि शब्दं साक्षात्कुर्वत्कुटादिभ्यो भेदेनैव साक्षात्करोति । अनुमानबाधितं च तत् । तथाहि । नास्ति शब्दार्थयोस्तादात्म्यं भिन्नदेशत्वाद्भिन्नकालत्वाद्भिन्ना-कारत्वाद्वा स्तम्भकुम्भवत् । न च भिन्नदेशत्वमसिद्धम् । कर्णकुहरे हि शब्दः समुपलभ्यते भूतलादौ त्वर्थः । अभिन्नदेशतायां त्वनयोः शब्दोपलब्धौ प्रमातुर्नार्थे प्रवृत्तिः स्यादस्ति चेयम् । तथाहि ।

अहो दिष्ट्या प्राप्तास्तदिह चरणाम्भोजरजसा
पवित्रीकुर्वन्तः क्षितितलमिदं धर्मगुरवः ।
इति श्रुत्वा केऽपि प्रकृतसुकृतास्तत्प्रणतये
प्रवर्त्तन्ते तूर्णं प्रकटपुलकालंकृतिभृतः ॥ ८१ ॥

भ्रान्तिमात्रमिति चेत् । धिग्[1] धिक् त्वामपहस्तितोऽसि यदेतदपि भ्रान्तिं भापसे । नह्यत्र किञ्चित्प्रमाणमस्ति । अथास्त्येव प्रमाणं तयो-स्तादात्म्यमिति चेत् । तदिदमसिद्धमसिद्धेन साधयन्नयं निर्मर्याद-शिक्षणीय. परीक्षकाणामिति नासिद्धं शब्दार्थयोर्भिन्नदेशत्वम् । नापि भिन्नकालत्वं स्तम्भादिभावानाम् । तच्छब्देभ्यः पूर्वमपि तेषामुपलम्भात् । नापि भिन्नाकारत्वम् । तस्य शब्दार्थयोराबालमपि प्रसिद्धत्वादिति । अमुनाप्यनुमानेन बाध्यते तयोस्तादात्म्यम् । तथाहि । यो यत्साध्यं

---

१ 'धिक्' इति नास्ति प. म. पुस्तकयोः । २ 'शब्दो' इति म. पुस्तके पाठः ।

प्रयोजनं न निष्पादयति न स तेन तादात्म्यमनुभवति यथा रूपेण रसो न निष्पादयाति च कृपाण[1]प्रभृति[2]पदार्थसाध्यं प्रयोजनं कर्त्तनादिकं शब्द इति । न च शब्दस्य पदार्थप्रयोजनाप्रसाधकत्वमसिद्धम् । तत्त्वे कृपाणपाषाणादिशब्दसमुच्चारेण वक्त्रादीनां कर्त्तनाभिघातादिप्रसक्तेः । अथ यथा शब्दातिरिक्तार्थवादिनामतिनिशितानिष्ठुरधाराग्रस्यापि मण्डलाग्रस्य यत्नेन वक्त्रावेशे विधीयमाने कर्त्तनादेरभावस्तदवस्थाविशेषहेतुकत्वात्तस्य । तत्सत्तामात्रहेतुकत्वे तु न कश्चिदकृन्तद्वक्त्रः स्यात्सत्तामात्रस्य सर्वान् प्रत्याविशिष्टत्वात्तथा शब्दाद्वैतवादिनां तच्छब्दोच्चारणेऽपि तदभावो भाविष्यति तत एवेति नोक्तदोषानुषङ्ग इति चेत् । मैवम् । शब्दातिरिक्तार्थवादिनां हि मते मण्डलाग्रादीनामवस्थानभेद उपपद्यते तद्व्यतिरिक्तभेदकभावात् । सन्ति हि पुरुषप्रयत्नादृष्टादयः खड्गादीनां भेदका इति । शब्दब्रह्ममात्रतत्त्ववादिनस्तु मते नास्ति शब्दब्रह्मव्यतिरिक्तं किञ्चिद्भेदकं नाम । न चैतद्वाच्यं स्वयमेवैतद्विचित्रस्वभावं शब्दब्रह्मेति । शब्दब्रह्मसम्बन्धिनः स्वभावस्यापि शब्दब्रह्ममात्रत्वात्तस्य च पुरुषप्रयत्नादिरूपतया विचित्रत्वाभावात् । विचित्रत्वे च जगद्वैचित्र्यस्वरूपस्यैव ब्रह्मेति नाम कृतं स्यादिति नासिद्धिः पदार्थप्रयोजनाप्रसाधकत्वसाधनस्येति । इतोऽप्यनुमानात् शब्दार्थयोस्तादात्म्यं बाध्यते । तथाहि । न शब्दार्थयोस्तादात्म्यं विभिन्नेन्द्रियजनितज्ञानग्राह्यत्वाद्रूपरसवत् । नात्रापि साधनमासिद्धिधूमितम् । न हि नायनं विज्ञानं शब्दे प्रवर्त्तते रसादिज्ञानवत् । अन्यथेन्द्रियान्तरपरिकल्पनावैयर्थ्यम् । नायनविज्ञानस्यैव समस्तार्थग्राहकत्वप्रसक्तेः । नापि श्रौत्रं संवेदनं बाह्येष्वर्थेषु प्रवर्त्तत [3]एव इति न शब्दार्थयोस्तादात्म्यमिति प्रतिज्ञा श्रेयसी । शब्दप्रतीतावर्थस्य प्रतीयमानत्वादिति हेतुरप्यसिद्धः । केनचिद्विज्ञानेन शब्द-

---

१ 'चक्र' इत्यधिक म. प. पुस्तकयोः । २ 'पदार्थसार्थसाध्यं' इति प. म. पुस्तकयोः पाठः । ३ 'एव' इति नास्ति म. पुस्तके ।

संस्पर्शशून्येनापि पदार्थप्रतिपत्तेः । न खलु निखिलवस्तुवेदनानि समुल्लिखितशब्दान्येवेत्युक्तं प्राक् । अथाभिदधीथाः यथा सुषुप्तावस्थायामनुपलक्ष्यमाणोऽपि सूक्ष्मः समस्ति बोधः प्रबुद्धावस्थायां तस्यैव स्थूलभावात् तथा त्वया शब्दसंस्पर्शशून्यत्वेनाभिमते ज्ञानेऽपि समस्त्येव सूक्ष्मः शब्दः । कथमन्यथाऽसौ घटोऽयमित्युल्लेखेनोर्ध्वं स्थूलभावं भजेत् । तदप्यसङ्गतम् । सुषुप्तबोधदृष्टान्तावष्टम्भेन दार्ष्टान्तिकसिद्धेरत्र सविघ्नत्वात् । न हि सुषुप्तादिबोधः सूक्ष्मः सन्नन्यूनातिरिक्तः प्रबुद्धावस्थायां स्थूलो भवत्येकान्तैकरूपस्य तदन्यप्रतिबन्धककर्मणोऽभावेऽवस्थाभेदानुपपत्तेः । प्रतिबन्धककर्मसद्भावे च तत्कृतश्चैतन्यक्रियानिषेधः तदभावे च तत्क्रिया । न चैवं शब्दात्मनि किञ्चिदतिरिक्तमस्तीति न सूक्ष्मस्य स्थूलभावः । न खलूपचयकर्तृदलाभावे सूक्ष्मस्य सतः कस्यापि स्थूलतोपलब्धचरीति । किञ्च तज्ज्ञानै[1]रूपगतः सूक्ष्मः शब्दः किं बोधरूप एव किंवा बोधातिरिक्तरूपः । यदि बोधरूपस्तर्हि कथमकथि '**अनुविद्धमिव ज्ञानं सर्वं शब्देन वर्त्तते**' इति । बोधमात्रसद्भावेन शब्दानुविद्धत्वशब्दार्थानुपपत्तेः । आत्मनात्मानुवेधाभिधानस्यात्यन्तमसम्बद्धत्वात् । अथ बोधातिरिक्तरूपस्तर्हि तेन सूक्ष्मशब्देन बोधस्यानुवेधे समस्तवस्तुस्तोमस्यापि सूक्ष्मस्य तत्र सत्त्वापत्तिस्तस्य सूक्ष्मशब्दतादात्म्येनावस्थितत्वात् । अथ कोऽयं प्रसङ्गोऽभ्युपगम्यत एव हि मतौ सूक्ष्मोऽर्थ इति चेत् ।

कल्लोलिनीकाननकाञ्चनाद्रिरत्नाकरैः कीर्णमिदं समस्तम् ।
ब्रह्माण्डमप्यस्ति मतौ सुसूक्ष्ममेतत्सखे जल्पति कस्त्वदन्यः ॥८२॥

अत्यन्तमलौकिकं ह्येतद्यद्बोधे सूक्ष्मोऽर्थ इत्यासिद्धं शब्दप्रतीतावेवेत्यादिसाधनम् । वृक्षत्वशिंशपात्वयोरिति निदर्शनमपि साध्यशून्यम् । तत्रैकान्ततादात्म्यस्यासम्भवात् । कथञ्चिद्भेदानिबन्धनस्य कथञ्चित्तादा-

१ 'प्रबोध' इति म. पुस्तके पाठः । २ 'रूप' इति नास्ति म. पुस्तके ।

त्म्यस्यैवोपपत्तेः । वृक्षत्वशिंशपात्वे हि विशिष्टौ वस्तुधर्मौ कथञ्चिद्भेदाभेदवृत्ती नान्यथाऽनयोस्तादात्म्यम् । तदा हि यदि वृक्षत्वमेव शिंशपात्वं शिंशपात्वमेव वा वृक्षत्वं तदाऽनयोर्व्याप्यव्यापकभावाभावः स्यात् । प्रथमपक्षे धवाद्यभावप्रसंगस्तत्र वृक्षत्वस्य विद्यमानत्त्वात्तस्य च शिंशपात्वात् । अथ विशिष्टमेव वृक्षत्वं शिंशपात्वं तच्च धवादौ न विद्यते कुतो धवाद्यभावप्रसङ्ग इति चेत् । ननु किमस्य विशेषणं यतो वैशिष्ट्यं स्यात् । शिंशपात्वमेवेति चेत् । अहो अस्य तार्किकत्वं यच्छिंशपात्वगोचर एव पर्यनुयोगे शिंशपात्वाविशिष्टं वृक्षत्वं शिंशपात्वमुच्यत इत्यभिधत्ते । अभिदधातु वा तथापि सिद्धं शिंशपात्वं कथञ्चिदन्यत् वृक्षत्वात् । अन्यथा तेन तस्य वैशिष्ट्यमित्युक्तेरेवायोगादिति साध्यविकलमुदाहरणम् । साधनविकलं च । न खलु शिंशपात्वप्रतीतावेव वृक्षत्वं वृक्षत्वप्रतीतावेव वा शिंशपात्वं प्रतीयत इत्यवश्यम्भावः । धवादिषु शिंशपात्वप्रतीतिमन्तरेणापि वृक्षत्वस्य वृक्षत्वप्रतीतिमन्तरेणापि वा क्वचन शिंशपात्वस्य प्रतीतिसद्भावात् । तदेवं शब्दार्थयोस्तादात्म्यस्याप्रसिद्धेः कथमेतद्बोधार्थयोरपि सिद्ध्येत् ।

इत्थं च बोधस्य विचार्यमाणं मुहुर्मुहुर्युक्तिसहस्रशोऽपि ॥
शब्दानुविद्धत्वमिदं कथञ्चिन्न नाम सम्यग्घटनामुपैति ॥ ८३ ॥

एवं च यदवादि ‘ न सोऽस्ति प्रत्ययो लोके ’ इत्यादि । तदपि व्यतिसृष्टादेशमवसेयम् । यदपि वाचस्त्रैविध्यमभ्यधायि । तदप्यस्माकं चातुर्विध्येन सम्मताया वाचः प्रकारत्रयमाकृष्य स्वकीयाभिधानदानेनास्य नाटकोपाध्यायस्येव नूतनार्थोपदर्शनं न पुनस्तत्त्वतः । तथाहि ।

द्रव्यभावभिदया द्विधात्र वाग् द्रव्यवागपि मनोभयी सताम् ॥
द्रव्यपर्ययभिदादिमानयोः शब्दपुद्गलकदम्बकात्मिका ॥ ८४ ॥

कर्णकोटरकुटुम्बिनी पुनः प्रोच्यते निनदपर्ययात्मिका ।
वैखरीति कथयन्तु तां परे नाममात्रपरिकल्पपण्डिताः ॥ ८५ ॥

भाववागपि मता मनीषिणां व्यक्तिशक्तिविधया द्विधा पुनः ।
व्यक्तिवागिह विकल्पिका मतिः श्रोत्रगम्यवचसां निबन्धनम् ॥८६॥
मध्यमेत्युपदिशन्ति तां पुनर्ये निवारयति कः सुधीरमून् ।
वस्तुतत्त्वघटनैकलम्पटः को हि नाप्नि कलहायते बुधः ॥ ८७ ॥
वाग्वेदनावारककर्मनाशवशेन येयं भवतीह वक्तुः ।
सा शक्तिरस्याः खलु भाववाचो वदन्तु पश्यन्त्यभिधानमन्ये ॥८८॥

अपि च शब्दातिरिक्तभेदकवादिनो जैना एव वाचः प्रकारान् प्रदर्शयन्तः शोभन्ते। एकान्तेनैकरूपशब्दब्रह्मवादिनः पुनरमी तपस्विनस्तदतिरिक्तभेदकदरिद्राः कथं वाक्त्रैविध्यं संवाहयिष्यन्ति न स्वरूपं भेदकमिति च पूर्वमेव प्रकटितम् ।

सकल वाच्यवाचकतत्त्व शब्दब्रह्मविवर्तरूपमिति मतस्य खण्डनम्।

यदवाचि सकलमेवेदं वाच्यवाचकतत्त्वं शब्दब्रह्मण एव विवर्त्त इत्यादि । तदपि नानवद्यम् । शब्दब्रह्मणः सद्भावे प्रमाणाभावात् । तथाहि तत्सद्भावः प्रत्यक्षेण प्रतीयेतानुमानेनागमेन वा । यदि प्रत्यक्षेण, तत्किमिन्द्रियप्रभवेणातीन्द्रियेण वा । तत्राद्यपक्षो न समीचीनः । यतः सकलदेशकालार्थाकारनिकरकरम्बितस्वरूपं शब्दब्रह्म भवतामभिमतम् । एवंविधस्य चास्य सद्भावः किं श्रवणेन्द्रियप्रभवप्रत्यक्षेण प्रतीयेत तदितरेन्द्रियजनिताध्यक्षेण वा । न तावच्छ्रवणेन्द्रियप्रभवप्रत्यक्षेण । तस्य शब्दस्वरूपमात्रविषयतया स्वाविषयेण सकलदेशकालार्थाकारनिकरेणान्वितत्वं ब्रह्मणि प्रतिपत्तुमसमर्थत्वात् । तथाहि । यद्यदविषयं न तत्तेनान्वितत्वं कस्यचित्प्रतिपत्तुं समर्थं यथा चक्षुर्ज्ञानं रसेन । सकलदेशकालार्थाकारनिकराविषयं च श्रवणेन्द्रियप्रभवप्रत्यक्षमिति । तदविषयेणापि तेन तदन्वितत्वप्रतिपत्तावतिप्रसक्तिः । एतेन तदितरेन्द्रियजनिताध्यक्षेणापि तत्प्रतीतिः प्रतिक्षिप्ता । शब्दाविषयत्वेन तस्याः तत्प्रतीतावपर्याप्तत्वात् । तत्रेन्द्रिय-

प्रत्यक्षेण शब्दब्रह्मप्रतीतिः । नाप्यतीन्द्रियप्रत्यक्षेण । तस्यैवात्रासम्भवात् । योगिनां योगजं तत्सम्भवतीति चेत् । न । योगियोगतत्प्रभवप्रत्यक्षाणां सम्भवे सत्यद्वैताभावप्राप्तेः । न तत्प्राप्तिर्योग्यवस्थायामात्मज्योतीरूपस्यास्य स्वयं प्रकाशनादित्यपि बालप्रलपितम् । योग्यवस्थावज्ज्योतीरूपं च स्वयं प्रकाशनं चेत्येवं लक्षणस्य त्रयस्य सम्भवे सत्यद्वैताभावस्य तदवस्थत्वात् । अपि च योग्यवस्थायामतीन्द्रियप्रत्यक्षस्य ब्रह्मस्वरूपप्रकाशनस्वीकारे ततः प्राक्तद्रूपं प्रकाशते न वा । यदि प्रकाशते, तदानीमनायासनिष्पन्नः सर्वदा सर्वेषां मोक्षः स्याज्ज्योतिःस्वभावब्रह्मप्रकाशो हि मोक्षः स चायोग्यवस्थायामप्येवं प्राप्नुयात् । अथ न प्रकाशते, तदा तत्किमस्ति न वा । यदि नास्ति कथं तन्नित्यं कादाचित्कत्वादविद्यावत् । अथास्ति तर्हि कस्मान्न प्रकाशते । ग्राहकाभावादविद्याभिभूतत्वाद्वा । तत्र प्रथमपक्षो न क्षोदक्षमः । ब्रह्मण एव तद्ग्राहकत्वात् । तस्य च नित्यतया सदा सत्त्वात् । द्वितीयपक्षोऽपि न श्रेयान् । अविद्याया विचार्यमाणाया अनुपपद्यमानत्वात् ।

सा हि शब्दब्रह्मणः सकाशाद्भिन्ना भवेदभिन्ना वा । भिन्ना चेत्

प्रसङ्गादविद्यायाः खण्डनम्। ततः शब्दब्रह्मसाधकानुमानादिविचारः ।

किमसौ वस्तु अवस्तु वा स्यात् । न तावदवस्तु, अर्थक्रियाकारित्वात् ब्रह्मवत् । तत्कारित्वेऽप्यस्या अवस्तुत्वे ब्रह्मणोऽप्यवस्तुत्वप्रसङ्गः । अथार्थक्रियाकारित्वमप्यस्या नेष्यते तत्कथं वस्तुत्वापत्तिरित्यभिधीयते । हन्त कथमेवमविद्यया कलुषत्वमिवापन्नमित्यादि वचो घटेत । आकाशे च वितथप्रतिभासहेतुभूतं वास्तवमेव तिमिरहेतु प्रसिद्धमविद्यायाश्चावास्तवत्वेन ब्रह्मणि विचित्रप्रतिभासहेतुत्वानुपपत्तेितो दृष्टान्तदार्ष्टान्तिकयोः साम्यासम्भवाद्यथा विशुद्धमाकाशमित्याद्यपि दुरुपपादमेव । न चानाधेयाप्रहेयातिशयस्य शब्दब्रह्मणोऽविद्यासामर्थ्या-

---

१ 'योगावस्थायां' इत्युचितं भाति ।

द्भेदेन प्रतिभासो ज्यायान् । अतिप्रसक्तेः । नाप्यवस्तुमाहात्म्याद्वस्तुनोऽन्यथाभावो भवति । अतिप्रसक्तेरेव । अथ वस्त्वविद्या, तन्न वाच्यमभ्युपगमहानिप्रसङ्गात् । ब्रह्माविद्यालक्षणवस्तुद्वितयप्राप्त्याद्वैताभावप्रसक्तेः । अथाभिन्ना, तदानीमविद्यायाः सत्यरूपतापत्तिः । सत्यरूपाद्ब्रह्मणः सकाशादभिन्नत्वात्तत्स्वरूपवत् । ततश्च कथमविद्याया मिथ्यात्वप्रतीतिनिमित्तत्वं ब्रह्मवदिति नास्त्यविद्या असत्या वा । न ज्योतिःस्वभावस्य ब्रह्मणः कथमप्यभिभवः कर्तुं शक्यते । ततोऽसत्त्वादेवायोग्यवस्थायामात्मज्योतिःस्वरूपस्य शब्दब्रह्मणोऽप्रकाशनं न पुनरविद्याभिभूतत्वादिति । अयोगिदशायां तद्रूपस्य ब्रह्मणोऽसत्त्वे च योगिदशायामपि कुतः सत्त्वं स्याद्यतोऽतीन्द्रियप्रत्यक्षेण तत्प्रतीयेत । तन्न प्रत्यक्षेण शब्दब्रह्मणः सद्भावः प्रतीयते । नाप्यनुमानेन, तस्य तत्सद्भावावेदकस्य कस्यचिदसम्भवात् । अथास्त्येव ये यद्विकारानुस्यूतास्ते तन्मया यथा घटघटीशरावोदञ्चनादयो मृद्विकारा मृन्मयाः, शब्दविकारानुस्यूताश्च सर्वे पदार्था इति । नैवमस्यानुमानाभासत्वात् । तथाहि शब्दमयत्वमत्र कीदृशं साधयितुमभिप्रेतम् । शब्दपरिणामरूपत्वं घटस्य मृन्मयत्ववत्, शब्दादुत्पन्नत्वं वा यथान्नमयाः प्राणा इति । तत्र न तावदाद्यः कल्पः कल्पयितुमुचितः । परिणामस्यैवात्रायोगात् । शब्दात्मकं हि ब्रह्म नीलादिरूपतां प्रतिपद्यमानं स्वाभाविकं शब्दस्वरूपं परित्यज्य प्रतिपद्येतापरित्यज्य वा । आद्यपक्षे तस्यानादिनिधनत्वविरोधः । पौरस्त्यस्वरूपविनाशात् । द्वितीयपक्षे पुनर्नीलादिसंवेदनकाले बधिरस्यापि शब्दसंवेदनापत्तिर्नीलादिवस्त्वव्यतिरेकात्तत्स्वरूपवत् । शब्दस्वरूपस्यासंवेदने वा नीलादेरप्यसंवेदनप्रसङ्गस्तादात्म्याविशेषात् । अन्यथा विरुद्धधर्माध्यासतः शब्दस्य नीलादेः सकाशाद्भेदप्रसङ्गः । न ह्येकस्यैक-

---

१ 'अयोगावस्थायां' इत्युचितं भाति । २ 'यदाकारा' इति म. पुस्तके पाठः । ३ 'शब्दाकारा' इति म. पुस्तके पाठः । ४ 'पदार्थसार्था' इति म. पुस्तके पाठः ।

दैकप्रमात्रपेक्षया ग्रहणमग्रहणं च युक्तम् । विरोधात् । किञ्चासौ शब्दात्मा परिणामं प्रतिपद्यमानः प्रतिपदार्थं भेदं प्रतिपद्येत न वा । तत्राद्यकल्पे शब्दब्रह्मणोऽनेकत्वप्रसक्तिः । विभिन्नाऽनेकार्थस्वभावात्मकत्वात् तत्स्वरूपवत् । द्वितीयविकल्पे तु सर्वेषां नीलादीनां देशकालस्वभावव्यापारावस्थादिभेदाभावः प्रतिभासभेदाभावश्चानुषज्येत । एकस्वभावाच्छब्दब्रह्मणोऽभिन्नत्वात् स्वरूपवत् । तन्न शब्दपरिणामरूपत्वं शब्दमयत्वं । नापि शब्दादुत्पन्नत्वम् । तस्य नित्यत्वेनाविकारित्वादविकारिणश्च कार्योत्पादविरोधात् । किञ्च । कार्यमस्मादुत्पद्यमानमर्थान्तरमनर्थान्तरं वोत्पद्येत । तत्रार्थान्तरस्योत्पत्तौ कथं शब्दब्रह्माद्वैतवादः । कार्यस्य ततो द्वितीयस्य सद्भावात् । अनर्थान्तरभूतस्य तु कार्यग्रामस्योत्पत्तौ शब्दब्रह्मणोऽनादिनिधनत्वविरोधः । तदुत्पत्तौ तस्याप्यनर्थान्तरभूतस्योत्पद्यमानत्वादुत्पन्नस्य चावश्यं विनाशित्वादिति । अर्थानां शब्दमयत्वाघटनादसम्भवि साध्यम् । शब्दाकारानुस्यूतत्वं साधनमप्यसिद्धम् । प्रत्यक्षेण हि नीलादिकं प्रतिपद्यमानः प्रतिपत्ता शब्दाकारासम्पृक्तमेव प्रतिपद्यत इति कथं शब्दाकारानुस्यूतत्वं सिद्ध्येत् । किञ्च शब्दाकारानुस्यूतत्वं शब्दानुविद्धत्वमभिधीयते । तच्चार्थानां न युक्तमिति प्रोक्तं प्राक् । ततोऽपि च कथमेतत्सिद्ध्येत् । कल्पितत्वाच्चास्यासिद्धिः । परमार्थतः शब्दाकारानुस्यूतत्वलक्षणधर्माधाराणां पदार्थानामसत्त्वेऽपि हि तेषु तदाकारानुस्यूतत्वं त्वया परिकल्प्यते परिकल्पिताच्च हेतोः कथं पारमार्थिकं ब्रह्म सिद्ध्येत् । साध्यसाधनधर्मविकलश्च दृष्टान्तः । कुम्भादीनामपि सर्वथैकमयत्वस्यैकाकारानुस्यूतत्वस्य चासिद्धेः । समस्तार्थानां समानासमानपरिणामात्मकत्वात् । तन्नानुमानेनापि शब्दब्रह्म समधिगन्तुं पार्यते । नाप्यागमेन, '[1] सर्वं खल्विदं ब्रह्म' इत्याद्यागमस्य ब्रह्मणः सकाशादर्थान्तरभावे द्वैतसिद्धिप्रसङ्गात् ।

---

१ छां. उ. ३-१४

अनर्थान्तरभावे तद्वदागमस्यापि असिद्धिप्रसङ्गः । तन्न शब्दस्वभावस्य ब्रह्मणः सद्भावः कुतश्चित् प्रमाणादुपपद्यते ।

इत्थं शब्दब्रह्मणो दूषणौघं दर्शं दर्शं दूरमुज्जृम्भमाणम् ।
नैवं श्रद्धां कोऽपि कुर्वीत विद्वान् शब्दात्मत्वे सर्वथा प्रत्ययानाम् ॥८९॥

यत्तावद्बुद्धशिष्यैर्निजसमयवशान्निर्विकल्पत्वमुक्तं
प्रत्यक्षे तत्पुरैव प्रतिहतिपदवीं प्रापितं सप्रपञ्चम् ।
शब्दानुस्यूतिरुक्ता मतिषु तदपरैर्यापि सापि व्यपास्ता
तस्माज्ज्ञानं समस्तु व्यवसितिसुभगं मानतासम्मतं यत् ॥९०॥ ॥७॥

समारोपपरिपन्थित्वादित्युक्तमिति समारोपस्वरूपनिरूपणायाह-

**अतस्मिँस्तदध्यवसायः समारोप इति ॥ ८ ॥**

अतस्मिन्नतत्प्रकारे वस्तुनि । तदध्यवसायस्तत्प्रकारत्वनिश्चयो यः स समारोप इति ॥ ८ ॥

अथास्य प्रकारानाह—

**स विपर्ययसंशयानध्यवसायभेदात् त्रेधेति ॥ ९ ॥**

स्पष्टम् ॥ ९ ॥

अथैतत्सूत्रनिर्देशक्रमेण विपर्ययस्वरूपमादौ निरूपयति—

**विपरीतैककोटिनिष्टंकनं विपर्यय इति ॥ १० ॥**

विपरिताया एकस्या एव कोटेरंशस्य निष्टङ्कनं निश्चयन विपर्ययः॥१०॥

उदाहरणमाह—

**यथा शुक्तिकायामिदं रजतमितीति ॥ ११ ॥**

यथेत्युदाहरणोपन्यासार्थः । शुक्तिकायामरजताकारायामिदं रजतमिति रजताकारतया ज्ञानम्, विपर्ययो विपरीतख्यातिरित्यर्थः। इतिशब्द

अख्यात्यैव विवेकाख्यातिं स्वीकुर्वता प्रभाकरमतानुसारिणा सविस्तरं खण्डनम्।

तथाहि । ते प्राहुः । इदं रजतमित्यादिविपरीतप्रत्ययोत्पत्तौ न किमपि कारणमालोक्यते । तदुत्पत्तौ हि कारणमिन्द्रियमन्यद्वा भवेत् । न तावदन्यत् । निवृत्तेन्द्रियव्यापारस्यापि तथाविधबोधोत्पत्तिप्रसक्तेः । नापीन्द्रियम् । तद्धि रजतसदृशे शुक्तिशकले सम्प्रयुक्तं सत्तत्र निर्विकल्पकमुपजनयत्सविकल्पकमपि तत्रैवोपजनयेन्न रजते । रजतस्येन्द्रियेणासम्प्रयोगात्तत्रावर्त्तमानत्वाच्च । न चाऽप्रयुक्तमवर्त्तमानं चेन्द्रियपरिच्छेद्यम् 'सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना' इत्यभिधानात् । अन्यथा व्यवहितस्यातीतस्यानन्तानामपि तत्परिच्छेद्यत्वप्रसक्तितोऽयत्ननिष्पन्नं सर्वस्यापि सर्वज्ञत्वं भवेत् । यदि चेन्द्रियं विपरीतप्रत्ययमुत्पादयति तर्हि सर्वदैव किमिति नोत्पादयति । न च दोषाणां सकलमपीदं विलसितमिति जल्पनीयम् । दुष्टं हि कारणमौत्सर्गिककार्यविहितौ प्रतिहतसामर्थ्यं सम्पन्नमिति तदेवमाजीजनत् । कुतः पुनर्विपरीतकार्यविहितये प्रवर्त्तितुमुत्सहेत । न हि कलमबीजं तैलकलुषितमपि कदलाङ्कुरकरणकौशलमवलम्बते । किञ्च किमिदं दोषविलसितं नाम । इन्द्रियसामर्थ्यस्य प्रतिस्खलनं विनाशो वा । पक्षद्वयमप्यनुपपन्नम् । इन्द्रियसामर्थ्यस्य प्रतिस्खलने विनाशे वा सर्वथा कार्यानुत्पत्तिप्रसक्तेः । न खलु मणिमन्त्रादिना ज्वलनसामर्थ्यस्य प्रतिस्खलने विनाशे वा स्फोटादिकार्योत्पत्तिः समुपलब्धा । तस्मात्कारणाभावान्नायं विपरीतप्रत्ययः सङ्गच्छते । तत्किं हन्त शुक्तिकायां रजतप्रतिभासः सम्यक्प्रत्यय एव । अयि मुग्ध केन कर्णे तव न्यवेशि शुक्तिकाया रजतप्रतिभास इति । इदं रजतमिति हि ग्रहणस्मरणरूपं सम्यक्प्रत्ययद्वयम् । विभिन्नकारणजन्यत्वाद्भिन्नगोचरत्वाच्च । इन्द्रियं हीदमंशोल्लेखवतोऽध्यक्षस्य कारणम् । साधारणभास्वररूपदर्शनप्रतिबोध्यमानः संस्कारश्च रजतमिति स्मरणस्य । तथा इदमिति बोधस्य पुरोवर्त्तिशुक्तिकाशकल-

१ मी॰ श्लो॰ वा॰ सू॰ ४ प्रत्यक्षसूत्रे श्लो॰ ८४

मालम्बनम् । रजतमिति तु बोधस्य व्यवहितं हट्टपट्टादिव्यवस्थितं रजतम् । रजताकारं हि संवेदनं रजतगोचरमेव युज्यते न शुक्तिशकलालम्बनम् । अन्याकारस्य संवेदनस्यान्यालम्बनत्वानुपपत्तेः । तदुपपत्तौ च समस्तप्रतिभासः सकलालम्बनः स्यादित्यशेषस्याशेषदर्शित्वप्रसक्तिः । प्रयोगो विवादापन्नं रजतसंवेदनं रजतगोचरमेव तदाकारत्वात् । यद्यदाकारं संवेदनं तत्तद्गोचरमेव यथा स्तम्भाकारं स्तम्भगोचरमेवेति । यदि चान्याकारमपि संवेदनमन्यगोचरं स्यात्तदाऽस्य स्वार्थव्यभिचारतः सर्वत्राप्यविश्रम्भान्न कस्यापि क्वचन प्रवृत्तिर्निवृत्तिर्वा कुतश्चिद्भवेदित्यखिलव्यवहारप्रलयप्रसङ्गः । तस्माद्रजताकारसंवेदनं रजतगोचरमेवाङ्गीकर्त्तव्यम् । तदा च तत्र न रजतं पुरतः स्थितं समस्तीत्यतीतमेव तत्स्मर्यत इति पारिशेष्यात्प्रसिद्धम् । तथाहि । न तावद्रजतनयनसम्प्रयोगसमुपजातमेव तद्रजतज्ञानमिति साम्प्रतम् । अतिविप्रकृष्टविषये सन्निकर्षासम्भवादिन्द्रियाणाम् । असति च लिङ्गाद्युपलम्भे जायमानस्यास्यानुमानादिभावो न शङ्कितुमपि शक्यः । ततः परिशेषतः स्मरणमेवैतदाश्रयणीयम् । अपि चेदं स्मरणमनाकलितरजतस्य प्रतिपत्तुरनुत्पद्यमानत्वात् । यदित्थं तत्तथा यथोभयवाद्यविवादास्पदरजतस्मरणम् । न चेदं वाच्यं न स्मरणमिदं तदंशवैधुर्यात्सम्प्रतिपन्नग्रहणवदिति । इह भूतले घटो नास्तीत्यनुल्लिखिततदंशस्यापि स्मरणस्य स्वीकरणात् । भूयसां च पदपदार्थस्मरणानामनुल्लिखिततदंशानामेवोपलम्भात् । अथेदं प्रेर्यते यद्यतीतं रजतमत्र स्मर्यते तदास्यातीततया प्रतिभासः स्यान्न चासावस्ति । एतदपि सुकुमारशेमुषीविलसितम् । यतः काचकामलप्रमुखकरणोद्भवदोषसमूहमाहात्म्याद्वर्तमानस्य शुक्तिशकललक्षणार्थस्य ग्राहकं ज्ञानं शुक्तिलक्षणमर्थं शुक्तिकेयमिति स्वस्वरूपेण प्रतिपत्तुमसमर्थं शुक्तित्वलक्षणासाधारणधर्मस्य रजताच्छुक्तेर्भेदकस्यानेनाग्रहणात् चाकचक्यादिसाधारणधर्म्मात्मना तु रजतान्वयिना पुरस्थितं वस्तु रजतादगृहीतभेदं प्रतिपद्यमानं रजत-

धातौ तिक्तत्वं परिच्छिन्दानः प्रतिपत्ता मधुरद्रव्याश्रितं माधुर्यं परिच्छेत्तुं न पारयति । यच्च तिक्तत्वं परिच्छिनत्ति तत्परमार्थतः पित्तधात्वधिकरणमेव न तु मधुरद्रव्यगतं तत्तु समास्वादयन्नयं प्रमाता दोषवशान्नैव विवेक्तुं शक्नोति यथा तिक्तशर्कराप्रत्यये । एवं पीतः शङ्ख इत्यादावपि । तत्र हि विनिर्गच्छन्नयनरश्मिवर्त्तिनः पित्तधातोः पीतिमानमाकलयन् प्रमाता नयनदोषवशात् कम्बुसमाश्रितं शुक्लत्वमाकलयितुं न शक्नोति । यत्तु पीतिमानं परिच्छिनत्ति स परमार्थतः पित्तधातुसमाश्रित एव न तु कम्बुवर्त्ती दोषवशात्तु प्रतिपत्ता नेत्थं विभागं कर्तुं पटीयानिति । एवं च सति सर्वत्र सम्यग्ग्रहणमेव विवेकाख्यातिः सिद्धा भवति । तथा च कोऽपि स प्रत्ययो नास्ति यो विपर्ययाख्यां लभेत । ये तु विवेकाख्यातेर्द्विषन्तः शुक्तौ रजतप्रतीतिं ख्यापयन्ति न ते सङ्ख्याविदः[1] । इत्थं हि तेषां बाह्यार्थसिद्धिर्न प्राप्नोति । प्रस्तुतरजतसंवेदनदृष्टान्तेन समस्तसंवेदनानां निरालम्बनत्वप्रसक्तेः । यथैव हि प्राकरणिकं रजतसंवेदनं रजताभावेऽपि रजतं प्रकाशयति तथा सकलानि घटादिबाह्यार्थसंवेदनानि बाह्यार्थाभ्रेषेऽपि तं प्रकाशयिष्यन्तीति ज्ञानाद्वैतवादिमतासिद्धिर्निःप्रत्यूहा वर्त्तमाना केन वार्येत । ततस्तामनिच्छता तत्र विवेकाख्यातिरेव स्वीकर्त्तव्या ।

विवेकेनाख्यातिस्तदियमधुना सिद्धिसदनं
समारूढा प्रौढप्रमितिपृथुनिश्रेणिवशतः ।
प्रमाणेनोन्मुक्तां पुनरितरथा ख्यातिमपरे
प्रकामं जल्पन्तः कथमिह सतां ग्राह्यवचनाः ॥ ९२ ॥

क्षिप्त्वेदानीं निशितनिशितान्युक्तिबाणानशेषान्
शून्यां मन्ये त्वमसि कृतवान् स्वान्ततूणीं स्वकीयान् ।
सम्प्रत्यत्रावहिति पदवीं सर्वथारोपय त्वं
**श्रीजैनानामयि ऋजुमते तत्प्रतीकारकेलीः** ॥ ९३ ॥

---

1 पण्डिताः ।

तथाहि यत्तावदभिहितमिदं रजतमित्यादिविपरीतप्रत्ययोत्पत्तौ न किमपि कारणमालोक्यत इत्यादि । तदाकुलम् । कामलादिदोषदूषितनेत्रादिसामग्र्या एव तत्कारणत्वेनावलोकनात् । यत्पुनरिन्द्रियपक्षे प्रोक्तं तद्धि रजतसदृशे शुक्तिशकले सम्प्रयुक्तं सत्तत्रेत्यादि । तदनभ्युपगमोपालम्भमात्रम् । शुक्तिकाशकलस्यैवेदं रजतमिति ज्ञानगोचरत्वेनाभ्युपगमात् । स्थगितनिजवपुरुपगृहीतरजतरूपा शुक्तिकैव ह्यत्र प्रकाशत इति स्याद्वादिनां मुद्रा । अपि च न कार्यप्रतीतौ कारणाभावाशङ्का युक्तिमती । तथा च प्रामाणिकाः 'कार्यं चेदवगम्येत किं कारणपरीक्षया । कार्यं चेन्नावगम्येत किं कारणपरीक्षया' इति । प्रतीयते चात्रेदं रजतमित्याकारकज्ञानलक्षणं कार्यं ततोऽस्यावश्यं कल्पनीयं किञ्चित्कारणम् । तच्च कल्पितमेव दोषकलुषितेन्द्रियादिसामग्रीरूपम् । यदप्यवादि दुष्टं हि कारणमौत्सर्गिककार्यविहितावित्यादि । तदप्यचतुरस्रम् । दावदाहदोषदूषितशक्तीनां वेत्रबीजानां वेत्राङ्कुरविपरीतकदलाङ्कुरलक्षणकार्यकरणकौशलावलोकनात् ।

अथ दावदाहस्य वेत्राङ्कुर एव कर्त्तव्ये दोषता । कदलाङ्कुरे तु गुणभाव एवेत्युच्यते । तर्ह्यत्रापि काचकामलादेः सम्यग्ज्ञाने कर्त्तव्ये दोषता । मिथ्याज्ञाने पुनः साधुतैवेति सर्वं समानम् । तस्मादौत्सर्गिककार्यकरणे प्रतिहतसामर्थ्यानां करणानां विपरीतकार्योत्पादकत्वमुपलभ्यमानं भवताभ्युपगन्तव्यम् । अन्यथा स्वमतव्याघातः । तथाहि रजतमिति स्मरणस्य पूर्वानुभवदेशाबाधितप्रवृत्तिरूपौत्सर्गिककार्यातिक्रमेण शुक्तिकादेशे प्रवृत्तिजनकत्वं भवतैवाङ्गीकृतम् । तच्चैवमुच्यमाने कथं सङ्गच्छेत । भेदाग्रहसहकारिरहितस्य तत्तस्यौत्सर्गिकं कार्यं तत्सहचरितस्य त्विदमेव तथेति चेत् । ममापि दोषरहितस्येन्द्रियादेस्तदौत्सर्गिकं कार्यं दोषसहितस्य त्विदमेव तथेति समानम् । स्मरणस्य प्रवृत्तिरौत्सर्गिकं कार्यं सा च यत्र क्वचिद्यथा तथा भवतु तथापि न तदतिक्रम इति चेत् । ममापीन्द्रियादेर्ज्ञानमौत्सर्गिकं कार्यं तच्च यत्र क्वचिद्यथा

तथा भवतु तथापि न तदतिक्रम इति समः समाधिः । यच्चोक्तं किमिदं दोषविलसितं नामेन्द्रियसामर्थ्यस्य प्रतिस्खलनमित्यादि । तत्र विनाशपक्ष एव कक्षीक्रियते । न तत्र सर्वथा कार्यानुत्पत्तिप्रसक्तिः । शक्त्यन्तरोत्पादस्यातीन्द्रियशक्तिप्रतिष्ठायां वक्ष्यमाणत्वात् । यदपि तत्किं हन्त शुक्तिकाया रजतप्रतिभासः सम्यक्प्रत्यय एवेत्याशङ्क्य अयि मुग्ध केन कर्णे तव न्यवेशीत्यादिना शुक्तिशकलालम्बनमिति पर्यन्तमुदैर्यत । तत्र विभिन्नकारणजन्यत्वादिभ्यः सामग्र्यन्तर्गतानेककारणभेदात् प्रस्तुतकार्यभेदः सिषाधयिषितः सामग्रीभेदाद्वा । आद्यभेदे दत्तः संवेदनानामैक्याय जलाञ्जलिः । सामग्र्यन्तर्गतैकरूपालोकलोचनादिभिरनेकैः कारणैरुत्पद्यमानस्य स्तम्भादिसंवेदनस्याप्यनेकत्वप्रसक्तेः । न[1] चेयमिति तैरनेकान्तः । द्वितीयकल्पे पुनरसिद्धिः सामग्रीभेदस्यात्रासम्भवाच्चक्षुरादिकारणकदम्बकस्यैव प्रकृतरजतज्ञानकारणत्वादथ इदमिति रजतमिति च प्रत्यक्षः स्मृतिरूपः कार्यभेदो अत्र सम्भाव्यत एव । तत्र सामग्रीभेदोऽनुमीयत इति मतिः । नेयं सा परस्पराश्रयदोषप्रसक्तेः । सिद्धे हि सामग्रीभेदे इदं रजतमित्यत्र प्रत्यक्षस्मृतिरूपतया कार्यभेदसिद्धिस्तत्सिद्धौ च सामग्रीभेदसिद्धिरिति । योऽपि भेदासिद्धौ विभिन्नगोचरत्वादिति हेतुरुपन्यस्तः । सोऽप्यसिद्धः । शुक्तिशकलस्यैव प्रस्तुतरजतज्ञानगोचरत्वात् । पुरोवर्त्तमानं हि शुक्तिशकलं लोचनादयः काचकामलादिदोषपरिष्वङ्गाद्रजताकारतया दर्शयन्ति । कथमन्यथा शुक्तिसान्निध्यमनपेक्षमाणमेव हि प्रस्तुतरजतज्ञानं नोत्पद्येत । यदप्युक्तमन्याकारस्य संवेदनस्यान्यालम्बनत्वानुपपत्तेस्तदुपपत्तौ वेत्यादि । तदेतद्दुःशिक्षितयन्त्रवाहकस्येवास्य स्ववधायोपस्थानम् । एवं वेत्राङ्कुरः हेतुभ्यो वेत्रबीजेभ्यो दावदग्धेभ्योऽपि कथमन्यकारणकार्यः कदलाङ्कुरः समुत्पद्यते । समुत्पत्तौ वा तत एव सकलकार्योत्पत्तेर्वेत्रबीजकरणा-

१ न चेत्यादि प्रसक्तेरित्यन्तं नास्ति म. प. पुस्तकयोः। तथा 'द्वितीयपक्षे स्फुटमन्योन्याश्रयः' इति म. पुस्तकेऽधिकः पाठः ।

द्वैतसिद्धिप्रसङ्गः । यदपि प्रस्तुतरजतज्ञानस्य रजतगोचरतासाधनाय- विवादापन्नं रजतसंवेदनं रजतगोचरमेव तदाकारत्वादित्यनुमानमवादि । तदपि प्रत्यभिज्ञाविप्रतिक्षिप्तपक्षत्वादुपेक्षार्हम् । तथाहि बाधकप्रत्यय-समनन्तरं यदेव शुक्तिशकलं कलधौतरूपेण मया प्राक्प्रत्याकलितं तदेवेदमिति प्रत्यभिज्ञानमात्मलाभमनुभवदनुभूयते । तथा विवादापन्नं शुक्तिशकलं रजतज्ञानालम्बनं रजतोपायव्यतिरेकित्वे सति रजतार्थिनां प्रवृत्तिविषयत्वात् । यद्यदेवं तत्तथा यथा सम्यग्रजतम् । यथोक्तसाधनसम्पन्नं च विवादापन्नं शुक्तिशकलम् । तस्माद्यथोक्तसाध्याधारमिति । तथा शुक्तिशकलं विवादास्पदरजतज्ञानालम्बनं नेदं रजतमिति प्रत्ययविषयत्वात् । यदेवं न भवति न तदेवं यथा सम्यग्रजतम् । न च न तथेदं तस्मादुक्तसाध्यसमन्वितमिति । तथा विवादापन्नं रजतसंवेदनं पुरोवर्त्तिशुक्तिशकलगोचरमेव तत्रैव प्रवृत्तिनिमित्तत्वाद्यद्यत्रैव प्रवृत्तिनिमित्तं तत्तद्गोचरमेव यथा सम्यग्रजते रजतज्ञानम् । पुरोवर्तिन्येव शुक्तिशकले प्रवृत्तिनिमित्तं चेदं ज्ञानं तस्मात्तद्गोचरमेवेति । अतिक्रान्तकलधौतालम्बनत्वे तु न शुक्तिकाशकले प्रवृत्तिनिमित्तत्व स्यात् । अथातिक्रान्तकलधौतालम्बनत्वेऽप्यस्य दोषमहाम्यादतिक्रान्तकलधौतस्य शुक्तिशकलतो भेदस्याग्रहणात्तत्र प्रवृत्तिनिमित्तत्वं युज्यते । एतदप्यविचारितरमणीयम् । यतो भेद एव । कोऽत्राभिप्रेत आयुष्मतः । किं वस्तुस्वरूपमात्रं परस्पराभावो व्यावर्त्तकधर्मयोगो वा । पौरस्त्यपक्षे ग्रहणस्मरणाभ्यां पुरोवर्त्तिपूर्वानुभूतवस्तुस्वरूपग्राहिभ्यां भेदो गृहीत एव । अन्यथाकारं वा ग्रहे विपरीतख्यातिरेव स्यात् । द्वितीयस्तु पक्षः प्रभाकरैरभावानङ्गीकारादनभ्युपगत एव । अभ्युपगमे वा विपणिवीथ्यादाववगतस्य रजतस्य मुक्ताकरतीरगतशुक्तिकायामभावः स्फुट एव । अनियतदेशं विगलिततद्विशेषं रजतं स्मृतं तदभावश्च नात्राधिगत इति चेत् । हन्त पूर्वमनियतदेशमेव रजतमात्रमाभासितम् । दोषवशाद्वा नियतदेशमप्यवगतमनियतदेशतया स्मर्यते । न तावदाद्यः

पक्षः। अनियतदेशप्रतीत्यभावेन तस्य पराहतत्वात्। द्वितीये तु विपरीतख्यातिर्नियतस्यानियतत्वेनाभासनात्। देशो न स्मर्यते रजतमात्रं तु स्मृतमिति कुतो विपरीतख्यातिरिति चेत्। तथापि यत्तावत्तेन पूर्वमवगतं तस्याभावः स्फुट एवेत्युक्तम् पूर्वावगते हि रजते स्मर्यमाणे केवलाधिकरणोपलब्धिरेव तस्याभावोपलम्भः। यद्यपि वणिग्वीथ्यादिगोचराणां रजतानामभावः स्फुटतरस्तथापि शुक्तिकादेशस्थस्य तस्य नावगत इति चेत्। न। शुक्तिकादेशे न रजतं तावदवगतमेव। अनवगतं च न स्मृतिविषयः। अस्मर्यमाणस्य चाभावग्रहोऽपि न प्रवर्त्तकः। प्रवर्त्तकत्वे वा यस्यैव कस्यचिदभावो नावगतस्ततस्तदर्थिनः प्रवृत्तिः स्यादविशेषात्। अथ व्यावर्त्तकधर्माग्रहो भेदाग्रहः। तथा च वणिग्वीथ्यादावेवावगतस्य रजतस्यात्र स्मरणं व्यावर्त्तकास्तु देशकालजात्यादिभेदा न गृह्यन्ते। एवं च सति परस्पराभावो गृह्यतां मा वाग्राहि नास्त्युभयथापि विरोधः। एतदपि न मनोहरम्। स्मर्यमाणवस्तुनि रजतत्वस्यैव व्यावर्त्तकधर्मस्य प्रतिभासनात्। व्यावर्त्तकत्वं च तस्य पुरोवर्त्तिन्यविद्यमानत्वात्। अविद्यमानस्यापि च प्रतिभासे विपरीतख्यातिः। स्यादेतद्यद्यपि गृह्यमाणात् स्मर्यमाणस्य व्यावर्त्तको धर्मोऽवगतस्तथापि गृह्यमाणस्य स्मर्यमाणान्नावगतः। न खलु शुक्लत्वादयो धर्मा यावन्तः प्रतिभान्ति शुक्तिकायां तावद्भिः सा व्यावर्त्तयितुं शक्यते। तेषां रजतसाधारणत्वात्। एतदपि नास्ति। देशकालावस्थाशून्यतया स्मर्यमाणाद्रजतात् पुरोवर्त्तिनोऽनुभूयमानस्य व्यावर्त्तकानां कालदेशावस्थाविशेषाणां प्रमीयमाणत्वात्। अथैवं मन्येथाः शुक्तिकारजतयोर्यौ परस्परभेदकौ धर्मौ तयोः प्रतिभानं निवृत्तिहेतुप्रतिभानं तु प्रवृत्तिहेतुरिति सिद्धम्। न च देशभेदास्तादृशास्तेषां शुक्तिकायामिव रजतेऽपि समानत्वात्। रजतत्वशुक्तिकात्वे पुनस्तादृशी ते च न प्रतिभाते। ततश्च युक्ता प्रवृत्तिरिति। एतदपि नोपपद्यते। रजतं स्मरतो रजतार्थिनः पाषाणत्वसामान्यविशेषानुपलम्भे पाषाण-

व्यक्तिदर्शने तत्र प्रवृत्तिप्रसक्तेः । चाकचक्यादिसादृश्याभावात्तत्र न प्रवर्त्तत इति चेत् । न । क्षीरोदकल्पान्तकल्लोलकलितमहिम्नि हिमांशुकिरणधाम्नि तुहिनाचले प्रवृत्तिप्रसङ्गात् । पर्वतत्वविशेषस्तत्र प्रतीत इति चेत् । न । दूरत्वादिदोषाच्छरदभ्रानुकारिणि तस्मिन्प्रतिभातेऽपि पर्वतत्वाप्रतिभासनात् । सामान्यविशेष इव परिमाणभेदोऽपि व्यावर्त्तकस्तत्र यद्यपि नाम सामान्यविशेषो न प्रतिभातस्तथापि परिमाणविशेषप्रतीतिः केन वार्यत इति चेत् । हन्त परिमाणं सर्वद्रव्यसाधारणं कथमिव व्यावर्त्तकं भवेत् । जात्या साधारणमप्यवान्तरभेदात्तथा भवतीति चेत् । नन्वनेन न्यायेन कालदेशविशेषोऽपि जात्या साधारणोऽप्यवान्तरवर्त्तमानत्वपुरःप्रदेशत्वादिभेदाद्व्यावर्त्तकस्तथा च सति तत्प्रतिभाने भेदोऽपि प्रतिभात इति कुतो भेदाग्रहः । इदमपरमालोच्यतां तादात्म्यप्रतीतिरुपजायमाना क्वचित् किमाकारा किं सामानाधिकरण्येन प्रतीतिराहोस्वित्परस्पराभावविरहितत्वेन विषयसंवेदनम् । आद्ये कल्पे विपरीतख्यातिः । इदं रजतमिति समानाधिकरणतयैव प्रतीतेरुत्पादात् । नतु परमार्थतः सामानाधिकरण्यमस्ति प्रकृते किन्तु भेदाग्रहमात्रेण तथाभिमन्यन्ते प्रतिपत्तारः । तथा चावाचि शालिकेन[1] ।

‘ सन्निहितरजतशकले रजतमतिर्भवति यादृशी सत्या ।
भेदानध्यवसायादियमपि तादृक्परिस्फुरति ’ इति ।

हन्त परमार्थतो व्यधिकरणेऽपि प्रतीती यदि सामानाधिकरण्येनाभिमन्येते प्रतिपत्तृभिस्तदा विपरीतख्यातिरेव तदहो निर्लज्जता अन्यथाख्यातिर्नेष्यते भेदानध्यवसायादियमपि तादृक्परिस्फुरतीत्येतच्चाभिधीयते । अपि च यथा सन्निहितरजतमतितुल्यता विवादास्पदरजतमतेः कथ्यते तथा वर्त्तमानत्वानवभासितयाऽतीतरजतावभासिज्ञानतुल्यताप्यस्या अस्तीति तुल्यतया तद्रूपाप्र-

१ प्रकरणपञ्जिकायां नयवीथ्याख्ये चतुर्थप्रकरणे कारिका ४१

वृत्तिनिमित्तमपि भवेद्विशेषाभावात् । तथा चायं रजतज्ञानवान् प्रतिपत्ता पुरोवर्त्तिनि शुक्तिशकललक्षणेऽर्थे सन्देहदोलान्दोलितमतिः किं प्रवर्त्तेत निवर्त्तेत वा । युगपत्परस्परविरुद्धप्रवृत्तिनिवृत्तिलक्षणक्रियाद्वयं कर्त्तुमापन्नः किं नाम कुर्वीतेति कष्टां काञ्चिद्दशामाविष्टोऽसौ तपस्वी । परस्पराभावविरहितत्वेन विषयसंवेदनमिति द्वितीये तु पक्षे त एवं प्रष्टव्याः । किं सर्वथा परस्पराभावविरहिततया रजतस्य शुक्तिशकले प्रतिभासः । किं वा शबलतया । आद्ये पक्षे तादात्म्यग्रहणप्रसङ्गस्तथा च विपरीतख्यातिः । द्वितीये तु प्रवृत्तिर्दुरुपपादा । न हि शबलतया वस्तुनि प्रतीते प्रतिनियतरजतार्थिनः प्रवर्त्तन्त इति । अपि च न तावज्ज्ञानमुपजातमात्रमेव सत्तामात्रेण प्रवृत्तिमुपजनयति किं तर्हीच्छाद्वेषजननानन्तरोपजाततदनुरूपप्रयत्नद्वारेण । तौ च प्रयत्नं जनयन्तौ स्वकारणीभूतज्ञानविषय एव जनयतः न हि करकमलचालनेच्छायाः कदाचिदपि शरीरचालनानुरूपः प्रयत्नो जन्यमानो दृष्टः । तदत्र रजतविज्ञानेनापि स्वविषय एवेच्छा तया च प्रयत्नो जन्यः स्वविषय एव न वा क्वचिदपि इत्यास्थेयम् । तथा च पुरोवर्त्तिनि रजतज्ञानस्याविषये नेच्छा कारणाभावात् । अत एव न प्रयत्नस्तदभावाच्च न प्रवृत्तिरिति । इदमिति पुरोवर्त्तिवस्तुगोचरमपि ज्ञानमस्तीति चेत् । नैवम् । तस्य हानोपादानयोरनङ्गत्वात् । न हीदमिति कृत्वा प्रवर्त्तन्ते निवर्त्तन्ते वाऽपि तु विशेषतो ज्ञात्वाऽनेनार्थक्रियां निष्पादयिष्याम इति हृदि निधाय । इदमिति ज्ञानेनागृहीतभेदं स्वरूपतो रजतज्ञानमेवेच्छां तादृशीं प्रसूत इति चेत् । न भेदाग्रहेऽपि स्वरूपानतिवृत्तेः । न हि शालिबीजमगृहीतभेदं कोद्रवबीजात्कोद्रवोचितमङ्कुरमुपजनयति । नापि रत्नं प्रदीपकुड्मलादगृहीतभेदं स्पृश्यमानं दहतीति । तदयं प्रमाणार्थः । विवादाध्यासितं ज्ञानं न स्वविषयमन्तरेणेच्छां जनयति ज्ञानत्वादुभयवादिसिद्धसत्यज्ञानवदिति । स्यादेतत् । सर्वेषां प्रत्ययानां यथार्थत्वं प्रमाणसिद्धम् । तच्चान्यथा न निर्वहतीत्येतावता ग्रहणस्मरणभेद-

मालम्बमानाः समर्थितवन्तः । तथा च प्रयोगः । विवादाध्यासितः प्रत्ययो यथार्थः प्रत्ययत्वात्सम्प्रतिपन्नप्रत्ययवदिति । तदवद्यम् । तथाहि किमिदं यथार्थत्वं नाम सिषाधयिषितम् । किं विषयसमुत्थत्वमात्रं विवादास्पदरजतसमुत्थत्वमबाधितविषयत्वं वा । नाद्य पक्षः । सिद्धसाधनत्वात् । पुरोवर्त्तिशुक्तिशकलविषयत्वात् तदुत्पत्तेरुपेतत्वात् । नापि द्वितीयो, यतोऽत्र किं रजतज्ञानस्य साक्षाद्रजतसमुत्थत्वं साध्येत परम्परया वा । आद्यपक्षे प्रत्यक्षबाधः । प्रत्यक्षेणैव रजताभावस्य तत्र प्रतीयमानत्वात् । पुरोवर्तिशुक्तिशकलविषयत्वात् । द्वितीये तु सिद्धसाधनम् । पूर्वरजतानुभवजनितसंस्कारप्रबोधप्रभवस्मरणद्वारेण रजतमिदमिति ज्ञानं प्रति रजतस्यापि कारणत्वेनेष्टत्वात् । तृतीये तु प्रत्यक्षबाधः स्फुट एव । नेदं रजतमिति बाधकस्य स्वसंविदितस्य विद्यमानत्वात् । नेदं ज्ञानस्य बाधकं किन्तु व्यवहारस्येति चेत् । हन्त कोऽयं व्यवहारो नाम । उपादानमिति चेत् । नन्वेतज्ज्ञानरूपम्, कायपरिस्पन्दादिरूपं वेति वाच्यम् । आद्ये कल्पे कथं रजतार्थिनस्तत्रानुपादेये वस्तुन्युपादेयबुद्धिर्न विपरीतख्यातिः । कथं वा तज्ज्ञानबाधः सकलज्ञानाना यथार्थत्वाभ्युपगमेन बाध्यत्वासम्भवात् । द्वितीये तु यस्य न परिस्पन्दो न च तथाविधः प्रयत्नो न च शब्दप्रयोगः प्रेक्षावतां तत्प्रत्ययश्च नेदमिति जातस्तत्र तेन किं बाध्यते । न तावद्व्यवहारः । तस्याप्रसक्तत्वात् । नापि विषयः । तस्याप्येवं स्वरूपत्वात् । ज्ञानेनासंयत इति चेत । नन्वेवमेव ब्रुवद्भ्योऽस्मभ्यं किमिति कुप्यसि । नन्वशेषकारणसन्निधाने सति जायमाने विज्ञाने यदेव प्रतिभाति स एव तस्य विषय इष्यते तदत्र रजते प्रतिभासमाने शुक्तिका विषय इति बुद्धिविरुद्धमिति । नैष दोषो विकल्पासहत्वात् । तथाहि पुरोवर्तिवस्तु प्रतिभाति न वेति भवानेव प्रष्टव्यः । प्रतिभाति चेत्तत्र किमस्माभिस्तदुल्लङ्घनेनान्य एव विषयोऽभिधीयते येन विषयवैषम्यप्रसङ्गः स्यात् । सर्वत्रैव हि साक्षात्कारिविज्ञाने पुरोगतः पदार्थो गोचरः

केनचिदात्मना । येन च स्वरूपेण बुद्धौ विपरिवर्त्तते तेनैव वेद्योऽपि स्वरूपान्तरेण तु वेद्यतायां भवेद्विरोधो न चैवमातिष्ठामहे । न हि पुरोवर्त्तिवस्तु रजततयाऽवभासमानं शुक्तिकात्वेन विषय इति प्रतिजानीमहे । तदेव हि रजतमिति विलोक्य हर्षभयतरलतारचक्षुश्चतुर्दिशमवलोकयन्नुत्सङ्गे गोपयति रजतं तु न भवति । अत एव भ्रान्तिरिति लौकिकपरीक्षकैर्गीयते। एतेन न प्रतिभातीति द्वितीयपक्षः प्रत्युक्तो वेदितव्यः । पुरोवर्तिवस्तु रजततया प्रतिभात्येव केवलं स्मरणमिति कल्पयित्वा पुरोवर्त्तिविषयादन्यत्र नेतव्यम् । प्रत्ययत्वादिति हेतुश्चासौ नैकान्तिकोऽप्यन्यथानुपपत्तेरनिश्चिततत्वात् । न खलु यथार्थत्वमन्तरेण प्रत्ययत्वं नोपपद्यत इत्येवं प्रमाणमस्ति । एवं चायुक्तमुक्तमतिक्रान्तकलधौतस्य शुक्तिकाशकलतो भेदस्याग्रहणात्तत्र प्रवृत्तिनिमित्तत्वमिति । ततश्च शुक्तिकाशकलस्यैवेदं रजतमिति ज्ञानालम्बनत्वमवबोद्धव्यम् । ततः कथं शुक्तिसकलमेवालम्बनमभिधीयते न हि विभिन्नाकारस्य स्तम्भकुम्भगोचरज्ञानद्वयस्यैक एव विषयः प्रतिपादयितुमुचित इति । तदनुपपन्नम् ! यतो नाकारभेदादपि ज्ञानस्य भेदः सङ्गच्छते प्रत्यभिज्ञानेन व्यभिचारात् । तद्ध्यनेकाकाराक्रान्तमप्येकमिति सर्वपरीक्षकसम्प्रतिपन्नम् । एवमिदं रजतमित्यादिविपर्ययज्ञानमप्येकमवसेयम् । तथैव तत्स्वरूपप्रकाशनात् न हि प्रतिभासोपारूढमुभयत्र कञ्चन विशेषमुपलभामहे । एतत्तु प्रतिपद्यामहे यदुतैकं प्रमाणं यथावस्थितवस्तुस्वरूपपरिच्छेदकत्वात् । अन्यत्वप्रमाणं तद्विपर्ययात् । एवं च विवादापन्नं रजनसंवेदनं रजतगोचरमेव तदाकारत्वादित्यत्र पक्षस्य प्रत्यभिज्ञानादिबाधा सिद्धैव । एतेन चानुमाननिरासेन यदवादि शालिकेन ।

'अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते ।
वेद्यः स एव नान्यद्धि विद्याद्वेद्यस्य लक्षणम् ॥ १ ॥

---

१ प्रकरणपञ्जिकायां नयवीथ्याख्ये चतुर्थप्रकरणे श्लो. २३, २४, २५.

इदं रजतमित्यत्र रजतं चावभासते ।
तदेव तेन वेद्यं स्यान्नतु शुक्तिस्वेदनात् ॥ २ ॥
तेनान्यस्यान्यथाभावः प्रतीत्यैव पराहतः ।
परस्मिन् भासमाने हि न परं भासते यतः ॥ ३ ॥' इति, ।

तन्निरस्तमवगन्तव्यम् । यच्चावाचि यदि वान्याकारमपि संवेदनमन्यगोचरमित्यादि । तदपि न पेशलम् । एवं हि क्वचित्प्रदेशे कदलाङ्कुरो दावदाहदूषितवेत्रबीजजन्योऽपि न तज्जन्यो भवेत् । अन्यकार्यकारणस्यान्यकारणकार्यकारित्वानुपपत्तेः यदि हि अन्यकार्यकारणमप्यन्यकारणकार्यं कुर्यात्तदाऽस्य कार्यं प्रतिनियतताभावतः सर्वत्र कार्येऽविश्रम्भमात्रसम्भवात् क्वचित् कस्यचित् प्रवृत्तिर्न स्यादिति प्रतिनियतकार्यकारणव्यवहारप्रलयप्रसङ्गः । यदपीदं। स्मरणमनाकलितरजतस्य प्रतिपत्तुरनुत्पद्यमानत्वादित्याद्यनुमानमवादि । तत्रापि पक्षस्य प्रत्यक्षबाधितत्वम् । प्रकृतरजतसंवेदनस्य विशदावभासितया स्फुटतरं स्मरणाद्भेदेनानुभूयमानत्वात् । अनाकलितरजतस्य प्रतिपत्तुरनुत्पद्यमानत्वादिति हेतोश्च रजतगोचरेण समीहितसाधनतानुमानेन संस्कारेण रजतशब्दोल्लेखिप्रत्यक्षेण वाऽनैकान्तिकत्वम् । तथाहि समीहितसाधनमेतद्रजतं रजतजातीयत्वात् सम्प्रतिपन्नरजतवदिति समीहितसाधनतानुमानमनाकलितरजतस्य नोत्पद्यतेऽथ च स्मरणं तन्न भवति । तथा रजतसंस्कारो रजतशब्दोल्लेखि प्रत्यक्षं चागृहीतरजतस्य नोत्पद्यते न चैतत् स्मृतिरिति ।

हेतुस्ततोऽयं न हि साध्यसिद्धिं शक्तो विधातुं व्यभिचारदुष्टः ॥
विपक्षपक्षेऽपि निवद्धवुद्धिर्भृत्योऽथवा किं प्रभुकार्यशक्तः ॥९४॥

यदपि तदंशवैधुर्यादित्यस्मरणसाधनेऽनैकान्तिकत्वमुक्तम् । तदप्यनभ्युपगतोपालम्भमात्रम् । इदं चानुमानं प्रकृतरजतज्ञानस्य स्मरणरूपताप्रतिषेधाय बोद्धव्यम् । प्रकृतरजतज्ञानं स्मरणस्वभावं न भवति

विशदावभासित्वाद्यदित्थं तदित्थं यथा सम्प्रतिपन्नं ज्ञानं तथा चेदं तस्मात्तथा । एवं च यतः क्वाचकामलेत्यादि न दुरुपपाद इत्यन्तं कदर्थितं मन्तव्यम् । किञ्च भवताऽपि संवित्तिः स्वप्रकाशा स्वीक्रियत एव । तत्रेयं रजतसंवित्तिस्तपस्विनी केन स्वभावेन प्रकाशतामिति विभावनीयम् । यदि स्मृतिरूपेणेत्युच्यते, हन्त तर्हि कः प्रमोषशब्दस्यार्थः । अथानुभवरूपेण प्रथते, तर्हि विपरीतख्यातिरेवेयं समायाता स्मृतेरनुभवत्वेन प्रथनात् । अथ संविन्मात्रतयैव रजतसंवित्तिः प्रतिभाति । तदपि न निरवद्यम् । रजतमिति विषयोल्लिखस्यानुभूयमानत्वात् । स्मरणानुभवलक्षणविशेषशून्यायाश्चात्र प्रघट्टके विषयसंवित्तेरनुपपद्यमानत्वात् । यच्च प्रागप्रतिपन्नो विवेकः प्रकाश्यत इत्यादिकमिदमन्यद्रजतमन्यदिति सोऽयं विवेकः प्रकाशितो भवतीति पर्यन्तं बाधकप्रत्ययव्याख्यानं कृतम् । तद्व्याख्यानमात्रमेव । तथाबाधकप्रत्ययस्याननुभूतेः । न ह्येवं बाधकज्ञानमुत्पद्यते यदविविक्तं तद्विविक्तमिति किन्तु पूर्वानुभवविषयीकृतस्य रजतस्य प्रतिषेधमेव बोधयन्नेदं रजतामिति । किञ्च नेदं रजतमिति बाधकज्ञानं यदेवेदं पुरोवर्त्ति शुक्तिकाशकलं तदेव रजतामिति एतन्न किन्त्विदमिदं रजतं रजतमित्येवं व्याख्यानयता भवतापि तत्र प्रसक्तस्यैव रजतस्य प्रतिषेधोऽभ्युपेयः । यतो यद्यत्र प्रतिषिध्यते तत्तत्र प्रसक्तमेव यथा क्वचित्प्रदेशे घटः । प्रतिषिध्यते च पुरोवर्त्तिशुक्तिकाशकले तादात्म्येन रजतमिति विना चानुभवं कुतस्तत्र तत्प्रसक्तिः । यदि च सर्वथाऽननुभूतमप्रसक्तमपि च कलधौतं प्रतिषिध्यते । तर्हि तद्विव च चामीकरमपि किमिति न प्रतिषिध्यते । यत्पुनरलीकशौर्यातिरेकमात्मन्यभिमन्यमानेन **प्रभाकरेणा**भिहितम् । भीरो किं संवृत्तं स्वप्न इत्यादि । तदपि न क्षोदं क्षमते । स्वप्ने हि यदि स्मृतेः स्मृतित्वेन न ग्रहणमिति विवेकाख्यातिरभिधीयते । तर्हि केन रूपेण ग्रहणमिति परामर्शनीयम् । रूपान्तरेण ग्रहणे विपरीतख्यातिरेवावतिष्ठते । सर्वात्मना

स्वग्रहणे स्वप्नस्मरणयोरविशेषप्रसङ्गः । अनुभवप्रत्ययश्च स्वप्ने संवेद्यते न तु स्मरणमुल्लेखमात्रमिति कदाग्रह एव । तत्र विवेकाख्यातिः प्रख्यातिप्रख्यापनम् । यदपि विप्लुतानुरूपकोपातिरेकादाक्रोशपुरःसरम[1]ः कुमते न वयं सर्वत्र स्मृतेरेव प्रमोषं मन्यामह इत्यादिना स्वप्रक्रियाकथां कथयित्वा कथितं क्वचित्तु तिमिरादिदोषेण द्वैधाकृता नायनीवृत्तिः श्वेतकिरणमैक्येन ग्रहीतुं न शक्नोति यथा द्विचन्द्रप्रत्यय इति । तदपि यदि न गदितं परं स्वपरिषदि गौरवं प्राप्नोति न पुनर्विवेकेषु । द्विधाकृता हि तिमिरेण नायनीवृत्तिर्यदि नाम कुमुदबन्धोरेकत्वं नावबुध्यते । नावबुध्यताम् । विपरीतस्तु द्वित्वानुभवस्तत्र परिस्फुरन् केन तिरोधातुं शक्यः । अथ नयने तिमिरेण सीमन्तिते समाश्रितं परमार्थतो द्वित्वं ननु निशीथिनीनाथे नयनसमाश्रितत्वेन तु द्वित्वस्य यदग्रहणमियमेव विवेकाख्यातिरिति ब्रूषे ।

सन्तः कुतोऽयमिह जल्पति जङ्गपूको
लज्जाकरं कृतिजनस्य मनीषिमानी ।
हुं तत्त्वमत्र विदितं यदमुष्य साधोः
श्रद्धालुतातिमहती स्वमतप्रसिद्धौ ॥ ९५ ॥

तथाहि सर्वत्र परोक्षायामपि नेत्रवृत्तौ तद्गतत्वेन द्वित्वं प्रतिभासत इति यदुच्यते तन्नूनं वक्तुः श्रद्धालुतामेव ध्वनयति । न ह्येककलानिधेर्बोधेऽपि नयनवृत्तेरेकत्वं प्रतीयते । अनवबुध्यमानैव हि करणानां वृत्तिः सर्वत्र रूपादीन् बोधयति । यदपि मधुरद्रव्यतिक्तत्वप्रत्यये विवेकाख्यातिसमर्थनतृष्णया कापि रसनेन्द्रियसम्पृक्तपित्तधातावित्यादिकमवादि । तदपि न सहृदयहृदयसंवेद्यम् । यदि नाम मोहात्पित्ताधिकरणत्वेन तिक्तत्वं नावबुध्यते माबोधि मधुरद्रव्ये तु तिक्तत्वबुद्धिः किं निबन्धना । तुल्याधिकरणतया हि तिक्तं मधुरद्रव्यमिति तिक्तत्वबुद्धिराविर्भवन्ती सर्वैरनुभूयते । पित्तं पुना रसनेन्द्रियगतं नयनाश्रित-

१ 'गदितम्' इति म. पुस्तके नास्ति ।

तिमिरमिवानवगम्यमानमपि विपरीतप्रत्ययमुत्पादयति । कायाश्रितमिव शिरःपीडाज्वरसन्तापप्रमुखमिति । यत्त्वेवं पीतः शङ्ख इत्यादि प्रत्यपादि । तदपि पूर्वोक्तयुक्त्यैव प्रत्यादिष्टम् । यदि नाम प्रसरन्नायनरश्मिसमाश्रितपित्तधातोः पीततां प्रतिपद्यमानः प्रतिपत्ता तिमिरादिदोषकलुषितलोचनतया शङ्खाश्रितं श्वेतिमान न गृह्णाति मा ग्रहीत् । पीतताप्रतीतिः पुनरस्य कम्बौ किंनिबन्धना । समानाधिकरणतया हि पीतः शङ्ख इति पीतताप्रतीतिः समस्तप्रतिपत्तॄणां समुल्लसति । यत्पुनः प्रमातुर्नेत्रकिरणाधिकरणपित्तधातुसम्पृक्तायाः पीततायाः प्रतिभासनमभिधीयते तदतीवानुपपन्नम् । पित्तधातुपीतिमा हि लोचनं निरुन्धानः कज्जलकालिमेव प्रमातुः कथं नाम स्वगोचरं लोचनोद्भवं प्रतिभासनमाविर्भावयितुं समर्थः । अथातिस्वच्छतया कज्जलकालिम्नः सकाशाद्विलक्षणोऽयं पित्तधातुपीतिमेति नयनमनिरुन्धान एव स्वविषयं संवेदनमुत्पादयति प्रतिपत्तुरिति प्रतिपादयेथाः । तदपि न पेशलम् । अतिप्रसक्तेः । स्वच्छतानिमित्तयां हि नेत्रानिरोधितायां विज्ञानोत्पादकत्वेन प्रतिपद्यमानायां नेत्रोपरि परिस्फुरन्नीरबिन्दुगोचरं संवेदनमुत्पादयन् केन प्रतिहन्यते । प्रसरन्नयनदीधितिसम्बन्धश्च प्रसारिणोः पित्तपीतिमपयःपृषतोरविशिष्टस्तस्मादतिदूरवदतिसामीप्यस्याप्यदर्शनहेतुत्वादग्रहणमुभयोरपि प्रामाणिकानुकूलमालोकमायः । एवं च ।

> 'पीतशङ्खावबोधे च पित्तस्येन्द्रियवर्त्तिनः ॥
> पीतिमा गृह्यते द्रव्यरहितोऽत्र तिग्मता ॥ १ ॥
> शङ्खस्येन्द्रियदोषेण शुक्लिमा नैव गृह्यते ॥
> केवलं द्रव्यमात्रं तु प्रथते रूपवर्जितम् ॥ २ ॥'

इत्यादि शालिकोक्तमपास्तम् । अपि चेदं रजतमिति यदिदं संवेदनद्वयमभ्युपगम्यते । तस्य किं यौगपद्येन पर्यायेण वा प्रादुर्भावः स्यात् । न तावद्यौगपद्येन । स्वकृतान्तप्रकोपप्रसङ्गात् । पर्यायेणापि

१ प्रकरणपञ्जिकायां नयवीथ्याख्ये चतुर्थप्रकरणे श्लो. ४८, ४९.

प्रादुर्भूताविदमिति प्रत्यक्षात्पूर्वमुत्तरत्र वा रजतस्मरणमुद्भवेत् । तत्राद्यः पक्षः प्रेक्षाचक्षुषां न लक्षयितुमुचितः । इदमिति प्रत्यक्षात्पूर्वं स्मृतिबीजस्य संस्कारस्य प्रबोधकत्वानिबन्धनात् । प्रबुद्धे च संस्कारे स्मृतिरुत्पद्यते नाप्रबुद्धेऽतिप्रसक्तेः । अथ निर्विकल्पकज्ञानात्तत्संस्कारप्रबोध इष्यते । तदयुक्तम् । निर्विकल्पकज्ञानस्य सविकल्पकज्ञानसिद्धिप्रघट्टके विघट्टितत्वात् । अथेदमिति प्रत्यक्षादुत्तरत्र रजतस्मृतिः प्रादुर्भवतीत्यभिमन्यते । तन्न शोभनम् । यस्मादिदमिति प्रत्यक्षात्पश्चात्प्रादुर्भवन्ती रजतस्मृतिर्विपरीतव्यापारेऽपि चक्षुषि प्रादुर्भवेत् । एवं च सति निमीलितलोचनस्यापि रजतस्मृत्यनुभवः स्यात् । पर्यायेण च भवदभिमतज्ञानद्वयस्य प्रादुर्भावः प्रतीतिविरुद्धः । न खलु पुरोवर्तिवस्तु गृहीत्वा पश्चाद्रजतं स्मरामीति रजतं वा स्मृत्वा पुरोवर्त्तिवस्तु गृह्णामीति शुक्तिग्रहणरजतस्मरणयोः स्वस्वदशायामपि पर्यायेण प्रतीतिः समस्ति । रजतात्मकं पुरोवर्त्तिवस्तु सकृदेव प्रतिभातीति सकललौकिकानां प्रतीतेः । अपि च

पृच्छामि किञ्चिद्यदि कोपपाटलं करोषि न श्रोत्रिय भोः स्वमाननम् ॥
तत्त्वं प्रशान्तैः सह येन कोविदैर्विचार्यमाणं घटनामुपेयते ॥ ९६ ॥

क एष स्मृतेः प्रमोषो नाम, किं प्रध्वंसः, उत प्रत्यक्षेण सहैकत्वाध्यवसायः, आहोस्वित्प्रत्यक्षरूपतापत्तिः, उतचित्तदित्यंशस्याननुभवः, तिरोभावमात्रं वा भवेत् । तत्र यदि प्रध्वंसः । तदा साध्यसाधनसम्बन्धस्मृतेः साध्यावसायसमये प्रध्वंसात्तत्रापि स्मृतिप्रमोषः स्यात् । न च भवद्भिरपि तत्रैवं व्यवहारः प्रवर्त्यते । अथ प्रत्यक्षेण सहैकत्वाध्यवसायोऽस्याः प्रमोषः । ननु कुतः स्मृतेः प्रत्यक्षेण सहैकत्वाध्यवसायो विषयैकत्वाध्यवसायात् स्वरूपैकत्वाध्यवसायाद्वा । प्रथमपक्षे क एष विषयैकत्वाध्यवसायो नाम,अन्यतरविषय आरोपश्चेत्, किं प्रत्यक्षविषयस्य स्मृतिविषये तद्विषयस्य वा प्रत्यक्षविषय आरोपः स्यात् । तत्र प्रथमविकल्पे स्मर्यमाणरजतदेशे विपणिवीथ्यादौ शुक्तिशकलस्य स्पष्टत्वेन प्रतिभासो भवेत् । न

पुनरिदमित्युल्लेखेन पुरोवर्त्तितया । विपणिवीथीव्यवस्थितस्मर्यमाणरजते शुक्तिसकलस्यारोप्यमाणत्वात् । यत्र यदारोप्यते तद्देशे तस्य प्रतिभासो भवति । यथा मरीचिकायामारोप्यमाणस्य नीरस्य मरीचिकादेशे । स्मृतिविषये रजत आरोप्यते च प्रत्यक्षविषयः शुक्तिशकलमिति । द्वितीयविकल्पे पुनरिदन्तया स्पष्टः प्रतिभासो न प्राप्नोति । तत्रारोप्यमाणस्य स्मृतिविषयस्यास्पष्टत्वात् । तन्न विषयैकत्वाध्यवसायात्स्मृतेः प्रत्यक्षेण सहैकत्वाध्यवसायो युक्तः । नापि स्वरूपैकत्वाध्यवसायात्, स्वरूपैकत्वं हि स्मृतिप्रत्यक्षाभ्यामेवाध्यवसीयेत अन्येन वा । न तावत्स्मृतिप्रत्यक्षाभ्याम्, तयोः स्वसंवेदितत्वेन परस्परविविक्तं स्वस्वरूपं वेदयमानयोरेकत्वाध्यवसायस्य विरुद्धत्वात् । नाप्यन्येन ज्ञानेन, यतस्तेन तद्द्वयस्याप्रतीतस्यैकत्वमध्यवसीयते प्रतीतस्य वा । न तावत्प्रतीतस्य, तद्द्वयप्रतीतौ तदेकत्वाध्यवसायस्य विरोधात् । नाप्यप्रतीतस्य, अतिप्रसक्तेः । अथ यदैव तद्द्वयं ज्ञानान्तरेण प्रतीयते न तदैव तदेकत्वाध्यवसायो येन विरोधः स्यात् । किन्तु पूर्वं तद्द्वयं प्रतीत्य पश्चात्तदेकत्वेनाध्यवसीयत इति । तदयुक्तम् । सर्वदजस्य क्षणमात्रस्थायित्वादियन्तं समयमवस्थानायोगात् । तन्न प्रत्यक्षेण सहैकत्वाध्यवसायः स्मृतेः प्रमोषः । नापि प्रत्यक्षरूपतापत्तिः, तद्रूपतापत्तौ हि तस्याः स्मृतिरूपतापरिक्षयात् प्रत्यक्षरूपतैव स्यान्न स्मृतिरूपता । तत्कथमस्याः प्रमोषः । अन्यथा मृत्पिण्डस्यापि घटरूपतापत्तौ मृत्पिण्डरूपतापरिक्षयेऽपि मृत्पिण्डत्वप्रसक्तेर्मृत्पिण्डप्रमोषोऽपि स्यात् । अथात्र प्रत्यक्षबाधा, साऽन्यत्रापि समाना । अथ तदित्यंशस्याननुभवः स्मृतेः प्रमोषः । तद्रजतमित्याकारा हि प्रतीतिः स्मृतिः, तच्छब्दस्यानुभूतपरोक्षार्थालम्बनत्वात् । स यत्र नानुभूयते तत्र स्मृतिः प्रमुष्टेत्यभिधीयत इति । तदलौकिकम् । एवं हि रजताकारस्याप्यनुभवाभावप्रसक्तेः । तद्रजतमिति हि निरंशमेकमेवेदं स्मरणं भवतेष्यते । तत्र तदित्यस्य प्रमोषे रजतमित्यस्यापि प्रमोषः स्यात् । निरंशस्यैकदेशेन प्रमोषानुपपत्तेः ।

अपि च प्रमोषशब्दस्य कोऽर्थोऽभिप्रेतः प्रज्ञाशालिनः । किमेकदेशापहारः सर्वापहारो वा । न तावदेकदेशापहारः, तत्र प्रशब्दप्रयोगस्य निरुपयोगत्वात् । एकदेशेन तस्करैर्द्रविणापहरणे मोषशब्दप्रयोगो लोके निरूढः । ततः सर्वापहार एव प्रमोषशब्दस्यार्थ उपपन्नः । प्रकृष्टो मोषः प्रमोष इति मोषस्य चैष प्रकर्षो यत्सर्वात्मना वस्तुनोऽपहार इति । एवं च स्ववचनव्याघातः स्मृतिरस्ति किन्तु प्रमुष्टेति । यदि हि साऽस्ति कथं प्रमुष्टा । प्रमुष्टा चेत् कथमस्तीति । अथ तिरोभावः स्मृतेः प्रमोषः । सोऽपि ज्ञानयौगपद्ये सिद्धे सति सिद्ध्येत् । न च भवतः ततस्तात्सिद्धम् । अपसिद्धान्तप्रसक्तेः । किञ्च स्मृतेस्तिरोभावः किं कार्याकर्तृत्वं स्यादावृतत्वमभिभूतस्वरूपतयाऽवस्थानं वा । आद्यविकल्पे किं हि स्मृतेः कार्यं यदकर्तृत्वात्तिरोभावस्तस्याः स्यात् । परिच्छित्तिश्चेत् । ननु सा तत्रास्त्येव । रजतपरिच्छित्तेरनुभूयमानत्वात् । द्वितीयविकल्पोऽप्यनुपपन्नः । ज्ञानस्याव्रियमाणत्वानुपपत्तेः । चिरस्थायिनो हि पदार्थस्याव्रियमाणत्वं दृष्टम् । न च ज्ञानं चिरस्थायितया त्वया स्वीक्रियते '**क्षणिका हि सा न चिरकालमवतिष्ठते**' इति स्वसमयप्रकोपात् । तृतीयविकल्पोऽप्यघटमानः । बलवता हि दुर्बलरूपाभिभवो दृष्टः प्रभाकरेणेव तारानिकरस्य । दुर्बलत्वं च स्मृतेः समतिक्रान्तविषयत्वाद्बाध्यमानत्वाद्वा भवेत् । प्रथमपक्षे क्षय एव स्मृतिवार्त्ताया भवेत् । सर्वस्याः समतिक्रान्तविषयतया दुर्बलत्वतो वर्त्तमानवस्तुप्रतिभासज्ञानेन स्वरूपाभिभूतिप्रसक्तेः । बाध्यमानत्वं पुनर्विपरीतख्यातिमन्तरेण नोपपद्यत इत्यवोचाम । ततः स्मृतिप्रमोषाग्रहं परित्यज विपरीतख्यातिरेवाभ्युपगन्तुमुचिता । यदि चेयं नाभ्युपगम्यते । तदा यदेतच्छास्त्रश्रवणानन्तरभावि सर्वं क्षणिकमित्यादिज्ञानं तस्य रूपं चिन्तनीयम् । किमिदं विपर्ययरूपमाहोस्वित्स्मृतिप्रमोषरूपमिति । तत्र यदि विपर्ययरूपं तदा किमर्द्धजरतीयन्यायेन[1] ।

---

१ अर्धा जरती अर्धा युवतिस्तद्विवेति न्याय्यस्वरूपम् ।

रजतादिज्ञानमपि विपर्ययरूपमेषितव्यम् । अथ स्मृतिप्रमोषरूपम्, तदप्यनुचितम् । शास्त्रश्रवणानन्तरभावित्वेन स्मृतिरूपतानुपपत्तेः । न खलु शास्त्रश्रवणजनितं विज्ञानं स्मरणं युक्तम् । अक्षादिजनितज्ञानस्यापि तथात्वप्रसक्तेः । किञ्च पूर्वमनुभूतमेव पश्चात्स्मर्यते । न चासच्छास्त्रश्रवणादर्वाक्कुदर्शनाभ्युपगतक्षणिकत्वाद्यनुभवः प्रादुर्भूत इति नेदं स्मरणम् । तदभावाच्च कस्य प्रमोष इति । यदपि जल्पितं प्रस्तुतरजतसंवेदनदृष्टान्तेन समस्तसंवेदनानां निरालम्बनत्वप्रसक्तेरित्यादि । तदपि निरुपयोगम् । प्रस्तुतरजतसंवेदनेऽपि शुक्तिशकलालम्बनत्वस्य सविस्तरमनन्तरमेव समर्थितत्वान्निरालम्बनत्वाप्रसिद्धिरिति कथं तद्दृष्टान्तावष्टम्भेन सकलसंवेदनानां निरालम्बनत्वमभिधीयमानं सुधियां मनः प्रीणाति । अथ समस्तप्रत्ययाना सालम्बनत्वे स्ववाचैव यथार्थत्वमस्माभिरिव भवद्भिरपि प्रतिपन्नं स्यात्तत्कथं विपरीतख्यातिः सिद्ध्यतीति मन्यते । तदपि न तथ्यम् । यथार्थत्वेन सह सालम्बनत्वस्यान्यथानुपपत्तेरसिद्धेः । न हीदं रजतमित्यादिज्ञानानि शुक्तिकाद्यालम्बनान्यपि यथार्थानि सम्भवितुमर्हन्ति । नेदं रजतमित्यादिबाधकप्रत्ययैस्तेषां बाध्यमानत्वस्य प्रतिपादितत्वात् । यत्र तु पाश्चाद्भाविनो बाधप्रत्यया न प्रादुर्भवन्ति तानि ज्ञानानि यथार्थत्वेन व्यवस्थितानीत्यलमतिविस्तरेण ।

एवं तावत्तव किल पुरः पक्षपातानपेक्षं
भेदाख्यातिं खलु वयमिमां मानतः क्षिप्तवन्तः ।
भ्रातः प्राभाकर यदि भावनभ्यधादत्र काञ्चित्
युक्तिं शक्तां स्वमतविषये तत्त्वमेव प्रमाणम् ॥ ९७ ॥

तस्मात्त्वं चेत्तार्किकाणां कदाचित्कर्तुं गोष्ठीमिच्छसि स्वच्छबुद्धे ॥
भेदाख्यातौ दोहदं दोषवत्या[1] मा कुर्वीथाः सर्वथाऽस्यां तदानीम् ॥ ९८ ॥

---

१ मन्दाक्रान्ता ।

भ्रान्तिमख्यातिमाचख्यु सङ्ख्याविन्मानिनः परे ॥
प्रकटीकुर्वते तत्र यां युक्ति सा प्रदर्श्यते ॥ ९९ ॥

तथाहीदं रजतमिति प्रस्तुतज्ञाने रजतसत्ता विषयभूता तावन्नास्ति।

भ्रमस्थलेऽख्यातिवादिना मतस्य सविस्तर खण्डनम्।

अभ्रान्तत्वप्रसक्तेः। रजताभावोऽपि न तज्ज्ञानस्यालम्बनम्। रजतविधिपरत्वेन तस्य प्रवर्त्तनात्। अत एव शुक्तिखण्डमपि न तदालम्बनं युक्तम्। नापि रजताकारेण शुक्तिखण्डमालम्बनत्वेन प्रतिपादयितुमुचितम्। अन्यस्यान्याकारेण ग्रहणाप्रतीतेः। न खलु स्तम्भाकारेण कुम्भस्य ग्रहणं प्रतीतम्। तस्मान्न किञ्चिदत्र ज्ञाने ख्यातीति ॥

तस्मादख्यातिरियं ख्यातिप्रासादशिखरमधिरूढा ॥
सम्प्राप्य युक्तिमेतां सोपानपरम्पराप्रायाम् ॥ १०० ॥

अत्रोच्यते—

किमख्यातिप्रतिष्ठायामेवं पर्याकुलाः स्थ भोः ॥
तस्याः प्रतिज्ञामात्रेण सिद्धैवाख्यातिरत्र च ॥ १०१ ॥

एवं हि स्वीक्रियमाणे विशेषतो व्यपदेशाभावप्रसक्तिः। यत्र हि स्वरूपं पररूपं वा न किञ्चिदपि प्रतिभासते तत्केन विशेषेण रजतज्ञानमन्यद्वा व्यपदिश्येत। तथा च।

वितथविदि यदि त्वं भाषसेऽख्यातिमित्थं
रजतमिति विशेषेणाभिधानं कथं स्यात्।
तदिह किमभिदध्याः कोविदाना सभाया-
मयमनुभववन्ध्यं लज्जते यन्न जल्पन् ॥ १०२ ॥

भ्रान्तिसुप्तावस्थयोरविशेषप्रसङ्गश्च। नहि भ्रान्ते. प्रतिभासमानार्थव्यतिरेकेण सुप्तावस्थातोऽन्योऽस्ति विशेषः। प्रतिभासमानार्थाभ्युपगमे च कथं निरालम्बनत्वेनाऽख्यातिरूपताऽस्याः स्यात्।

अख्यातिरियमेवं च पातिता ख्यातिसौधतः ॥
तत्साधनप्रवीणायाः कामं युक्तेः कदर्थनात् ॥ १०३ ॥

असत्ख्यातिं समाख्यान्ति सुसूक्ष्मप्रेक्षिणः परे ॥
तत्रोपपत्तिमेतां तु खेदयन्ति समुद्धताः ॥ १०४ ॥

असत्ख्यातिमतखण्डनम्।

तथाहीदं रजतमिति प्रतिभासमानं वस्तु ज्ञानमर्थो वा भवेत् । न तावज्ज्ञानम् । अन्तर्मुखाकारतयाऽहं रजतमित्यहङ्कारसामानाधिकरण्येनाप्रतिभासमानत्वात् । इदं रजतमिति बहिर्मुखाकारतया प्रथमानत्वाच्च । नाप्यर्थः । तत्साध्यार्थक्रियाकारित्वाभावात् । नेदं रजतमिति बाधकप्रत्ययेन वितथज्ञानविषयीकृतस्य वस्तुनोऽर्थताया बाध्यमानत्वाच्च । ततोऽसदेव तत्र प्रतिभातमित्यसत्ख्यातिः ।

एवमसत्ख्यातिरियं स्वयंवरा सुंदरीव तरुणेन ॥
अनुगृह्यतेऽत्र गाढं दृढोपपत्तिप्रपञ्चेन ॥ १०५ ॥

इमामसत्ख्यातिमुपैति लम्पटः प्रवक्ति युक्तीर्न तु तत्र निश्चलाः ॥
चिराद्विविप्यन्ति तदन्यधीमता कपोलपाल्यः स्मितलोचनोत्सुकाः ॥ १०६ ॥

तथा ह्यसत्ख्यातिरिति कोऽर्थः । किमेकान्तासतोऽर्थस्य प्रथनमथ देशान्तरे विद्यमानस्य । उत्तरस्मिन्पक्षे विपरीतख्यातिरेवेयम् । देशान्तरे विद्यमानस्य रजतस्य शुक्तिकादेशे प्रतिभासस्वीकारात् । एकान्तासतस्त्वर्थस्य प्रथनं नभोरुहवन्न समर्थयितुं शक्यम् । अपि चासत्सत्त्वेन प्रतिभातीत्यसत्ख्यातिरपि न विपरीतख्यातिमतिक्रामति । यदपीदं रजतमिति हि प्रतिभासमानं वस्तु ज्ञानमर्थो वेति विकल्पद्वयमकारि । तत्राद्योऽनभ्युपगमान्निरस्तः । द्वितीयस्त्विष्यत एव । तत्र च यदुक्तं तत्साध्यार्थक्रियाकारित्वाभावादिति । तन्न पेशलम् । अर्थनिबन्धनाभिलाषप्रवृत्त्याद्यर्थक्रियाकारित्वस्य तत्रापि सम्भवात् । कथं तर्ह्यत्रार्थक्रियाकारित्वेऽपि रजतस्य भ्रान्तत्वमभिधीयत इति च

नाभिधेयम् । चरणाभरणभाजनादितदर्थक्रियाकारित्वाभावात्तस्य भ्रान्तत्वोपपत्तेः । द्विविधा ह्यर्थक्रियाऽर्थमात्रनिवन्धनाऽर्थविशेषनिवन्धना च । तत्राभिलाषादिरूपाऽर्थमात्रनिवन्धना । चरणाभरणभाजनप्रभृतिस्त्वर्थविशेषनिवन्धना । अर्थविशेषनिवन्धनार्थक्रियाकारिण एवार्थस्य व्यवसायकं संवेदनमभ्रान्तमितरत्तु भ्रान्तम् । यच्चोक्तं नेदं रजतमिति वाधकप्रत्ययेन विषयीकृतस्य वस्तुनोऽर्थताया वाध्यमानत्वादिति । तदपि न साधीयः । न हि वाधकप्रत्ययो मिथ्याज्ञानविषयीकृतस्य वस्तुनोऽर्थतां वाधते । किं तर्हि मिथ्यारजतधियः स्वविषयपरित्यागेन विषयान्तरोपसर्प्पणान्मिथ्यात्वं ख्यापयति ।

असत्ख्यातिरियं तस्मान्न प्रमाणेन केनचित् ।
स्वीक्रियते विदग्धेन दुर्भगेव कदाचन ॥ १०७ ॥

वावदूकाः प्रसिद्धार्थख्यातिमाहुः परे पुनः
तेषामपि स्फुटाटोपः किञ्चिदेष प्रकटयते ॥ १०८ ॥

प्रसिद्धार्थख्यातिमत-खण्डनम् ।

तथाहि प्रतीतिसिद्धमेव वस्तु विपर्ययज्ञाने चकास्ति । न चास्य विचारताऽसहत्वादविद्यमानत्वं वचनीयम् । प्रतीतिं परित्यज्यान्यस्य विचारस्यैवानुपपत्तेः । पाणिपल्लवन्यस्तनिस्तुलस्थूलमुक्ताफलादेरपि यतः प्रतीतिसामर्थ्येनैव विद्यमानत्वं व्यवह्रियते । सा च प्रतीतिरितरत्रापि न नृपतिशासननिरुद्धा । न चेदं वाच्यं दूरतः शुक्तिकाशकलादौ कलधौतादेर्वस्तुनः प्रतिभासस्य तद्देशोपसर्प्पणे सत्युत्तरकालं प्रतिभासस्याभावादविद्यमानत्वमिति । यतो यदि नामोत्तरसमयं तद्वस्तु न प्रतिभासते तथापि यत्समयं प्रतिभासते तदा तावद्विद्यत एव । इतरथा तोयबुद्बुदादेरपि स्वप्रतिभाससमये सत्त्वसिद्धिर्न भवेत् ।

तस्मादित्थं प्रसिद्धार्थख्यातिरेषा न मुञ्चति ॥
कदाचनापि सन्न्यायं कौमुदाव कलानिधिम् ॥ १०९ ॥

एतदत्र पसिद्धार्थख्यातौ यद्युक्तिपञ्जरम् ॥
जैनयुक्तिमदाघातस्तत्करोत्येष जर्जरम् ॥ ११० ॥

एवं हि स्वीक्रियमाणे भ्रान्ताभ्रान्तसंवेदनोदन्तसमुच्छेदप्रसक्तिः । न खलु यथावस्थितवस्तुव्यवसायित्वाविशेषेऽपि किञ्चित्संवेदन भ्रान्तमभ्रान्तं च किञ्चिदिति निर्निमित्ता व्यवस्थितिः कर्त्तुं युक्ता यौक्तिकस्य । स्वैरचारित्वप्रसक्तेः ।

तथा च—

इयं भ्रान्ता संविद्भ्रमविरहिताऽसौ पुनरिति
प्रसिद्धाऽऽस्ते तावन्निखिलजनताया व्यवहृतिः ।
अयं त्वेतां सम्यक्कथमिव तपस्वी घटयिता
यतः सत्यार्थत्वं वदति सकलज्ञानविषयम् ॥ १११ ॥

यत्पुनरुक्तं यदि नामोत्तरसमयं तद्वस्तु न प्रतिभासते । तथापि यत्समयं प्रतिभासते तदा तावद्विद्यत एवेति । तन्न निरवद्यम् । यतः प्रतिभाससमये कलधौतादेर्वस्तुनो विद्यमानत्वं किं देशान्तरे विपणिवीथ्यादावभिमतं शुक्तिकादिदेशे वा । प्रथमपक्षे विपणिवीथीव्यवस्थितस्यैव तस्य प्रतिभासः स्यात्तथैव विद्यमानत्वस्वीकरणात् । यत्खलु यत्र देशे सत्तामनुभवति तस्य तत्रैव प्रतिभासः सम्भवति । न हि स्तम्भदेशे कुम्भः कदाचिदुपलभ्यते । अथान्यदेशालम्बिनोऽपि कलधौतादेः सामग्रीविशेषमाहात्म्यतः शुक्तिकादेशे प्रतिभासोऽभ्युपगम्यते । हन्त तर्हि समायाता सेयं तपस्विनी विपरीतख्यातिरेव । अन्यदेशस्य वस्तुनोऽन्यदेशतया प्रतिभासाऽभ्युपगमात् । ततः प्रसिद्धार्थख्यातिरिति नाममात्रं विशिष्यते । न च तत्र विवाद कोविदानाम् । अथ शुक्तिकादेशे तस्य विद्यमानत्वमङ्गीक्रियते । तदप्यनुपपन्नम् । तद्देशोपसर्प्पणे सत्युत्तरकालं तत्प्रतिभासस्याभावात् । न च तोयबुद्बुदादेरिव क्षणभङ्गुरत्वं कियत्कालस्थायिनः कलधौतादेः

प्रतीयते । येन स्वप्रतिभाससमयानन्तरमेव सर्वथा परिक्षयादुत्तरकालं प्रतिभासस्तस्य न सम्भवेत् । नेदं रजतमित्यादेर्बाधकस्य च शुक्तिकादिदेशे कलधौतादिवस्तुनिषेधकस्य प्रवर्त्तमानत्वान्न तत्र तस्य विद्यमानत्वं कथञ्चिदास्थां बध्नातीति ।

तदियं प्रसिद्धवस्तुख्यातिरिह प्रमितिमार्गमकलङ्कम् ॥
अनुसरति नैव कथमपि कुलटेव सुनिर्मलं शीलम् ॥११२॥

आत्मख्यातिमतखण्डनम् ।

आत्मख्यातिं ख्यातिमार्गानभिज्ञाः
श्रद्धावन्तः ख्यापयन्तीह केचित् ॥
तस्या तावत्तन्मतं युक्तिमार्ग
सम्प्रत्येतं दर्शयामस्तथा हि ॥ ११३ ॥

शुक्तिशकले कलधौतमिदमिति चकास्ति । तस्य च बाह्यतया प्रतिभानं नोपपत्तिमन्नेदं रजतमिति बाधकेन तद्बाह्यताया बाध्यमानत्वात् । न हि यत्प्रकारतया योऽर्थः प्रतिभासते तत्प्रकारतैव स्वीकर्तुं समुचिता सताम् । भ्रान्तत्वाभावप्रसक्तेः । ततो ज्ञानात्मन एवायमाकारोऽनादिवासनामाहात्म्याद्बहिरिव परिस्फुरतीति ।

आत्मख्यातिरियं तस्मादानीता सिद्धिपद्धतिम् ॥
बाह्यस्य भासनाभावाद्भावस्य परमार्थतः ॥ ११४ ॥
उक्तं यद्वक्तव्यं त्वया सखे निखिलमात्मनः ख्यातौ ॥
अत्राकर्णय सम्प्रति जैनानामुत्तरसमृद्धिम् ॥ ११५ ॥

तथाहि यत्तावदवादि तस्य च बाह्यतया प्रतिभानं नोपपत्तिमन्नेदं रजतमिति बाधकेन तद्बाह्यताया बाध्यमानत्वादित्यादि । तदसुन्दरम् । नेदं रजतमिति बाधकेन न रजतस्य बाह्यता बाध्यते किन्तु विपणिवीथ्यादौ वर्त्तमानस्य बाह्यस्यैव सतः शुक्तिकादेशस्थता । यदपि न्यगादि ज्ञानात्मन एवायमाकारोऽनादिवासनामाहात्म्याद्बहिरिव परिस्फुरतीति । तदप्यवाच्यम् । वासनाया एव त्वन्मते-

१ 'तस्य' इत्यधिकं म. पुस्तके ।

ऽनुपपत्तेः । तथाहि इयं वासना अवस्तुरूपा वा वस्तुरूपा वा । तत्र यद्यवस्तुस्वरूपा, तदा नभस्तामरसतुल्यायास्तस्याः कथं काञ्चन व्यवस्थां प्रति हेतुभावः सम्भवति । अथ वस्तुस्वरूपा, सापि ज्ञानाकारात्पार्थक्येन स्वरूपमाबिभर्त्ति अन्यथा वा । प्रथमपक्षे ज्ञानाद्वैतक्षतिः । ज्ञानाकारात्पृथग्भूताया वासनायाः समायातत्वात् । तथा च यथा वासना ज्ञानाकारात्पृथक्स्वरूपाऽपि घटते । तथा कलधौतादिर्बाह्योऽर्थः परमार्थतया यदि भविष्यति तदापि न किञ्चिदनुचितमालोचयामः । अथ न पार्थक्येन स्वरूपमाबिभर्त्ति । तर्हि ज्ञानाकार एवायमिति ज्ञानाकारमाहात्म्याद्बहिरिव प्रतिभासत इति तदेव साध्यं तदेव च साधनमभिहितं भवेत् । तत्र वासना नाम कदाचन स्वरूपमामुखयन्ती प्रतीयत इति तत्सामर्थ्याज्ज्ञानाकारस्य बाह्यविज्ञानप्रतिभासनमनुपपन्नमिति ।

किञ्च स्वरूपमात्रसंविदि तन्निष्ठायामाकारधारितायां च प्रसिद्धायां ज्ञानस्यात्मख्यातिः सिद्धिमासादयेत् । न चैते प्रसिद्धे । पुरस्तादनयोः सविस्तरं पराकरिष्यमाणत्वात् । स्वाकारमात्रग्राहित्वे च निखिलज्ञानानामिदं भ्रान्तमिदं चाभ्रान्तमिति विवेको बाध्यबाधकभावश्च न स्यात् । तत्र कस्यचिदपि व्यभिचाराभावात् । ज्ञानात्मस्वरूपतया च रजताद्याकारस्य संवेदनेऽहं रजतमित्यन्तर्मुखाकारतयैव रजतसंवित्तिः स्यान्न पुनरिदं रजतमिति बहिर्मुखाकारतया । अनादिवासनावशाद्बहिर्निष्ठत्वेन शुक्तिस्थो रजताद्याकारः प्रतीयत इत्युच्यमाने तु विपरीतख्यातिरेवेयं स्यात् । ज्ञानादभिन्नस्य रजताद्याकारस्यान्यथात्वेनाध्यवसितत्वात् । अपि च स्वाकारमेव रजतादि बहीरूपतया ख्यापयन्ति भ्रान्तय इत्यत्र न प्रमाणमस्ति । अथानुभवः प्रमाणमिति चेत् । नैवं वाच्यम् । विकल्प्यमानस्य तस्यानुपपद्यमानत्वात् । तथा ह्यनुभवः प्रमाणत्वेन प्रतिपाद्यमानः कलधौतप्रत्ययो वा स्याद्बाधकप्रत्ययो वा । तत्र न तावत् कलधौतप्रत्ययः । स हीदन्तया कलधौतस्य न ज्ञानाकारतयापि । अथ

बाधकप्रत्ययः कलधौतस्य ज्ञानाकारतामवभासयतीत्यभिमन्यसे । मैवम् । बाधकप्रत्ययोऽपि हि शुक्तिशकले कलधौताकारतामेव प्रतिषेधति न पुनः कलधौतस्य ज्ञानाकारतामपि ज्ञापयति ।

अथायमाशयस्ते पुरोवर्त्तिशुक्त्याकारत्वप्रतिषेधे कलधौतस्य सामर्थ्याद्बोधाकारतासिद्धिरिति । तदपि न चतुरस्रम् । शुक्त्याकारत्वप्रतिषेधे कलधौतस्य बोधात्पृथग्भूतस्य सामर्थ्याद्देशान्तरादौ सत्त्वसिद्धिरित्येवं कस्मान्न कल्प्यते । किमर्थं दृष्टातिक्रमेणादृष्टस्य ज्ञानाकारत्वस्य परिकल्पनमिति । अथानुमानेन कलधौतस्य बोधाकारतासिद्धिः । तथाहि यत्प्रकाशते तद्विज्ञप्तिमात्रं यथा सुखादिकम् । प्रकाशते च कलधौतमिति । तदसत् । अस्य विज्ञानवादे विघटयिष्यमाणत्वात् । अपि च बाह्यतया स्वाकारगोचरत्वाङ्गीकरणे विभ्रमाणमिदं शुक्तिशकलं प्रत्याकलितं मयेति प्रत्यभिज्ञानानुत्पत्तिप्रसङ्गः । किन्त्वेवं प्रत्यभिज्ञानं भवेदान्तरं कलधौतं बहीरूपतया मया प्रतिपन्नमिति । किं च नेदं कलधौतमपि तु शुक्तिकाशकलमित्युल्लेखेन निषेधानुपपत्तिः । आत्मख्यातिपक्षे शुक्तिशकले कलधौतस्याप्रसक्तत्वात् । किन्त्वेवं स्यान्नेदं कलधौतं बहिरपि त्वान्तरमिति । यदि च ज्ञानस्य बाह्यार्थविषयत्वं नेष्यते । तर्हि यथा रजताकारोल्लेखेन तत्प्रवर्त्तते तथा नीलाद्याकारोल्लेखेनापि किमिति न प्रवर्त्तते । नियामकस्याभावात् । अथानादिवासनैव तन्नियामका । कथमेवं देशादिनियमेन तस्योत्पत्तिः स्यात् । अथास्या इदमेव माहात्म्यं यदसदपि देशादिनियमेन ज्ञाने प्रदर्शयतीत्यभिधीयते । तन्न युक्तम् । असत्ख्यातित्वप्रसक्तेः । कथं वात्मख्यातिवादिनश्छेदाभिघातादिप्रतीतिः स्यात् । स्वरूपमात्रसंवित्तौ तदसम्भवात् । न खलु विज्ञानरूपस्य सुखादेः संवित्तौ तत्प्रतीतिर्दृष्टेति ।

नात्मख्यातिः प्रकृतरजतोद्भासिनि भ्रान्तिबोधे
युक्ता वक्तुं कथमपि परैस्तद्विनापि प्रमाणम् ।

---

१ 'एवं' इति प॰ पुस्तके पाठः ।

न्यायापेतं न खलु सुधियः सङ्गिरन्ते कदाचित्
न्यायश्चात्र प्रकृतिसुभगः ख्यापितो नैव कश्चित् ॥ ११६ ॥

**अनिर्वाच्यख्यातिखण्डनम् ।**

केचित्पुनरनिर्वाच्यख्यातिं भ्रान्तिमुपागमन् ॥
युक्तिमार्गममुञ्चैतत्प्रवेशे निरदीदिशन् ॥११७॥

तथाहि शुक्तिशकले प्रतिभासमानस्य कलधौतस्य यदि सत्त्वं स्यात्तदा तद्बुद्धेरभ्रान्तत्वप्रसङ्गः, सत्यकलधौतबुद्धिवत् । असत्त्वे पुनर्गगननलिनादिवत् प्रतिभासप्रवृत्त्योरविषयत्वप्रसक्तिः । अथैतदभिधीयते शुक्तौ प्रतिभासमानं रजतं न सद्रूपं नासद्रूपं किन्तु सदसद्रूपमिति । तदपि नोपपन्नम् । प्रागुक्तोभयपक्षनिक्षिप्तदोषानुषक्तेः । तदुक्तं **'प्रत्येकं यो भवेद्दोषो द्वयोर्भावे कथं न स'** इति । सदसतोरैकात्म्यविरोधाच्च नायं पक्षः परीक्षां क्षमते । यदि हि सद्रूपं कथमसद्रूपम् । असद्रूपं तत्कथं सद्रूपम् । तन्न सदसद्रूपमपि निर्वक्तुं शक्यत इति ।

एवं च—

यतः सत्त्वासत्त्वप्रभृतिभिदया भद्र घटते
क्वचित् भ्रान्तिज्ञाने न खलु विषयो युक्तिकलितः ।
अनिर्वाच्यख्यातिः श्रयति तदियं सिद्धिसरणिं
समुन्मीलद्युक्तिव्यतिकरवशादप्रतिहता ॥ ११८ ॥

श्रितेयं यैरनिर्वाच्यख्यातिः ख्यातिविरोधिनी ।
अनिर्वाच्या न ते न स्युर्न्यायविस्तरवेदिनाम् ॥ ११९ ॥

तथाहि । शुक्तिशकले न किञ्चित्कलधौतं नाम ख्याति । किं तर्हि शुक्तिखण्डमेव कलधौततया । तथैव प्रत्यभिज्ञानानुमानानां विवेकाख्यातिप्रतिक्षेपे प्रदर्शितत्वात् । तच्च शुक्तिकाखण्डं सत्त्वा-सत्त्वाभ्यां नानिर्वचनीयम् । तद्धि स्वरूपेण सत्पररूपेण चासद्दोषवशा-

त्कलधौततया प्रतिभातीति । यथा च सर्वं वस्तु स्वरूपेण सत्पररूपेण पुनरसदित्यभिधीयते न च विरुद्ध्यते तथा कथयिष्यामः स्याद्वादसिद्धिप्रघट्टक इति मा त्वरिष्ठाः । एवं च यदवाचि शुक्तिशकले प्रतिभासमानस्य कलधौतस्येत्यादि तत्सर्वं प्रतिक्षिप्तमवगन्तव्यम्।

किञ्च शुक्तिशकले कलधौतं प्रतिभातीति कथञ्चिन्न घटते विकल्पैर्विघटमानत्वात् । तथाहि । देशान्तरादिस्थितमेव कलधौतं शुक्तिकाञ्चिरसि परिस्फुरति किं वा देशान्तरादायातमुताहो शुक्तिकायामेव सम्पन्नमिति । तत्र न प्रथमविकल्पः कल्पनार्हः । देशान्तरादिस्थितस्य कलधौतस्यात्र करणजभ्रान्तिबोधाविर्भावे कर्मकारकत्वायोगात् । नापि द्वितीयो विकल्पः । भ्रान्तिज्ञानोत्पादकाले देशान्तरादागच्छतः कलधौतस्यानवलोकनात् । तृतीयोऽपि विकल्पो न समुचितः । शुक्तिकायां कलधौतस्योत्पादककारणानुपपत्तेः । न हि परिणाम्यादिकारणसामग्री विना पारमार्थिकस्य कार्यस्योत्पत्तिरुपपद्यते । अथ शुक्तेरज्ञानमेव तत्र प्रतीयमानस्य कलधौतस्य परिणामिकारणमिति मतिः । दुर्मतिरेवेयम् । अज्ञानस्य केवलपरिणामिकारणत्वायोगात् । अज्ञानं हि सम्यग्ज्ञानस्य प्रागभावो मिथ्याज्ञानं वा । द्वयमपि केवलं न परिणामिकारणम् । द्रव्यस्यैव तत्पर्यायपरिकरितस्य परिणामिकारणत्वप्रसिद्धेः । तर्ह्यात्मद्रव्यमेव सम्यग्ज्ञानप्रागभावलक्षणपर्यायाविष्टं मिथ्याज्ञानस्वरूपपर्यायाक्रान्तं वा शुक्तिशकले कलधौतस्य परिणामिकारणं भविष्यतीत्यपि न सम्भावनीयम् । चेतनस्याचेतनं प्रति कथञ्चन परिणामिकारणत्वानुपपत्तेः । स्यादाकूतं भवतः । नाज्ञानं सम्यग्ज्ञानप्रागभावो नापि मिथ्याज्ञानं किन्तु ताभ्यामर्थान्तरमेव मायाविद्यादिपर्यायप्रतिपाद्यमिति । तन्न हृदयङ्गमम् । भवदभिमतमायास्वभावाज्ञानसद्भावे प्रमाणाभावात् । तस्मादसुन्दरमुच्यते । शुक्त्यविद्याजनितं रजतं भ्रमज्ञाने परिस्फुरतीति ।

अपि चानिर्वचनीयख्यातिरित्यत्र ख्यातिरिति किमयं ‘ख्या प्रकथने’ इत्यस्य प्रयोगः ‘ख्यां प्रथने’ इत्यस्य वा। उभयत्रापि न त्वन्मतसिद्धिः। सदसद्रूपस्य वस्तुनः कथनीयतायाः प्रथमानतायाश्च युज्यमानत्वात् अन्यथा सर्वव्यवहारविलोपप्रसङ्गः। किञ्च किं निरुक्तिविरह एवानिर्वचनीयत्वमाहोस्विन्निरुक्तिनिमित्तविरहः। न प्रथमः कल्पः कल्पनार्हः। इदं रजतं नेदं रजतमिति निरुक्तेरनुभूयमानत्वात्। नापि द्वितीयो निरुक्तेर्हि निमित्तं ज्ञानं वा स्याद्विषयो वा। न प्रथमस्य विरहः। **‘रजतं भाति यद्भ्रान्तौ तत्सदेके परे त्वसत्। अन्येऽनिर्वचनीयं तदाहुस्तेन विचार्यते’** इति इष्टसिद्धिकारिकायां **‘रजतं भाति यद्भ्रान्तौ’** इत्यनेन वचसा विपरीतख्यातेः स्वयमेवाभ्युपगमात्। नापि द्वितीयस्य विरहः। यतो विषयः किं भावरूपो नास्त्यभावरूपो वा। प्रथमकल्पनायामसत्ख्यात्यभ्युपगमप्रसङ्गः। द्वितीयकल्पनायां तु सत्ख्यातिरेव। उभावपि न स्त इति चेत्। ननु भावाभावशब्दाभ्यां लोकप्रतीतिसिद्धावेव तावभिप्रेतौ विपरीतौ वा। प्रथमपक्षे तावद्यथोभयोरेकत्र विधिर्नास्ति तथा प्रतिषेधोऽपि। परस्परविरुद्धयोर्मध्यादेकतरविधिनिषेधयोरन्यतरनिषेधविधिनान्तरीयकत्वात्। द्वितीयपक्षे तु न काचित् क्षतिः। न ह्यलौकिकविषयसहस्रनिवृत्तावपि लौकिकज्ञानविषयनिवृत्तिस्तन्निरुक्तिनिवृत्तिर्वा। अथापि निःस्वभावत्वमनिर्वचनीयत्वम्। अत्रापि निसः प्रतिषेधार्थत्वेन स्वभावशब्दस्यापि भावाभावयोरन्यतरार्थत्वे पूर्ववत् प्रसङ्गः। प्रतीत्यगोचरत्वं निःस्वभावत्वमिति चेत्। अत्र स्ववचनविरोधः प्रतीत्यगोचरत्वं प्रतीयते चेति। यथा प्रतीयते न तथेति चेत्, अत्र न विप्रतिपद्यामहे। विपरीतख्यातेरेवमभ्युपगमे समागतत्वादिति।

---

१ पाणिनिधातुपाठेऽदादिगणे धा. १७. २ अयं धातुः पाणिनिव्याकरणे नोपलभ्यते।

एवं च—

यतो मिथ्याबुद्धौ रजतमिदमित्यत्र सततं
नृणा रूप्यत्वेन स्फुरति सदसच्छुक्तिशकलम् ।
अनिर्वाच्यख्यातावनुभवविरुद्धाभ्युपगतौ
तदेतस्यामाशा श्लथयथ कथं नैव सुधियः ॥ १२० ॥

अच्छेकमीमांसकवेधसाऽत्र प्रकल्पितां नूतनसृष्टिकल्पाम् ।
निर्मूलनाशार्थमिमामिदानीमलौकिकख्यातिमुपक्षिपामः ॥ १२१ ॥

अलौकिकख्यातिमत-निराकरणम् ।

तथाहि स प्राह । येयं शुक्तिशकले कलधौतप्रतीतिर्विपरीतख्यातिरिति तद्वादिना सम्मता सा तथा न भवति। सम्यक्कलधौतप्रतीतिवदिहापि प्रतिभासमानस्य कलधौतस्य विद्यमानत्वात् । विशेषः पुनर्लौकिकत्वालौकिकत्वकृतः । कलधौतसंवेदनसंवेद्यं हि कलधौतमभिधीयते तत्र यद्विपणिवीथ्यादिव्यवस्थितं तल्लौकिकं, तस्मादपरमलौकिकमिति ।

अतः सता मानसकाननोदरे गभीरयुक्तिप्रवरप्रसाधना ।
अलौकिकख्यातिरियं निरङ्कुशा करोतु केलीं करिणीव निर्भराम॥१२२॥

एतामलौकिकख्यातिमच्छेकः प्रतिपादयन् ।
अलौकिकत्वं स्वस्यैव सूचयत्येष केवलम् ॥ १२३ ॥

तथाहि । यद्यलौकिकरजतप्रतिभास प्रस्तुतरजतज्ञाने स्यात्तदा प्रवृत्त्यभावप्रसक्ति प्रतिपत्तॄणान् । अथालौकिकस्यापि लौकिकत्वं मत्वा प्रतिपत्तार. प्रवर्त्तिष्यन्त इति मति. । नन्वेवं सैव विपरीतख्यातिर्भवत. सुभगतामागता । अन्यच्च यदीयं रजतमतिरलौकिकरजतालम्बना तदा तस्य दृश्यस्वभावत्वात् प्रत्यासन्नमागच्छता प्रतिपत्रा सविशेषं दृश्येत तत् । तथाहि दवीयोदेशवर्तिना य· पदार्थः परिच्छिद्यते स नेदीयोदेशवर्त्तिना सविशेषमवसीयते शैलादिवत् । तथेदमपि भवेत् इन्द्रियादेरप्यलौकिकरजतगोचरज्ञानजनकस्य कारक-

१ छेक. अवसरज्ञः । २ 'अपि' इति नास्ति प. भ. पुस्तकयो. ।

चक्रस्य तदवस्थत्वात् । तथा लौकिकस्येवालौकिकस्यापि पारमार्थिककलधौतत्वाङ्गीकारे नेदं रजतमिति बाधकाभावप्रसक्तिः । अथ बाधकप्रत्ययेनालौकिकस्य लौकिकत्वनिषेधः क्रियत इत्यभिमतम् । तन्न सुन्दरम् । नेदं रजतमिति हि रजतं प्रतिषेधयत्येष प्रत्ययो न विद्यमानस्य रजतस्यालौकिकत्वमवद्योतयति नेदं रजतं लौकिकमपि त्वलौकिकम् इति । किञ्च प्रसक्तं प्रतिषिध्यते । न च लौकिकरजतं तत्र प्रसक्तम् । प्रसक्तं चेत्, तर्हि विपरीतख्यातिरेव ख्यातिसौधमधिरोहति । अपि चास्मिन् पक्षे इदं शुक्तिशकलं कलधौताकारतया मया पूर्वं परिच्छिन्नमित्येवं प्रत्यभिज्ञा नोत्पद्येत । किन्त्वेवं स्याद्यदेवालौकिक कलधौतं तन्मया लौकिकाकारेण परिच्छिन्नमिति । अन्यच्च किमिदमलौकिकत्वं नाम सम्मतमायुष्मताम् । किमन्यस्वभावत्वमर्थस्य, अन्यार्थक्रियाकारित्वं, अन्यकारणजन्यत्वं,अकारणजन्यत्वं वा । न तावदन्यस्वभावत्वम् । यादृश एव हि सम्यक्कलधौतस्य स्वभावः प्रतिभासते तादृश एवेतरस्यापि । अन्यस्वभावावभासित्वे च विपरीख्यातेरेवालौकिकख्यातिरित्यभिधानं विहितं भवेत् ।नाप्यन्यार्थक्रियाकारित्वम् । अन्यस्यार्थस्यान्यार्थक्रियाकारित्वे कारणान्तरपरिकल्पनानर्थक्यप्रसक्तेः। एकस्मादेव कारणात् सकलकार्याणां समुत्पत्तिसद्भावात् । एतेनान्यकारणजन्यत्वपक्षोऽपि प्रतिक्षिप्तः । समानसमाधानत्वात् अकारणजन्यत्वपक्षे पुनरलौकितया सम्मतस्य रजतस्य भावरूपत्वमभावरूपत्वं वा भवेत् । भावरूपत्वेऽस्य नित्यत्वप्रसङ्गः । सद्रूपस्य कारणादनुपजायमानस्यानित्यत्वानुपपत्तेः । अथाभावरूपत्वम्, तर्हि कथमिदं रजतमिति विधिमुखेन तस्य प्रतीतिः । न खलु कुम्भाभावेऽयं कुम्भ इति विधिद्वारा प्रतीतिः स्वप्नदशायामप्यनुभूयते । अथाभावरूपस्यापि तस्य कुतश्चित् भ्रान्तिनिमित्ताद्भावरूपतया प्रतीतिर्भवतीत्यङ्गीक्रियते । तर्हि सखे सैवेयं विपरीतख्यातिर्भूयोऽपि प्रसभं वल्लभमिव भवन्तं भजत इति । किञ्चायं लौकिकालौकिकविवेकः प्रतीतिनिमित्तो वा भवेत् व्यवहारभावाभावनिमित्तो वा । न तावत्प्र-

थमः पक्षः, तथाप्रतीतेरभावात् । क्वापि रूप्यं क्वापि च रूप्याभावः प्रतीयते न पुनरिदं लौकिकं रूप्यमिदं त्वलौकिकमिति । अथेदं व्याह्रियते यत्र व्यवहारः प्रवर्त्तते तल्लौकिकमितरत्त्वलौकिकमिति । ननु कोऽयं व्यवहारः सम्मतः शेमुषीशालिनः । यदि ज्ञानाभिधानव्विभाव इत्यभिधीयते । स तावन्नास्त्येव । नहीदं लौकिकमिति कश्चिज्जानीतेऽभिधत्ते च लौकिकः । अथ रजतार्थक्रियाकरणं व्यवहारः स तु प्रस्तुते रजते नास्तीत्यलौकिकं तदुच्यते । हन्तैवमुत्पत्तेरनन्तरं विनष्टः कुम्भोऽप्यलौकिकः स्यात् । स्वसाध्यसलिलाहरणधारणाद्यर्थक्रियाया अकरणात् । तन्नायं लौकिकालौकिकविभागः कथञ्चिद्विचारवर्त्तनीमनुवर्त्तत इति ।

तदेवमेवंविधदोषदूषितां विसूत्रिताशेषपरोक्तयुक्तिकाम् ।
न कश्चिदप्यत्र विसंस्थुलामिमामलौकिकख्यातिमुरीकरोति ॥ १२४ ॥

ख्यात्युत्तराणि तदिमानि विचारितानि
युक्त्या कथञ्चिदपि नैव घटामटन्ति ।
तस्मात् भ्रमेषु नियतं विपरीतवस्तु
ख्यातिः प्रमाणकलितेह समभ्युपेया ॥ १२५ ॥

सिद्धान्तभूतविपरीतवस्तुख्यातिमते परोपदर्शितदूषणानां निरासः ।

किं किं जलपस्यन्यथाख्यातिरेव
स्वीकर्त्तव्या तार्किकैर्भ्रान्तिबोधे ।
दूरोपता सर्वथैव त्वदाशा
दोषेष्वेवं जागरूकेषु सत्सु ॥ १२६ ॥

तथाहि तस्याः किमालम्बनं कलधौतं शुक्तिकाशकलं वा । कलधौतं चेन्नन्वेवमसत्ख्यातिरेषा भवेन्न पुनर्विपरीतख्यातिः । असतः कलधौतस्य तत्र प्रतीतेः । अथान्यदेशकालं सदेव तत्तत्र प्रतिभासते ततोऽयमदोषः । तदसमीचीनम् । एवं सतीदं रजतमित्युल्लेखेन ज्ञानानुत्पत्तिप्रसक्तिः । नह्येतद्देशकाले रजते विप्रकृष्टे चाक्षुषं

१ 'कारणं' इति भ. पुस्तके पाठः ।

ज्ञानं भवितुमर्हति । अन्यथा सर्वत्र चाक्षुषज्ञानोत्पादप्रसङ्गेन नभसोऽपि तद् ग्राहकं भवेत् । तत्र विपरीतख्यातेः कलधौतमालम्बनम् । नापि शुक्तिका । रजताकारतयोपजायमानत्वात् । न चान्याकारायाः संवित्तेरन्यदालम्बनं युक्तम् । अतिप्रसक्तेः । यदि चेयं संवित्तिः शुक्तिकालम्बना कथमस्याः भ्रान्तित्वं भवेत् । अथेदमभिधीयते अन्यदालम्बनमन्यच्च प्रतिभाति । तथा ह्यालम्बनं शुक्तिशकलं कलधौतन्तु प्रतिभासत इति । एतदप्यसाधीयः । यतः शुक्तिशकलस्यालम्बनत्वं प्रतिभासमानत्वेन यदि नाभ्युपगम्यते तदा कथं तत्स्यादिति वाच्यम् । सन्निहितत्वेन चेत्, तर्हि तत्सन्निहितस्य विश्वम्भराप्रदेशस्यापि तदालम्बनत्वप्रसक्तिः । तन्न सन्निहितत्वनिबन्धनमालम्बनत्वम् । किं तर्हि प्रतिभासनिबन्धनम् । एवं च यदेवास्यां प्रतीतौ प्रतिभासते तदेव रजतमालम्बनतयाऽभ्युपगन्तुं युक्तं तच्च तत्रासदेव । एवं चासत्ख्यातिरियमायाता न विपरीतख्यातिरिति ।

विपरीतख्यातिमिमां समन्ततो दोषदूषितशरीराम् ।
अपरख्यातिगुणानामनभिज्ञो यदि परमुपैति ॥ १२७ ॥

किं ब्रूमहेऽस्य निरपत्रपताममूषु
यत्ख्यातिषु प्रतिहतास्वपि पक्षपाती ।
निःशेषदोषविमुखे स्वधियान्यथार्थ-
ख्यातिभ्रमेऽपि परिजल्पति दोषमालाम् ॥ १२८ ॥

तथा हि यदुक्तं तस्याः किमालम्बनमित्यादि । तत्र रजतमेवालम्बनमित्येके । न चैवमसत्ख्यातित्वप्रसक्तिः । देशान्तरादौ कलधौतस्य विद्यमानत्वात् । असत्ख्यातिपक्षे हि सर्वथाऽप्यसतोऽर्थस्य प्रथनमास्थीयते । अत्र पुनर्देशान्तरादौ विद्यमानस्येत्यनयोर्महद्वैलक्षण्यं लक्ष्यते । ननु तत्राविद्यमानस्य रूप्यस्य नयनासन्निकृष्टस्य कथं प्रतिभानं

१ 'दोषमालाः' इति भ. मै. पुस्तकयोः पाठः ।

भवेदिति न विभावनीयम् । अतद्देशकालस्यापि कलधौतस्य दोषमहिम्ना सन्निहितत्वेन प्रतिभासविषयतोपपत्तेः । अत एव हि तत्प्रतीतेर्विपरीतख्यातिरूपतेत्यङ्गीक्रियते । न चातद्देशकालस्यास्य ग्रहणे विश्वस्यापि ग्रहणप्रसक्तिरित्यभिधानीयम् । सदृशार्थदर्शनसमुद्भूतस्मरणोपस्थापितस्यास्य प्रतिभासस्वीकारात् । न च विश्वस्य तदुपस्थापितत्वमस्तीति कथं तद्ग्रहणाशङ्कापि । तदुपस्थानं चेति चेतसि परिस्फुरतः पदार्थस्य वहिरवभासनमुच्यते न पुनः पशोरिव रज्जुनियन्त्रितस्योपढौकनम् । न वचनीयमेवं तर्हीयमात्मख्यातिरसत्ख्यातिर्वा सम्पन्नेति । संवेदनात् पृथग्भूतस्य पदार्थस्यात्र परिस्फुरणात्, अत्यन्तासतः प्रतिभासाभावाच्च । ननु रजतमिदमित्यादिज्ञानस्य प्रत्यक्षरूपत्वेन स्मरणानपेक्षत्वात् कुतस्तदुपस्थापितार्थावभासित्वमिति । इदं नाभिधेयम् । प्रत्यक्षाभासत्वेनास्यैवंप्रकारपर्यनुयोगानाधिकरणत्वात् । ततः सिद्धमिदं, स्मरणोपढौकितं कलधौतमस्याः संवित्तेरालम्बनमिति ।

रजतभ्रमस्थले संवृत्तस्वाकारा समुपात्तकलधौताकारा च शुक्तिकैवालम्बनमिति स्वसिद्धान्तानुकूलस्य वृद्धमतस्य प्रतिपादनम् ।

संवृतस्वाकारा समुपात्तकलधौताकारा च शुक्तिकैवालम्बनमिति तु वृद्धाः । वस्तुस्थित्या हि शुक्तिरेव सा त्रिकोणत्वादिविशेषग्रहणाभावात्तु संवृतस्वाकारा चाकचिक्यादिसमानधर्मदर्शनोपजनितरूप्यस्मरणारोपितरूप्याकारत्वाच्च समुपात्तरूप्याकारेत्यभिधीयते । ननु कथं कलधौताकारायाः संवित्तेः शुक्तिकालम्बनत्वं युक्तमतिप्रसक्तेरित्यप्यपरीक्षकलक्षितम् । अङ्गुल्यादिना हि निर्दिश्यमानं कर्मतया ज्ञानस्य जनकमालम्बनमुच्यते । एतच्च शुक्तिकाया समस्त्येव । कथमितरथा प्रस्तुतज्ञानेनेयमपेक्ष्येत । सा ह्येतेन नूनमपेक्षणीया । अन्यथा शुक्तेरसन्निधानेऽपि प्रस्तुतज्ञानमुत्पद्येत । एवञ्च अयेदमभिधीयते इत्यादिना शङ्कामुत्पाद्यान्यदालम्बनमन्यच्च प्रतिभातीति यद्दूषितं तदपि परास्तं प्रतिपत्तव्यम् । अन्य-

दालम्बनमन्यच्चकास्तीत्यस्यानङ्गीकरणात् । शुक्तिकाया एवालम्बनत्वेन सादृश्यवशाद्रजताकारतया प्रतिभासमानत्वेन च समर्थितत्वात् । यदि च शुक्तिकैवालम्बनं नेष्यते तदानीमुत्तरकालं तद्विषयप्रत्यभिज्ञानस्य बाध्यबाधकभावस्य चानुपपत्तिः । तथाहि यत्पूर्वं मया रजतत्वेन प्रतिपन्नं तदेवेदं शुक्तिशकलमिति प्रत्यभिज्ञानं प्रतिप्राणिप्रसिद्धं प्रकृतकलधौतधियः कलधौतालम्बनत्वे कथमात्मानं लभेत । नेदं रजतमपि तु शुक्तिकेत्येवमाकारेण शुक्तिकाज्ञानेन बाधा च कथं घटेत । भिन्नगोचरयोः स्तम्भकुम्भोपलम्भयोर्बाध्यबाधकाभावानुपलब्धेः।

अत्राह परः—

बोधानां बाध्यबाधकभावो नास्तीति पूर्वपक्षस्य सविस्तरं खण्डनम् ।

धीमन् करोमि न करोमि करोमि यद्वा
कञ्चित्तवापि बत पर्यनुयोगमत्र ।
नो चेत् प्रकुप्यति भवानथवाऽप्यवज्ञां
नैव क्षणं गजनिमीलिकया करोति॥१२९॥

तथा हि कोऽयं बाध्यबाधकभावो नाम बोधानाम् । किं सहानवस्थानम् किमु वध्यघातकभावः किं वा विषयापहारः, उतस्वित्फलापहार इति । तत्र च यद्याद्यः पक्षस्तदा सम्यक्प्रत्ययेन मिथ्याप्रत्ययस्येव मिथ्याप्रत्ययेनापि सम्यक्प्रत्ययस्य सहानवस्थानसम्भवादविशेषेणैव बाध्यबाधकभावप्रसक्तिः । द्वितीयपक्षेऽप्ययमेव दोषः । वध्यघातकभावस्यापि द्वयोरपि सम्यङ्मिथ्याप्रत्यययोरविशिष्टत्वात् । नापि तृतीयः पक्षः। विषयस्य प्रतिपन्नत्वेनापहर्तुमशक्यत्वात् । नहि बाधकज्ञानमित्थमुत्पद्यते यत्प्रतिपन्नं तन्न प्रतिपन्नमिति । नापि फलापहारलक्षणो बाधः । उपादानादिसंविदः प्रमाणफलस्योत्पन्नत्वेनानपहरणीयत्वात् । नहि यदुत्पन्नं तदनुत्पन्नमित्यभिदधाति बाधकः ।

किञ्च तुल्यगोचरयोर्बाध्यबाधकभावः पृथग्गोचरयोर्वा भवेत् । न

---

१ गजो नेत्रे निमील्य जलपानादि करोति । नेत्रनिमीलनेन न किञ्चित्करोमीति भावयति च तद्वत् । २ 'च' इति भ. प. पुस्तकयोः पाठः ।

तावत्तुल्यगोचरयोः । धारावाहिज्ञानेष्वपि बाध्यबाधकभावप्रसक्तेः । नापि पृथग्गोचरयोरयं युज्यते । स्तम्भकुम्भोपलम्भयोस्तदनुपलम्भादिति। अत्राभिधीयते । प्रथमद्वितीयविकल्पौ तावदिहानङ्गीकारेणैव प्रतिहताविति तत्र वाग्विस्तरः केवलं कण्ठशोषार्थमायुष्मतः सम्पन्नः। विषयापहारस्तु बाधः स्वीक्रियते । विषयस्य च न प्रतिपन्नत्वमपह्रियते किन्तु प्रतिपन्नस्यासत्त्वं ख्याप्यत इत्यपहारार्थः । असत्त्वमपि नेदानीमुपनतमस्य ख्याप्यतेऽपि तु तदैव तदसदिति प्रकाश्यते । ततश्च न पूर्वोपलब्धमुद्गरदलितकलशाभावज्ञान इवात्राप्यबाधा शङ्कनीया । ननु प्रथमज्ञानेन तदानीं कलधौतस्य सत्त्वं गृहीतं बाधकेन तु तदैवासत्त्वं ख्याप्यत इति स्वरूपेणैव तस्य सत्त्वमसत्त्वं च परस्परविरुद्धं युगपद्द्वयमापतितमिति । तदसत् । प्राक्प्रतिपन्नाकारोपमर्दद्वारेण बाधकप्रत्ययोत्पत्तेः । यन्मया तदा रजतमिति प्रतिपन्नं तद्रजतं न भवत्यन्यदेव तद्वस्त्विति । न चेदमाशङ्कनीयम् । स्वकालनियतत्वात् ज्ञानानां कथमुत्तरस्य ज्ञानस्य पूर्वज्ञानोत्पादकालावच्छिन्नतद्विषयाभावप्रतिपत्तिसामर्थ्यमिति । स्वसामग्रीतस्तथैवोत्तरस्य बाधकप्रत्ययस्योत्पद्यमानस्य प्रतीतेः । न च प्रमाणप्रतीतमपि प्रतिनियतकार्यकरणसामर्थ्यं पदार्थानां कदर्थयितुं केनापि शक्यमिति । फलापहारोऽपि बाधः सम्भाव्यत एव । बाधकप्रत्ययोत्पादे सत्युपादानादिबुद्धिरूपस्य प्राचीनज्ञानफलस्य निवर्त्तमानत्वेनानुभूयमानत्वात् । ततः फलापहारात् प्राक्तनसंवेदनं बाधितं भवत्येव । एवं चोपादानादिसंविदः प्रमाणफलस्योत्पन्नत्वेनानपहरणीयत्वादिति निरस्तम् । यदपीदमगादि तुल्यगोचरयोर्बाध्यबाधकभावः पृथग्गोचरयोर्वेत्यादि । तस्य तुल्यगोचरयोरेव ज्ञानयोर्बाध्यबाधकभावमभिदध्महे । न चैवं धारावाहिज्ञानेष्वपि तत्प्रसक्तिः । एकस्मिन् धर्मिणि विरुद्धाकारावबोधकयोर्बोधयोर्बाध्यबाधकभावाभ्युपगमात् । न च धारावाहिज्ञानान्येकत्र विरुद्धाकारावबोधकानीति कथं तेषु बाध्यबाधकभावाभिधानं साधीयः । अनुभूयमानत्वाच्च बाध्यबाधकभावो बुद्धीनां न

विरोधमधिरोहति । अथ मिथ्यैवायमनुभव इत्यभिदधासि । हन्त मिथ्यात्वं कुत इति । बाध्यमानत्वादिति चेत् । एवं तर्हि समाधत्स्व स्वान्तं विनिमील्य लोचने विमुच्य स्वदर्शनाभिनिवेशवैशसं स्वयमेव विवेचयत्वायुष्मान् किमस्ति बुद्धीनां बाध्यबाधकभावो न वेति । तदेव बाध्यबाधकभावानुभवस्य बाध्यमानत्वेऽबाध्यमानत्वे वोभयथापि बोधानां बाध्यबाधकभावः सिद्धिसौधमध्यास्त एव । ततः सिद्धमिदम् । संवृतस्वाकारा समुपात्तकलधौताकारा च शुक्तिकैवालम्बनमिति । एवमपरेष्वपि दिनकरकरनिकरनीरावसायगन्धर्वनगरनीरदनिवहग्रहणरजनिजानियुगलावलोकनरज्जुभुजङ्गमावगमकम्बुपीतिमप्रत्ययशर्करातिक्तताप्रतिभासप्रभृतिषु विभ्रमेषु निगूहितनिजाकारं परिगृहीतजलाद्याकारं च वस्तु विषयतयावबोद्धव्यम् ।

स्वप्नादिज्ञानानां परोक्षालम्बनं खण्डयित्वा स्वमतेन तदुपपादनम् ।

अथ स्वप्नदशायां स्तम्बेरमादिप्रत्ययस्य किमालम्बनमिति चेत्, तद्देशवर्त्ती शय्यादिपदार्थ एवेत्येके । तदनुपपन्नम् । प्रमाणाभावात् । न हि सन्निहितत्वादेव ज्ञानस्य विषयः । किन्तर्हि यस्तत्र प्रतिभासते स चोत्तरकालभाविना प्रत्यभिज्ञानेन बाधकेन व्यवस्थाप्यते । न च शय्यादावित्थं प्रत्यभिज्ञानमुन्मज्जति यदुत यदेव गजादिरूपतया पूर्वं मया प्रतिपन्नं तदेवेदं शय्यादि नाप्येवं तत्र बाधकमुज्जिहीते नेदं गजादिकं किन्तु शय्यादीति । तस्मान्न तत्र शय्यादिकमालम्बनं किं तर्हि पूर्वोपलब्धोऽनुपलब्धो वा विद्यमानोऽविद्यमानो वा यः प्रतिबुद्धावस्थायां बाधकप्रत्ययेनानुसन्धीयते स खलु देशकालस्वभावान्यत्वेन स्वप्नज्ञाने प्रतिभासमानस्तस्यालम्बनमित्युच्यते । तथाहि प्रतिबुद्धः सन् कथयति मयाद्य स्वप्ने देशान्तरस्थः पुत्र इह स्थित इति दृष्टः । पिता पुनर्मृतोऽपि जीवतीति दृष्टः । तथाऽन्धोऽनन्ध इत्येवमादि । केशकूर्चाकारज्ञानेऽप्यविद्यमानः केशसमूहः सदाकारतया प्रतिभासमानः सन्नालम्बनम् । बाधकोत्पत्तौ तथाऽनुसन्धानात् । ननु चाविद्यमान-

स्यालम्बनत्वायोगान्निर्विषयमेतज्ज्ञानं प्राप्तमिति । मैवं वादीः । अतीतानागतयोरविद्यमानत्वेऽप्यालम्बनत्वात् । निरालम्बनत्वे ह्यख्यातिरेव स्यात् तत्र चोक्तो दोषः । अतीतानागतस्वप्नादिज्ञानानामविद्यमानार्थालम्बनत्वाविशेषात् भ्रान्ताभ्रान्तसंवेदनविशेषानुपपत्तिरिति चेत् । मैवं मंस्थाः । तद्रूपातद्रूपव्यवसितित्वेन तयोस्तयोर्विशेषोपपत्तेः । न हि विद्यमानाविद्यमानार्थालम्बनत्वेन तत्त्वज्ञानेतरविभागः । किं तर्ह्यविद्यमानोऽप्यर्थो यथा तथा च तेनैवाविद्यमानाकारेण निश्चीयते तदा तद्विषयं तत्त्वज्ञानमेव । तद्रूपाव्यभिचारात् । यदा पुनर्विपरीतेन सदाकारेणाऽसन्नर्थो व्यवसीयते । तदा भ्रान्तिरिति ।

एवं चैष विपर्यस्तख्यातिरूपो विपर्ययः ।
इत्थं समर्थितोऽस्माभिः परोपालम्भभञ्जनात् ॥ १३० ॥११॥

विपर्ययानन्तरं संशयस्वरूपमुपदर्शयन्नाह—

## साधकबाधकप्रमाणाभावादनवस्थितानेककोटिसंस्पर्शि ज्ञानं संशय इति ॥ १२ ॥

साधकबाधकप्रमाणाभावात् । उल्लिख्यमानस्थाणुत्वपुरुषत्वाद्यनेकांशगोचरयोः साधकबाधकप्रमाणयोरनुपलम्भात् । अनवस्थितानेककोटिसंस्पर्शि अनवधारितनानांशावलम्बि विधौ प्रतिषेधे वा न समर्थमित्यर्थः । ज्ञानमिति बोधविशेषः । किमित्याह संशयः सामिति समन्तात्सर्वप्रकारैः शेत इवेति संशय इति व्युत्पत्तेः ॥ १२ ॥

उदाहरणमाह—

## यथाऽयं स्थाणुर्वा पुरुषो वेति ॥ १३ ॥

अयमत्र भावार्थः । दूरात्प्रत्यक्षगोचरे पुरोवर्त्तिनि धर्म्मिणि स्थाणुपुरुषयोरारोहपरिणाहलक्षणस्य साधारणधर्ममात्रस्य दर्शने समानधर्मदर्शनप्रबुद्धसंस्कारतया विशेषस्मरणे च सति स्थाणुत्वपुरुषत्वगोचरयोर्वे-

क्रकोटरादिकरचरणादिविशेषधर्मोपलम्भरूपसाधकबाधकप्रमाणयोरभावात् यदा स्थाणुरयमिति निर्णेतुमभिलषति तदा पुरुषविशेषानुस्मरणेन पुरुषे समाकृष्यते यदा पुनः पुरुषोऽयमिति निश्चेतुमिच्छति तदा स्थाणुविशेषानुस्मरणेन स्थाणावाकृष्यत इत्येवमनेकार्थे समाकृष्यमाणस्य प्रतिपत्तुरनवस्थितरूपतया दोलायमानः स्थाणुर्वाऽयं स्यात्पुरुषो वेति प्रत्ययः प्रादुर्भवतीत्ययं प्रत्यक्षविषये संशयः । परोक्षविषये तु यथा क्वापि विपिनप्रदेशे शृङ्गमात्रदर्शनात् किं गौरयं स्याद्गवयो वेति । जम्बूनिम्बकदम्बादितरुकदम्बकान्तरितपिण्डस्य हि समान्येन शृङ्गमात्रदर्शनानुमितस्य गोत्वगवयत्वगोचरसाधकबाधकप्रमाणाभावेन संशयविषयत्वात्परोक्षविषयोऽयं संशयः । तथा पिशाचोऽत्रास्ति न वेति गृहे ।स्थितस्य वाप्यामापः सन्तीत्यादि च ज्ञानं नित्यपरोक्षपिशाचकदाचित्परोक्षवापीपयःप्रभृतिपदार्थभावाभावलक्षणानेककोटिसंस्पर्शात्संशय एव । ननु गृहे स्थितस्य वाप्यामापः सन्तीति ज्ञानं जलभावरूपमेकमेवांशं स्पृशतीति कथमस्यानेककोटिसंस्पर्शित्वं यतः संशयः स्यादिति चेत् । साधकबाधकप्रमाणाभावापेक्षयेति ब्रूमः । तथाहि यद्यत्र साधकबाधकप्रमाणे स्यातां तदा निर्णयरूपमेवेदं भवेत् । तदभावे तु सामर्थ्यादपरोऽपि न सन्तीत्यंशोऽन्तर्निगीर्णः स्फुरतीति सिद्धं संशयत्वसाधकमनेककोटिसंस्पर्शित्वमस्यापीति ।

अत्राह कश्चित्—

संशयज्ञानमस्वीकुर्वतो मतस्य खण्डनम् ।

न संशयो नाम समस्ति वस्तुतः[१]
स्फुरत्प्रमाणप्रातिलब्धमूर्त्तिकः ।
न लक्षणं वक्तुमतोऽस्य युज्यते
तुरङ्गशृङ्गं किमु लक्ष्यते क्वचित् ॥१३१॥

तथाहि संशयज्ञाने धर्म्मी धर्मो वा प्रतिभासते । यदि धर्म्मी स तर्हि तात्त्विकोऽतात्त्विको वा । यदि तात्त्विकः । कथं तर्हि

१ 'वस्तुनः' इति भ. पुस्तके पाठः ।

तद्बुद्धेः संशयरूपता । तात्त्विकार्थव्यवसितिरूपत्वात् करतलकलितकुवलयादिव्यवसायवत् । अथातात्त्विकः । तदाप्यतात्त्विकार्थगोचरत्वात् केशकूर्चादिज्ञानवद्विपर्यय एव संशयः प्राप्तः । अथ धर्म्मः, स स्थाणुत्वलक्षणः पुरुषत्वलक्षण उभयं वा । पक्षत्रयेऽपि तात्त्विकातात्त्विकपक्षयोः पूर्ववद्दोषः । अथैकस्य तात्त्विकत्वमन्यस्यातात्त्विकत्वम् । तथापि तद्विषयं ज्ञानं भ्रान्तमभ्रान्तं चेत्युभयरूपं प्राप्तम् । अथ सन्दिग्धोऽर्थस्तत्र प्रतिभासते । तत्रापि तात्त्विकातात्त्विकत्वविकल्पयोः स एव दोषः ।

तदयं संक्षेपः—

यदत्र किञ्चिद्द्वितसंशये स्फुरत्यतात्त्विकं तत्किमथापि तात्त्विकम् ॥
अतात्त्विकं चेत् स भवेद्विपर्ययः परत्र पक्षे पुनरस्य मानता ॥१३२॥

तन्न संशयः कोऽपि विचार्यमाणः प्रतीतिपद्धतिमध्यारोहतीति ।

आः कुण्ठवर्य तदिमामलीकवाचालतां कलयताऽत्र ॥
उद्वेजिता नितान्तं भवता मनोऽनभिज्ञेन ॥ १३३ ॥

यतः संशयः सकलप्राणिनामनवस्थितानेककोटिसंस्पर्शिप्रतिपत्त्यात्मकत्वेन स्वात्मसंवेद्यो वर्त्तते स च धर्म्मिविषयो धर्मविषयो वा भवतु किमेभिरप्रमाणमूलैर्गजविकल्पकल्पैर्विकल्पैरस्य स्वरूपमपह्नोतुं पार्यते । तथाहि कश्चिद्भीतः कुतर्कमुखरवठरखेण्डिककुडम्बकादिकलकोलाहलाकर्णनमात्रवातूलः कथमपि नृपतिमन्दिरद्वारमुपागतः प्रथमजलधरनीरन्ध्रधाराघोरणीधौतसमुद्धुराञ्जनगिरिशृङ्गसोदरं सपदि विदलितकुन्दकलिकावदातदन्तमुशलद्वितयरमणीयमनुगलविगलदविरलमदजलाकुलकपोलस्थलममन्दमन्दरोन्मथ्यमानमहाम्भोधिध्वानगभीरगर्जितमूर्जितप्रभञ्जनप्रेर्यमाणध्वजपटप्रान्तप्रचलत्कर्णतालमन्तरालस्थूलचलनचतुष्टयप्रतिष्ठितमनवरतपरिचलत्प्रबलशुण्डादण्डडामरमनतिनिकटनिषण्ण-

१ 'खण्डिक' इति म. पुस्तके पाठः ।

निरन्तरभयङ्करहुङ्कारमुखरमहामात्रप्रदीयमानस्थूलकवलकवलनाव्याकुलं मदकलमवलोक्य विकल्पयति किमिदमन्धकारनिकुरम्बं मूलकान् कवलयति, किं वा वारिवाहोऽयं बलाकावान् वर्षति गर्जति च । यद्वा बान्धवोऽयं 'राजद्वारे स्मशाने च यस्तिष्ठति स बान्धवः' इति परमाचार्यवचनात् । अथवा योऽयमासन्नमेदिनीपृष्ठप्रातेऽशायी पुरुषस्तस्य च्छायेयं स्त्यानीभूतेति ।

दूषयति च । नाद्यः पक्षोऽन्धकारस्य सूर्पयुगलप्रस्फोटनाभावात् । नापि द्वितीयः, स्तनयित्नोः स्तम्भचतुष्टयाभावात् । नापि तृतीयः, बन्धोरस्मद्दर्शननिबन्धनलगुडभ्रमणासम्भवात् । नापि तुरीयः, न हि नरशिरःशतोद्गिरणनिगरणं सम्भवति छायायाः । ततो न किञ्चिदेतदिति । न चैतावता मतङ्गजस्वभावो व्यावर्त्तते । एवं धर्मादिविकल्पैरपि न सन्देहस्वरूपं व्यावर्त्तते । प्रत्यक्षप्रतिपन्नस्यापि पदार्थस्वरूपस्यापलापे सुखदुःखादेरप्यपलापः प्रसज्येत । कथं च धर्म्मिविषयो धर्मविषयो वेत्यादिप्रश्नसमुत्पादकसन्देहमेदिनीधरशिखरसमधिरूढ एवायं संशयं निराकुर्यान्नो चेदाकुलप्रज्ञः । अथोत्पत्तिकारणाभावादसाधारणस्वरूपाभावाद्विषयाभावाच्च संशयः प्रतिक्षिप्यते । तदसत् । तदुत्पत्तिकारणस्य साधकबाधकप्रमाणाभावलक्षणस्य सद्भावात् । अनवस्थितानेककोटिसंस्पर्शिप्रतिपत्तिलक्षणस्यासाधारणस्वरूपस्य संशये विद्यमानत्वात् । प्रोक्तनिदर्शनेषु संशयविषयस्य स्पष्टं दर्शितत्वाच्च । ततश्च—

यस्माज्जन्मनिमित्तमस्य सुघटं यस्मादसाधारणं
रूपं सम्यगमुख्यविश्वविदितं युक्तोऽस्य यद्गोचरः ।
यस्मादप्यनुयोगमत्र कुरुषे त्वं संशयानः सखे
तस्मादेष निजं स्वरूपमयतां निःसंशयः संशयः ॥१२४॥१३॥

अथ क्रमायातमनध्यवसायं साधयन्नाह—

**किमित्यालोचनमात्रमनध्यवसाय इति ॥ १४ ॥**

किमित्यालोचनमात्रं अस्पष्टविशिष्टविशेषज्ञानमात्रम् । किमित्याह ।

अनध्यवसायस्तृतीयः समारोपभेदः अध्यवसायाद्विशेषोल्लेखिज्ञानादन्य इति कृत्वा ॥ १४ ॥

उदाहरणमाह—

**यथा गच्छत्तृणस्पर्शज्ञानमिति ॥ १५ ॥**

गच्छतो व्रजतः सतः प्रमातुस्तृणस्पर्शविषयं ज्ञानं तृणस्पर्शज्ञानमन्यत्रासक्तचित्तत्वादेवंजातीयकमेवंनामकमिदं वस्त्वित्यादिविशेषानुल्लेखि किमपि मया स्पृष्टमित्यालोचनमात्रमित्यर्थः । एतदुदाहरणदिशा चापरोऽपि प्रत्यक्षयोग्यविषयश्चानध्यवसायोऽवसेयः । तद्यथा, मञ्जुगुञ्जन्सुभगभृङ्गावलीवलयितकपोलपालिसलीलपरिचलन्मदकलचक्रवाले खरखुरशिखरसमुत्खातक्षोणितलतुरगनिकुरम्बेऽनणुमणिकिङ्कणीक्वाणरमणीयवैजयन्तीविसरप्रसाधितस्यन्दनकदम्बके करतलकलितनिशिततरवारिवैरि[1]विसरसम्पत्तिपत्तिसङ्घाते गतेऽपि प्रसिद्धे क्वचन काश्यपीपतौ कोऽप्यनेन पथा गत इति ज्ञानमात्रव्यासङ्गादनुल्लिखितविशेषं प्रत्यक्षयोग्यविषयोऽनध्यवसायः । तथा नालिकेरद्वीपवासिनः कस्यचिदपरिज्ञातगोजातीयस्य पुंसो देशान्तरमायातस्य क्वचन वननिकुञ्जे सास्नामात्रदर्शनात् सामान्येन पिण्डमात्रमनुमाय को नु खल्वत्र प्रदेशे प्राणी स्यादिति जातिविशेषानुल्लेखि ज्ञानं परोक्षविषयोऽनध्यवसायः । नन्वयमनध्यवसायः संशयान्न विशिष्यते । विशेषानवधारणात्मकत्वादिति न तर्कणीयम् । स्वरूपभेदात् । अनवस्थितानेककोटिसंस्पर्शित्वं हि संशयस्य स्वरूपं सर्वथा कोट्यसंस्पर्शित्वं चानध्यवसायस्येति महाननयोर्भेदः ।

सोऽयमनध्यवसायः सम्यग्भेदप्रभेदतोऽभिहितः ॥
व्यवसायग्रहणेन प्रमाणसूत्रे निरस्तो यः ॥ १३५ ॥

एवं च—

संशयविपर्ययाऽनध्यवसायात्मा स्फुटं समारोपः ॥
एष त्रिविधोऽप्युक्तः शिष्यव्युत्पत्तिसिद्ध्यर्थम् ॥ १३६ ॥

---

१ 'वैरि' इति प. पुस्तके पाठः ।

ननु विपर्ययादिस्त्रिप्रकारः समारोपः प्ररूपितस्तत्र विपर्ययस्य तावत्समारोपत्वं प्रतीतमेवातस्मिँस्तद्ग्रहस्वरूपत्वात् । संशयस्य पुनः कथं तथोक्ष्यते तद्विलक्षणत्वादिति । तदसत् । तद्विलक्षणत्वस्यासिद्धेः संशयोऽप्यतस्मिन्ननवस्थितानेकांशविकले स्थाण्वादिवस्तुनि तद्ग्राहितया प्रवर्त्तत इत्यतस्मिंस्तद्ग्रहस्वरूपत्वाद्भवत्येव समारोपः ।

अनवस्थितानेककोटिसंस्पर्शित्वविशेषेण पुनरेककोटिसंस्पर्शिनो विपर्ययाद्भिन्नतयाऽसौ सूत्रितः । नन्वनध्यवसायस्य तर्हि कथ समारोपरूपता स हि वस्त्वेव न भवति कुतोऽतस्मिंस्तद्ग्रहस्वरूपम् ।[1] अभिहितं चास्यावस्तुत्वं भट्टेन 'वस्तुत्वाद्विविधस्येह सम्भवो दुष्टकारणात्' इति संशयविपर्यययोरेव वस्तुत्वमभिदधता । तदसत् । यतः कुतोऽस्यावस्तुत्वमुच्यते । सम्यग्ज्ञानानुत्पत्तिरूपतया तदभावस्वभावत्वादिति चेत् तर्हि संशयविपर्यययोरपि तत्प्राप्नोति । तयोरपि यथार्थध्यवसायास्वभावत्वात् । तयोरनेकांशानवस्थितप्रतिभासविपरीताकाराध्यवसायस्वरूपत्वाद्वस्तुस्वरूपत्वेऽकिञ्चित्करवेदनरूपत्वादनध्यवसायस्य कथमवस्तुत्वम् । तस्य सकलस्य स्वभावशून्यत्वेन कथमप्रमाणविशेषत्वं प्रमाणं न भवतीत्यप्रमाणमिति । प्रमाणप्रतिषेधमात्रेणेति चेत् । ननु कोऽस्य प्रमाणप्रतिषेधस्याधारो यत्र प्रतीतिः स्यात् । विकल्पमात्रमिति चेत् तर्हि विकल्पमात्रमिदं प्रमाणं न भवतीति प्राप्तम् । पुरुषोऽयं ब्राह्मणो न भवतीति यथा । ततश्च नावस्तुरूपत्वमनध्यवसायस्य । ब्राह्मणविविक्तपुरुषमात्रवत् प्रमाणत्वविविक्तविकल्पमात्रस्य वस्तुत्वसिद्धेः । किञ्च न विकल्पमात्रस्यानध्यवसायत्वेनाप्रमाणत्वं युक्तम् । तस्याध्यवसायसामान्यरूपत्वात् । संवेदनमात्रमकिञ्चित्करं प्रमाणत्वनिषेधाधिकरणमिति चेत् तर्हि प्रमाणप्रतिषेधमात्रेणापि वस्त्वेव संवेदनरूपमाश्रीयते नानध्यवसायस्यावस्तुस्वभावता । अथायमस्तु वस्तु तथापि कथमस्य समारोपत्वमतस्मिँस्तदध्यवसायस्य तल्लक्षणस्याभावादिति

१ 'हि' इत्यधिकं प. पुस्तके ।

चेत् । एवमेतन्मुख्यवृत्त्या । उपचारवृत्त्या तु समारोपत्वमस्याद्रियामहे । तथाहि यथा गोगतजाड्यमान्द्यादिगुणसदृशजाड्यमान्द्यादिगुणयोगाद्वाहीके गोत्वं गोशब्दश्चोपचर्यते गौर्वाहीक इत्येवं तथा विपर्ययसंशयलक्षणसमारोपसमाश्रितायथार्थपरिच्छेदकत्वलक्षणगुणसदृशायथार्थपरिच्छेदकत्वगुणयोगादनध्यवसायेऽपि समारोपत्वं समारोपशब्दश्चोपचर्यते । समारोपोऽनध्यवसाय इत्येवं मुख्येनार्थेन सह सादृश्यमत्र सम्बन्धः । विपर्ययसंशयाभ्यां भेदेऽप्यस्य ताद्रूप्यप्रतीतिश्चोपचारप्रयोजनमिति ।

एवं च—

मुख्यार्थस्य च बाधे तद्योगे प्रयोजने च सति ॥
सिद्धोऽनध्यवसायोप्युपचारादिह समारोपः ॥ १३७ ॥१५॥

अथ प्रमाणसूत्रोपात्तं परशब्दं व्याख्यानयन्नाह—

## ज्ञानादन्योऽर्थः पर इति ॥ १६ ॥

ज्ञानात् ग्राहकात् सकाशादन्यो ग्राह्यतया पृथग्भूतोऽचेतनः सचेतनो वाऽर्थोऽर्थक्रियार्थिभिरर्थ्यमानः कुम्भादिः । किमित्याह पर इति ।

अत्र ज्ञानवादिनः प्रत्यवतिष्ठन्ते ।

ज्ञानवादिमतपरीक्षणम् ।

विज्ञप्तिमात्रात्परमस्ति तत्त्वं
न मानसिद्धं परनामधेयम् ॥
ततः कथं तद्व्यवसायिबोधं
परे प्रमाणं परिकीर्त्तयन्ति ॥ १३८ ॥

तथा चायं निश्चस्य विज्ञप्तिमात्रताप्रसाधनगुणः[1] प्रयोगः । ययोः सहोपलम्भनियमस्तयोरभेदो यथा तैमिरिकोपलभ्यमानमृगाङ्कमण्डलयोः । सहोपलम्भनियमश्च ज्ञानार्थयोरिति व्यापकविरुद्धोपलब्धिः । भेदे हि नियमेन सहोपलम्भो न दृष्टो यथा स्तम्भकुम्भयोः एवं च सति भेदः सहोपलम्भानियमेन व्याप्तस्तद्विरुद्धश्च सहोपलम्भनियमो दृश्यमानः स्वविरुद्धं

१ 'प्रसाधनानुगुणः' इति प. म. पुस्तकयोः पाठः ।

सहोपलम्भानियमं निवर्त्तयति। सहोपलम्भानियमश्च निवर्त्तमानः स्वव्याप्यं भेदं निवर्त्तयति। तस्मादयं हेतुर्विपक्षाद्भेदात् स्वविरुद्धसहोपलम्भानियमव्याप्तान्निवर्त्तमानो राश्यन्तराभावादभेद एवावतिष्ठते इत्यविनाभावसिद्धिः। तदुक्तम् 'सहोपलम्भनियमादभेदो नीलतद्धियोः' इति। तथा प्रकाशन्ते भावा यच्च प्रकाशते तद्विज्ञप्तिमात्रं यथा सुखादिकमिति। तथा यद्येन वेदनेन वेद्यते तत्ततो न भिद्यते यथा वेदनस्य स्वरूपं वेद्यन्ते च वेदनेन नीलादयः। भेदे हि ज्ञानेनैषां वेद्यत्वं न स्यात्। तादात्म्यस्य नियमहेतोरभावात्। तदुत्पत्तेस्तु चक्षुरादिभिर्व्यभिचारित्वात्। अन्येनान्यस्यासम्बद्धस्य वेद्यत्वे चातिप्रसङ्गादिति भेदे नियमहेतोः सम्बन्धस्य व्यापकस्यानुपलब्ध्या भेदाद्विपक्षात् व्यावर्त्तमानं वेद्यत्वमभेदेन व्याप्यत इति हेतोः प्रतिबन्धसिद्धिः।

एतैः कलङ्कविकलैः कथितैः प्रमाणै-
र्ज्ञानार्थयोर्भिदि हठेन निराकृतायाम् ॥
सद्योगिनीव सततात्मकृतप्रकाशा
विज्ञप्तिरेव बत राजति जीवलोके ॥ १३९ ॥

अथ ब्रूयादर्थाकारो ग्राह्यत्वेनैव प्रतीयते बोधाकारस्तु ग्राहकत्वेनैवेति कथमनयोरैक्यं, एकत्वे व्यत्ययेनापि तयोः प्रतिभासस्तस्माद्भिन्न एव ज्ञानादर्थ इति।

श्रुतं मयेदं यदुतान्य एव संवेदनादर्थ इति त्वदुक्तम् ॥
अयुक्तमेतत्परमार्थतो धीर्यद्ग्राहकग्राह्यतया विमुक्ता ॥१४०॥

तथाप्रतीतिव्यवस्था पुनरनाद्युपप्लववासनासामर्थ्यादेवोपपद्यते। तदुक्तम्

'अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते।
विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा ॥ १ ॥
तथा कृतव्यवस्थेयं केशादिज्ञानभेदवत्।
यदा तदा न सञ्चोद्यग्राह्यग्राहकलक्षणा' ॥ २ ॥ इति

१ धर्मकीर्तिकृतप्रमाणसमुच्चये प्रथमे भागे।

अनयोरर्थः स्वरूपेणाविद्यमानवेद्यवेदकाकाराऽपि बुद्धिर्यथा भ्रान्तैर्व्यवहर्तृभिर्निरीक्ष्यते । तथैव कृतव्यवस्थेयं व्यवह्रियते । तैस्तु भ्रान्तैरियं विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा निरीक्ष्यते विभक्तलक्षणौ ग्राह्यग्राहकाकारावेव विप्लवो यस्याः सा तथोक्ता । किमिव केशादिज्ञानभेदवत् । यथा तिमिराद्युपप्लुताक्षाणां न विद्यमाना एव केशादयो बोधाद्भिन्नाः प्रतिभान्ति तद्वन्नीलाश्रयोऽपीति ।[1]यथाऽयमविद्यानिबन्धन एव बुद्धेः प्रविभागस्तदयं न सन्नोद्यग्राह्यग्राहकलक्षणा, सन्नोद्ये पर्यनुयोज्ये ग्राह्यग्राहकलक्षणे यस्याः सा तथा न भवति । न ह्यविद्यासमारोपिताकारः पर्यनुयोगमर्हतीति । तदेवं बुद्धिव्यतिरिक्तग्राह्यग्राहकासम्भवाद्बुद्धिरेवानादिवासनावशादनेकाकारा प्रतिभासते । तदुक्तम्—

'[2]नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते' ॥ इति

स्वव्यतिरिक्तग्राह्यग्राहकविरहाद्बुद्धिः स्वयमेवात्मस्वरूपप्रकाशिका प्रकाशवदिति समुदायार्थः । ननु ज्ञाने नीलाद्याकारस्य कादाचित्कस्यान्यथाऽनुपपद्यमानत्वात् तत्प्रसिद्धये तदाकारोऽर्थः परिकल्प्यः । तदप्यसत् । वासनासामर्थ्यादेव ज्ञाने तथाभूतस्याकारस्योत्पत्तेर्नातोऽर्थसद्भावप्रसिद्धिः । अर्थाच्च तथाभूतज्ञानाकारभवस्वीकारे स्वप्नेन्द्रजालगन्धर्वनगरादिज्ञाने तदभावः स्यात् ॥ तथाहि—

गुञ्जन्मञ्जुमृदङ्गसङ्गिसुभगग्रामाभिरामं क्वणत्-
वीणावेणुपिकस्वरध्वनिलसल्लास्यं च सप्रेक्षणम् ।
स्वप्ने कश्चन कौतुकव्यतिकरव्याक्षिप्तचित्तः स्फुटं
पश्यन्नस्ति न वस्तु यद्विरचयेज्ज्ञाने तदा स्वाकृतिम् ॥१४१॥

---

१ 'यतः' इति भ. पुस्तके पाठः । २ धर्मकीर्तिकृतप्रमाणविनिश्चये प्रथमभागे ।
३ 'विक' इति प. पुस्तके पाठः ।

ततो ज्ञानाभावे ग्राह्याकारस्यानुपलम्भात् तद्भावे चोपलम्भादन्वयव्यतिरेकाभ्यां ज्ञानस्यैवायमवसीयते ।

एतैरित्थं प्रतिहतपरप्रैर्यपुञ्जैः प्रमाणैः
सिद्धं सन्तः सपदि सकलं वस्तु विज्ञप्तिमात्रम् ।
सर्वाः सम्प्रत्यखिलविदुषां तर्कगोष्ठीषु तस्मात्
मन्ये प्राप्ताः स्मरणपदवीं बाह्यभावप्रतिष्ठाः ॥ १४२ ॥

इत्थं बोधम्प्रति हि विमुखं किञ्चिदुच्चार्य बाह्यं
वस्तुद्वेष्टा कथयतितरां तात्त्विकं ज्ञप्तिमात्रम् ।
निन्दामज्ञस्तदनु तनुते सर्वविद्वत्सभानां
भोः प्रेक्षध्वं तदिदमसमं धाष्टर्यमेतस्य सभ्याः ॥ १४३ ॥

तथाहि ययोः सहोपलम्भ इत्यादावभेदः सतोः सदसतोर्वा सिषाधयिषितः । यदि सतोस्तदाप्यभेदः । किमैक्यमभिन्नजातीयत्वम्, भेदप्रतिषेधमात्रं वा विवक्षितं, आद्यपक्षे पक्षैकदेशस्यानुमानबाधा । तथाहि नीलधवलादिपरस्परविरुद्धाकारावगाहि चित्रज्ञानमनुभूयते, निर्विवादं च तदेकमेवेष्यते तद्विषयास्तु नीलधवलाद्याकाराः परस्परविरोधित्वाद्भिन्ना एवाभ्युपगन्तव्याः ।

एवं च यदेकं न तदनेकैरैक्यमनुभवति । यथा घटस्वरूपं पटशकटादिभिः । एकं च नीलधवलाद्याकारावगाहिचित्रज्ञानं तत्कथं नीलादिभिरनेकाकारैरैक्यमनुभवेत् । ज्ञानेन साकमैक्याभावे च तेषामर्थरूपतैवेति । सकलज्ञानार्थरूपपक्षान्तःपतितयोश्चित्रज्ञानतद्विषयनीलधवलाद्यर्थयोरैक्यासिद्धेः पक्षैकदेशस्यानुमानबाधा स्पष्टैव । तथा च विवादापन्नं ज्ञानमर्थात्पृथग् ज्ञानत्वान्नीलधवलाद्याकारगोचरैकचित्रज्ञानवदिति सर्वज्ञानानामर्थात्पृथक्त्वसिद्धेः पक्षस्याप्यनुमानबाधा ।

अथ बाह्यस्यैव विरुद्धधर्माध्यासाद्भेदस्तथात्वेऽपि तस्याभेदेऽर्थक्रियाणां चेतनप्रवृत्तीनां च सङ्करप्रसङ्गाद्विवेचनानुपपत्तिप्रसङ्गाच्च । न तु विज्ञा-

नस्य न हि तस्यार्थक्रियाधीनं सत्त्वमपि तु प्रतिभासमात्राधीनम्। नापि तत्रार्थक्रियार्थिनः काचित्प्रवृत्तिः, स्वरसवाहिविज्ञानप्रवाहातिरिक्ताया अर्थक्रियायास्तदर्थिनश्चाभावात्। विवेचनाभावश्चात्र परमो निर्वाहः स्वसंविदितरूपत्वादिति चेत्। तत्किमङ्ग परिणतशान्तेराश्रमपदमिव विज्ञानमासाद्य व्यालनकुलादीनामिव नीलधवलादीनां शाश्वतिकविरोधपरित्यागो निभृतविरोधानां तत्फलपरित्यागो वा। न तावत् प्रथमः पक्षः। परस्परनिषेधविधिनान्तरीयकयोर्विधिनिषेधयोर्विरोधोच्छेदप्रसङ्गात्। न चैवमस्त्वित्युत्तरेऽपि विरोधोच्छेदः। विधिनिषेधयोः परस्परनिषेधविधिनान्तरीयकतायाः कथमप्यनतिवृत्तेस्तावन्मात्रशरीरत्वाच्च विरोधस्य। तत्सिद्धिरेव च भेदसिद्धिः। अत एव च न द्वितीयो विकल्पः। यस्तु वाह्ये विरुद्धधर्माध्यासाद्भेदसाध्यसाधनाय तथात्वेऽपि तस्याभेदेऽर्थक्रियाणामित्यादिवाधकोपन्यासः कृतः। सोऽपि न पेशलः। यतो विरुद्धधर्माध्यासस्य भेदसाधकत्वे सिद्धे सत्यर्थक्रियाणां भेदसिद्धेस्तत्सङ्करप्रसङ्गो वाधकः सेत्स्यति तत्सङ्करप्रसङ्गे च बाधके सिद्धे सति विरुद्धधर्माध्यासस्य भेदसाधकत्वं सेत्स्यतीत्यन्योऽन्यसंश्रयो दोषः। अन्यच्च यथा वाह्येऽर्थक्रियासंकरः प्रसज्यत इति दण्डस्तथा ज्ञानेऽपि प्रतिभाससङ्करः प्रसज्यत इति दण्डः। ननु प्रतिभाससाङ्कर्यनियमोऽसिद्धो नीलपीतादेः सहापि क्वचित्प्रतिभासदर्शनादिति चेत्। ननु न सहाप्रतिभासमसाङ्कर्यं ब्रूमः। किन्तु नीलस्यैव पीतत्वेन पीतस्यैव नीलत्वेनाप्रतिभासं पररूपत्वेनाप्रतिभासम्। पररूपाप्रतिभास एव च मूलं सर्वविरोधानाम्। अन्यथोपलम्भानुपलम्भयोरप्यसाङ्कर्यस्यासिद्धिरेव। विशेषाभावात्। एतेन विवेचनाभावश्चात्र परमो निर्वाह इत्यपि निरस्तम्। आकारयोरसम्भेदेन वेदनस्यैव विवेचनत्वात्। अपि चार्थसंविदोः सह दर्शनमुपेत्यैकत्वैकान्तं साधयतोऽस्य दुर्निवारः स्ववचनविरोधावतारः। स्वोक्तस्य धर्म्मिभेदवचनस्य हेतुदृष्टान्तभेदवचनस्य चैकत्वैकान्तवचनेन विरोधात् एकत्वैकान्तवचनस्य च तद्भेदवचनेन

व्याघातः । तथा विज्ञानवादिनोऽप्रसिद्धविशेष्यत्वं प्रतिज्ञादोषः । नीलतद्धियोर्विशेष्ययोः स्वयमनिष्टेः । तस्मान्न सतोरैक्यमभेदः । नाप्यभिन्नजातीयत्वम् । तद्धि सर्वथा कथञ्चिद्वा स्यात् । न तावत्सर्वथा । तथात्वे हि तयोर्विततृष्णापनोदाय नदोदकमन्वेषयतस्तदनासादने नदोदकसंवेदनेऽपि दुर्निवारा प्रवृत्तिर्जनस्य । न चास्य तस्मिन्नन्तःस्थिते प्रवृत्तिः परिदृश्यते । बहिर्मुखमेव तस्याः सन्दर्शनात् । नापि कथञ्चित् । सिद्धसाध्यतापत्तेः । सत्त्वज्ञेयत्वादिभिर्ज्ञानार्थयोरभिन्नजातीयत्वस्यास्माकमभिप्रेतत्वात् । किञ्चाभिन्नजातीयत्वे ऐक्ये वा साध्ये विवक्षिते कथं सहोपलम्भनियमस्य व्यापकविरुद्धोपलब्धित्वं स्यादनुपलब्धीनां निषेधसाधकत्वेन समानत्वात् ।

भेदप्रतिषेधः सतोर्वा सदसतोर्वेति विकल्प्य खण्डनम् ।

अथ भेदप्रतिषेधमात्रं साध्योऽर्थः । सोऽप्यसाधीयान् । यदि हि सतोर्वस्तुद्वयस्य भेदो न भवेत्तत्र च द्विवचनोपादानमेव कथमुपपद्येत । नापि सदसतोरभेदः साध्यः । यतोऽसदिति सत्सदृशं किञ्चिदभिधीयते । सत्प्रतिषेधमात्रं वा । नाद्यः पक्षः । सत्सदृशस्य कस्यचिदसत्त्वात् । सद्रूपं हि विज्ञानमभ्युपगतं तत्सदृशं तु किं नाम विज्ञानमात्रवादिनः स्यात् । अथ सत्प्रतिषेधमात्रमसच्छब्दाभिधेयम् । तर्हि तस्य सतश्च परस्परमभेदसाधने ज्ञानाज्ञानाभावयोरप्यभेदसाधनप्रसक्त्या ज्ञानस्याप्यभावप्रसङ्गः । किञ्च ज्ञानं सदर्थश्चासन्निति भवतोऽत्राभिप्रायं अर्थस्य चासत्त्वमद्याप्यसिद्धमिति कथमसद्रूपस्यार्थस्य धर्मित्वम् । अथैकानेकस्वभावायोगादर्थस्यासत्त्वं सिद्धमेव । न चैकानेकस्वभावायोगोऽस्यासिद्धः । तथाहि यद्ययमेकरूपस्तर्हि प्रत्यासन्नदूरवर्त्तिनां स्पष्टास्पष्टप्रतिभासभेदो न भवेत् । अथानेकरूपस्तदा परमाणुशो भेदान्न कस्यचिदेकस्य स्पष्टत्वेनास्पष्टत्वेन वा स्थूलस्य प्रतिभासः स्यादिति चेत् । तर्हि तत एव ज्ञानमात्रवादस्याप्यसिद्धेः कृतं प्रकृतेन प्रकृतिश्यामलानम्रललनाकपोलस्थलोपकल्पितकश्मीरजपत्रभङ्गायमानेनानुमानेन । किं

च यद्यप्येकानेकस्वभावयोर्वस्त्वन्यभावस्तथाऽपि कथञ्चिदेकानेकात्मस्य स्वभावान्तरस्य तत्र सम्भवात्सत्त्वं न विरुद्ध्यते । तेनैव तस्य व्याप्तत्वात् । अथ सत्त्वं निरवयवत्वं च सावयवत्वेन प्रतिभासमानान्नीलादेः स्थूलाद्व्यावर्त्तमानं सत्त्वं निवर्त्तयतीति वर्ण्यते । ननु निरवयवं परमाणुपर्यन्तं तावन्नावभासते यत्पुनः कतिपयपरमाणुप्रचयात्मकं प्रतिभासते तत्सकलं सावयवं ततश्च यन्न प्रतिभाति तत्सत् यत्तु प्रतिभाति तदसदित्यतिशयशुचिवादवातूलब्राह्मणस्याशुचिलक्षणमिव तवापतितम् । विज्ञानं निरवयवं सदुपलब्धमिति चेत् । नैतदस्ति । विज्ञानस्यापि सप्रदेशादात्मनः कथञ्चिदभिन्नत्वेन निरवयवत्वासिद्धेः । तन्न सदसतोरप्यभेदः साधनीयः । प्रत्यक्षविरुद्धश्चात्रानुमाने पक्षः । तथाहि ज्ञानस्य विच्छिन्नार्थग्राहित्वेनानुभूयमानत्वादर्थज्ञानयोर्भेदमेव स्वसंवेदनप्रत्यक्षमुपस्थापयति । अथासत्य एव भेदोऽत्र परिस्फुरतीति कथमेतद्विरुद्धता पक्षस्य स्यात् । तदसत् । हेतोरनैकान्तिकत्वप्रसक्तेः । तथाहि भेदस्य ज्ञानेन सहोपलम्भनियमः समस्ति स चासौ ज्ञानादभिन्नः । भेदस्यासत्यस्य सत्येन ज्ञानेनाभेदायोगात् । भेदो न प्रतिभासत एवेति चेत् । एवं तर्हि विश्वजनप्रतीतिविरोधः स्पष्टः । ज्ञानार्थयोरभेद इति च स्ववचनविरोधः सहोपलम्भनियमहेतुत्वसिद्धिश्च । नहि भेदाप्रतिभासे सहार्थः कथमपि व्यवस्थापयितुं पार्यते । कथं च भेदाप्रतिभासे पक्षादिप्रविभागो भवेत् । कं च बोधयितुं प्रवृत्तोऽसि किमर्थं च अन्वयव्यतिरेकाप्रतीतौ किञ्च हेतोर्बलम् । कुतश्च विप्रतिपत्तिः कीदृशी वेति । विकल्पारूढ एव भेदो व्यवहाराङ्गं नानुभवारूढ इति चेत् । नन्वसावपि सत्योऽसत्यो वा तत्र प्रतिभासेते । आद्ये कल्पे कथमर्थप्रतिक्षेपः । द्वितीये तु हेतोरनैकान्तिकमुक्तमेव । असत्यपि भेदे तद्गोचरो व्यवहारो विकल्पेन जन्यत इति चेन्मैवम् । व्यवहारोऽपि यद्यज्ञान-

---

१ 'वस्तुन्यभाव' इति प. पुस्तके पाठः । २ 'प्रतिभासेत' इति प. पुस्तके पाठ ।

रूपः कथमसंस्तेन जन्यताम् । ज्ञानरूपश्चेत्कथं नियामकं विना तद्विषयः । स्वकारणसामर्थ्यादिति चेत् । सोऽयं व्यवहाररूपज्ञानालीकभेदयोर्नियामकान्तराभावेऽपि कारणसामर्थ्यमाश्रित्य विषयविषयिभावमिच्छति न त्वनुभवानुभाव्ययोरिति क्षीरं विहाय सौवीरे रतिररोचकग्रस्तस्य । विकल्पाकार एव भेद इति चेत् । यद्यसन्नेवासौ, कथं विकल्पाकारः तदाकारश्चेत्कथमसन्नेवेति परिभाव्यताम् । अस्तु तर्हि भेदः सन्नेवेति चेत् ।

विज्ञानमद्वयदर्शि आकारद्वयदर्शि वेति विचारः।

नन्वद्वयदर्शि चेद्विज्ञानं कथं भेदप्रथा । आकारद्वयदर्शि चेत् कथमेकं सत्तद्द्वयात्मकम् । चित्राकारमिति चेत् । चित्रमप्येकमनेकं वेति विकल्पगिलितमेव तव पश्यतः । आकाराणामनेकत्वे हि क्व नामैकविज्ञानतादात्म्यमेषाम् । विज्ञानस्यापि यावदाकारमनेकत्वे क्व चित्राकारसंवेदनम् । स्वस्वमात्रमग्नत्वात् । एकत्वे त्वाकाराणां क्व भेदप्रतीतिः स्यात् । निराकरिष्यते च सविस्तरं पुरस्ताच्चित्रज्ञानमिति । सहोपलम्भोऽपि किं युगपदुपलम्भः क्रमेणोपलम्भाभावः एकोपलम्भो वाऽभिमतो यस्य नियमो हेतुः स्यात् । यदि युगपदुपलम्भस्तदा बुद्धज्ञानेन व्यभिचारी हेतुः । तथाहि यद्बुद्धस्य ज्ञेयं सन्तानान्तरचित्तं तस्य बुद्धज्ञानस्य च सहोपलम्भनियमोऽस्ति । सन्तानान्तरचित्तोपलम्भमन्तरेण बुद्धज्ञानस्य कदाचिदनुपलम्भात् । न च तस्य तेन सहाभेदः । अत्र धर्मोत्तरानुसारी समाधत्ते । नायं व्यभिचारश्चतुरस्रः । बुद्धज्ञाने युगपदुपलम्भनियमस्यैवासम्भवात् । यो हि ज्ञानोपलम्भ एव ज्ञेयोपलम्भो ज्ञेयोपलम्भ एव ज्ञानोपलम्भः स युगपदुपलम्भनियमोऽभिधीयते । न चायमीदृशो बुद्धज्ञाने सम्भवति । पृथक् सन्तानान्तरैः स्वचित्तसंवेदनात् । तदेतदरमणीयम् । एवं पक्षैकदेशासिद्धताप्रसक्तेः । एकस्मिन्नहमहमिकया बहुभिरप्युपलभ्यमाने मृगाङ्कमण्डले यथोक्तरूपे युगपत्तदुपलम्भनियमस्यासम्भवात् । न खलु देवदत्तमृगाङ्कमण्डलज्ञाना-

पलम्भ एव मृगाङ्कमण्डलोपलम्भः । यज्ञदत्तादिमृगाङ्कमण्डलज्ञानोपलम्भस्यापि त्वन्मते मृगाङ्कमण्डलोपलम्भस्वभावत्वात् । अथ सर्व एव देवदत्तादयः स्वज्ञानांशमेव पश्यन्ति न पुनरेकं मृगाङ्कादिकं बहिर्वस्त्विति । तदेतत् कूर्प्परे गुडायितं[1] वर्त्तते । बाह्यार्थाभावस्याद्याप्यसिद्धेः । तत्सिद्धिर्हि सहोपलम्भनियमादेव अभिधीयते तत्र चेतरेतराश्रयत्वम् । प्रतिवाद्यसिद्धश्चायं हेतुः । न खलु य एव ज्ञानोपलम्भः स एव ज्ञेयोपलम्भो य एव च ज्ञेयोपलम्भः स एव ज्ञानोपलम्भ इति जैनानामभ्युपगमः । ज्ञानस्य कर्त्तुः स्वोपलम्भक्रियातः सकाशाद्बहिर्वस्तूपलम्भक्रिययोः कथञ्चिद्भिन्नत्वेन तैरभ्युपगमात् । एककर्तृकाणामपि हि क्रियाणां विषयभेदाद्भेदोऽवश्यमाश्रयणीयोऽपरथैकदेवदत्तविधीयमानतिलपाकतण्डुलपाकयोरप्यैक्यप्रसङ्गः[2] । एवं च ज्ञानोपलम्भस्य ज्ञानविषयत्वात् ज्ञेयोपलम्भस्य च ज्ञेयविषयत्वात् विषयभेदव्यवस्थितेस्तयोर्भेद एव स्वीकर्त्तव्यः । ज्ञानात्पृथग्भूतस्य ज्ञेयस्यासत्त्वात् विषयभेदोऽसिद्ध एवेति चेत् । न तथाभूतज्ञेयासत्त्वमनोरथमहाधुराया विवादपङ्कनिमग्ने सति सहोपलम्भनियमे केनापि वोढुमशक्यत्वात् । तन्न ज्ञानोपलम्भ एवेत्यादिधर्मोत्तरोक्तव्यभिचारपरिहारः पेशलः ।

सहोपलम्भस्य विस्तरशः खण्डनम् ।

अन्यस्त्वेवं व्यभिचारपरिहारमाह । यदि सुगतचित्तेन ज्ञेयचित्तानां ग्राह्यग्राहकभावो भवेत्तदा तत्र युगपदुपलम्भनियमसद्भावेऽप्यभेदाभावाद्भवेद्व्यभिचारो न चैवम् । सर्वावरणविलयेन ग्राह्यग्राहकाकारकलङ्कविकलत्वाद्भगवच्चित्तस्य । तदुक्तं “ **ग्राह्यं न तस्य ग्रहणं न तेन ज्ञानान्तरग्राह्यतयाऽपि शून्यम्** ” इति । तदसुन्दरम् । यदि हि सन्तानान्तरैः सुगतसंवेदनस्य ग्राह्यग्राहकभावो नास्ति तदा कथं तस्य सन्तानान्तरसंवित्तिः । को नामाभ्युपैति भगवतः सन्तानान्तरसंवेदनमिति चेत् । तर्हि कथ-

---

१ कूर्परे गुडाभावेऽपि गुडबुध्या लिहन्ति बालास्तद्वत् । २ ‘ एकत्वप्रसङ्ग ’ इति प. म. पुस्तकयोः पाठः ।

मस्यासता स्यात् । गलितसकलमलपटलत्वेनात्यन्तविशुद्धत्वादिति चेत् । ननु विशुद्धत्वमपि किं कुर्वदासतायां निमित्तम् । परार्थं सम्पादयदिति चेत् । कथं पराप्रतिपत्तौ तदर्थसम्पादनं नाम । तथापि तत्सम्पादने कौतस्कुतः प्रयोजनप्रतिनियमः । अचिन्त्यया तु शक्त्या कयाचित्तेन परप्रतिपत्तौ नीलादिरपि ग्राह्यग्राहकभावं विनैवास्मदादिभिस्तादृशशक्तिसद्भावात् ग्रहीष्यत इति स्वरूपासिद्धः सहोपलम्भनियमः सुगतस्यैवैतादृशशक्तिसद्भावो नास्मदादेरित्ययं तु शपथमात्रशरणानामुल्लापः । एतेन यदाह कमलशील: "सर्वार्थकारित्वात्तु सर्वज्ञ इष्यत " इति तदप्यपास्तमिति । नायमप्यनैकान्तिकत्वकुट्टनप्रकारः । यस्तु सर्वज्ञः सन्तानान्तरं वा नेष्यते तत्कथं व्यभिचार इति व्यभिचारपरिहारमाह । स केवलं विलक्षीभूतः प्रलपति । शून्यतावादस्यैवं प्रसङ्गात्तस्य च पुरस्तात्पराकरिष्यमाणत्वाद्विज्ञप्तिमात्राभ्युपगमविरोधाच्च ।

**तथा न ताथागत** तत्त्वतस्त्वया **तथागत**श्चेत्सकलज्ञ इष्यते ।
प्रमाणभूताय जगद्धितैषिणे इति स्फुटं तर्हि स संस्तुतः कथम् ॥१४४॥
**अद्वैतसिद्ध्यादिषु** संस्तुतोऽसौ **दिग्नागमुख्यै**रपि किं महद्भिः ।
मतिर्न तेषामसति स्तवाय प्रवर्त्तते यद्विलसद्विवेका ॥ १४५ ॥
विचार्य मुञ्चन्ति विपश्चितस्ते तमित्यदोषोऽयमुदीरितश्चेत् ।
नन्वस्य पश्चादपि हेयतायां युक्तं पुरैवेश्वरवत्प्रहाणम् ॥ १४६ ॥
संवेदनाद्वैतमथापि तत्त्वं तथातथा ते बत संस्तुवन्ति ।
अलीकमेतन्न यदस्ति तत्र श्रोतृस्तुतिस्तुत्यफलादिभावः ॥ १४७ ॥

कृत्तिकाभिश्च व्यभिचारः प्रकृतहेतौ । तथा हि तासु युगपदुपलम्भनियमोऽस्ति न चाभेदः तद्भेदस्य सर्वाविसंवादेन प्रसिद्धत्वात् ।

---

१ 'सुगतस्यैव तादृश' इति भ० पुस्तके पाठः । २ न्यायबिन्दुपूर्वपक्षसंक्षेपाख्याया न्यायबिन्दुटीकायाः प्रणेता कमलशीलो बौद्धाचार्यः । ऐशवीय ७५० समसमये प्रादुरभूत् । ३ अयमद्वैतसिद्धिग्रन्थो दिङ्नागप्रणीतो ग्राह्यो न तु मधुसूदनप्रणीतः मधुसूदनस्य वादिदेवसूरेः पश्चाद्भावित्वात् ।

यथा च विचारयतः कृत्तिकानां विवेकेनोपलम्भस्तथा ज्ञानार्थयोरपि। विरुद्धश्चायम्। ‘इमे मुनिमतल्लिके[1] सह समागते मद्गृहान्’ इत्यादौ युगपदर्थस्य सहशब्दस्य भेदे सत्येवोपलम्भात्। अथ मनुष्यैर्भ्रान्तैरभिन्नमपि बाह्यं ज्ञानाद्भेदेनावसीयते तदपेक्षया युगपदुपलम्भ इत्युच्यते द्विचन्द्रोपलम्भवत्। वस्तुस्थित्या त्वेकस्यैवोपलम्भ इति। तदसत्। भिन्नेनारोपिताकारेण वस्तुभूतस्याकारस्याभेदसाधनविरोधात्। न ह्यारोपितपीताकारेण शङ्खरूपस्याभेदः सम्भवति। तदानीमेव नरान्तरैस्तस्य श्वेताकारस्यैवोपलम्भात्। सिद्धे चाभेदे व्यवसायस्य भ्रान्तत्वं सिद्ध्येन्न चासावद्यापि सिद्धः। यत्तु **धर्मोत्तरः** प्राह। अनयोश्च यथाभावासङ्कल्पितभेदयोस्तात्त्विको भेदो नास्तीत्युच्यते ततः कल्पितभेदानिबन्धनः सहशब्दप्रयोग इति को विरोध इति। तदपि विकल्पारूढ एव भेदो व्यवहाराङ्गमित्याद्याशंक्य नन्वसावपि सत्योऽसत्यो वेत्यादिनाऽत्रैव तत्त्वतस्तिरस्कृतम्। क्रमेणोपलम्भाभावस्तु सहोपलम्भोऽसिद्धः क्रमोपलम्भाभावमात्रस्य तुच्छस्य वादिप्रतिवादिनोरप्रतीतत्वात्। किं च क्रमेणोपलम्भाभावमात्रादभेद एकत्वं साध्यते भेदाभावो वा नाद्यः पक्षः। भावाभावयोस्तादात्म्यतदुत्पत्तिलक्षणसम्बन्धाभावतो गम्यगमकभावायोगात्। द्वितीयविकल्पेऽप्यभावस्वभावत्वात्साध्यसाधनयोः सम्बन्धाभावान्न गम्यगमकभावस्तादात्म्यतदुत्पत्त्योर्वा भावस्वभावप्रतिनियमात् इष्टसिद्ध्यभावश्च। सिद्धेऽपि भेदप्रतिषेधे विज्ञप्तिमात्रस्येष्टस्यातोऽप्रसिद्धेर्भेदप्रतिषेधमात्रेऽस्य चरितार्थत्वात्।

एकोपलम्भरूपस्य सहोपलम्भस्य खण्डनम्।

अथैकोपलम्भः सहोपलम्भः। ननु किमेकत्वेनैवोपलम्भ एकोपलम्भः स्यादेकेनैव वा एकस्यैव वैकलोलीभावेनैव वा। आद्यपक्षेऽसिद्धता। द्वितीयपक्षेऽपि कस्यैकेनैवोपलम्भो नीलादेस्तदुपलम्भस्योभयस्य वा। तत्राद्यपक्षेऽसिद्धिः[2]। तथाहि जलाशयादिष्वनेकपुरुषदर्शनसाधा-

१ प्रशस्ता मुनी। मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवाचकान्यमूनीत्यमरोक्तेः। २ ‘वा’ इति प. पुस्तके नास्ति।

रणस्य नीलोत्पलादेर्नैकेनैवोपलम्भः । सर्वेषामेकार्थदर्शनात् । किं च यावदन्योपलम्भप्रतिषेधो न कृतस्तावन्नैकेनैवोपलम्भो नीलादेः सिद्ध्यति । न च परोपलम्भप्रतिषेधसम्भवः स्वभावविप्रकृष्टत्वात्परचित्तानां तेन सन्दिग्धासिद्धताऽपि । स्वज्ञानांशमेव सर्वे पश्यन्ति नत्वेकं बहिर्बहुसाधारणं नीलादीति त्वयापि स्वगृहमान्यम् । एवं च न नीलादेरेकेनैवोपलम्भः सिद्ध्यति । नापि तदुपलम्भस्य । यावन्तो हि प्रमातारस्तावन्त उपलम्भा नीलादेः । न च तेषामेकेनैवोपलम्भः प्रातिस्विकत्वात् । एतेन नीलतदुपलम्भयोरेकेनैवोपलम्भ इत्यप्रसिद्धमुक्तम् । अथैकस्यैवोपलम्भ एकोपलम्भः । नत्वेयमप्यसिद्ध एव । नीलं विलोकयामीति नीलतदुपलम्भयोरुभयोरप्युपलभ्यमानत्वात् । एतेनैकलोलीभावेनैवोपलम्भः सहोपलम्भनियमश्चित्रज्ञानाकारवदशक्यविवेचनत्वं साधनमसिद्धं प्रतिपत्तव्यम् । अन्तर्बहिर्देशस्थतया विवेकेन ज्ञानार्थयोः प्रतीतेः । पक्षचतुष्टयेऽपि वाऽस्मिन्नायमेकार्थः सहशब्दः सङ्गच्छते । तथाप्रतीतेरभावात् । परार्थेऽनुमाने वक्तुर्वचनगुणदोषाश्चिन्त्यन्ते इति हि न्यायमुद्रा । ततश्च । परं प्रतिपादयताऽनेन साङ्केतिकशब्दार्थवादिनापि नूनं प्रतिपदार्थकः शब्द उपादेयोऽन्यथा प्रतीतेरभावात् । लोके नायमेकार्थवाचकः क्वचिदपि विलोक्यते । सन्दिग्धविपक्षव्यावृत्तिकश्च सहोपलम्भनियमहेतुः । अभेदमन्तरेणापि तस्य सद्भावात् । ग्राह्यग्राहकभावप्रतिनियमकृतो हि सहोपलम्भनियमस्तथैव तयोः स्वहेतोः समुत्पादात् । एवं च ज्ञानेनात्मार्थश्च यथा गृह्यते तथाऽर्थेनाप्यात्मार्थश्च गृह्यतां भेदाविशेषादित्यप्रकाशनीयमेव । न हि ज्ञानव्यतिरेकेणान्यस्य कस्यचित् ग्राहकस्वभावत्वमस्ति । येन ज्ञानादन्येनार्थेनाप्यर्थस्यात्मनश्चोपलम्भो भवेत् । तस्मात्सहोपलम्भनियमश्च स्याद्भेदश्चेति हेतोरभेदेन व्याप्त्यसिद्धिः । तथा च स्वयमेव धर्म्मकीर्त्तिना लोकायत प्रत्युक्तं वार्त्तिके, " देहत-

१ 'नन्वयम्' इति प. म. पुस्तकयोः पाठः । २ धर्मकीर्तिप्रणीतः प्रमाणवार्तिककारिकाख्यो ग्रन्थोऽस्ति ।

द्धुद्ध्योर्विषयविषयितया सहोपलम्भो नाभेदात् " इति । तत्किं भवतो विस्मृतम् । न च वाह्याभ्युपगमेन तदुक्तमिति वाच्यम् । अयुक्तस्योपगमस्याप्यभिधाने आचार्यस्यानुचितवक्तृत्वप्राप्तेः । अधुनापि तु दोलाधिरूढस्य प्रामातुर्विद्यत एव तेन विषयविषयितयापि सहोपलम्भसम्भवाद्व्याप्तेरनिश्चयः । एवं च सन्दिग्धविपक्षव्यावृत्तिकत्वम् । तथाहि किमयं विषयविषयिभावात्सहोपलम्भनियमः स्यादुताभेदादिति । ननु कथं सन्दिग्धविपक्षव्यावृत्तिकत्वम् । विपक्षे वाधकप्रमाणस्य सद्भावात् । तथा च धर्म्मकीर्त्तिः " प्रतिवन्धकारणाभावात् " इति । राहुल एतद्व्याख्याति "प्रतिवन्ध एव कारणं तस्याभावात् " । एतदुक्तं भवति । प्रतिवन्ध एव तादात्म्यलक्षणो मिश्रितावभासस्य कारणं तदभावे कारणाभावात्सहोपलम्भनियमाभावः स्यात् । भेदे हि न कार्यकरणाभावव्यतिरेकेणापरः सम्वन्धस्तस्य च सहोपलम्भे निमित्तत्वे कुलालादिविवेकेन घटादयो न प्रतीयेरन् । एकसामग्र्यधीनत्वात्तन्निमित्तत्वे रसादिविवेकेन रूपादयो न प्रतीयेरन् । प्रतीयन्ते च । ततो न सम्वन्धान्तरप्रयुक्तं सहसंवेदनम् । अत एव प्रतिवन्धश्चासौ कारणं चेति प्रतिवन्धकारणं तस्य संवन्धिविशेषस्य सहवेदननिमित्तस्य तादात्म्यलक्षणस्याभावादित्यर्थः । तदेतदशोभनम् । ग्राह्यग्राहकभावस्यैव प्रतिवन्धस्य ज्ञानार्थयोः सहोपलम्भनियमकारणत्वोपपत्तेरुक्तत्वात् प्रतिवन्धकारणाभावादित्यस्यासिद्धत्वात् । अभिधास्यते च सविस्तरं पुरस्ताद्यथा न तादात्म्यतदुत्पत्ती पदार्थोपलम्भे निवन्धनमिति । दृष्टान्तोऽपि प्रकृतानुमाने साध्यशून्यः । द्वितीयचन्द्रमसि भ्रान्तज्ञानेन भिन्नतया समारोपितस्वरूपे सुधांशुना सहाभेदस्य साध्यस्यासंभवादिति । एवं च—

सहोपलम्भनियमादित्येतत्कीर्त्तिकीर्तितम् ॥
निकारं कमपि प्रापि प्रोक्तप्रोद्दलयुक्तितः ॥ १४८ ॥

---

१ ' सत्यसुधांशुना ' इति प. पुस्तके पाठः ।

यदपि प्रकाशन्ते भावा इत्यादि न्यगादि । तत्र स्वतः प्रकाशमानत्वं हेतुत्वेन विवक्षितं परतो वा । स्वतश्चेत्तर्हि प्रतिवादिनो हेतुरसिद्धः । न हि परनिरपेक्षप्रकाशाः कुम्भादयः कस्यचित्प्रसिद्धा अन्यत्र महामोहसन्तमससञ्चयसमाच्छादितविवेकप्रकाशाद्योगाचारात् ॥

प्रकाशमानत्वहेतोरपाकरणम् ।

अथ प्रकाशं परतोऽभ्युपैषि हेतोस्तदा स्यान्ननु वाद्यसिद्धिः ।
न जातु जीवन्नवलम्बते यद्विज्ञानवादी परतः प्रकाशम् ॥ १४९ ॥

विरुद्धतापि पक्षेऽस्मिन् साधनस्य विभाव्यते ।
भेदे सत्येव परतः प्रकाशस्योपपत्तितः ॥ १५० ॥

अथाभिधीयते हेतुः स्वत एव प्रकाशनम् ।
न चासिद्धः प्रकाशोऽथ परस्माज्जायते न यत् ॥ १५१ ॥

अर्थानां परतः प्रकाशनं न सम्भवतीति बौद्धमतस्य खण्डनम् ।

तथाहि परः प्रकाशयन् सम्बद्धोऽसम्बद्धो गृहीतोऽगृहीतो वा निर्व्यापारः सव्यापारो वा निराकारः साकारो वा भिन्नकालः समकालो वा पदार्थस्य प्रकाशकः स्यात् । न तावदसम्बद्धोऽतिप्रसङ्गात् सम्बद्धश्चेत्तादात्म्येन तदुत्पत्त्या वा । यदि तादात्म्येन, तर्हि विज्ञप्तिरूपतापत्त्या पदार्थानां सिद्धं ज्ञानाद्वैतम् । विज्ञप्तेर्वा जडरूपतापत्त्या विश्वस्याप्यन्धबधिरत्वप्रसक्तिः । अथ तदुत्पत्त्या, तर्हि ज्ञानादर्थः समुपजायेतार्थाद्वा ज्ञानम् । प्रथमपक्षेऽर्थस्य ज्ञानरूपतापत्तिर्ज्ञानादुपजायमानत्वादुत्तरज्ञानक्षणवत् । द्वितीयपक्षेऽपि समकालाद्भिन्नकालाद्वाऽर्थाज्ज्ञानमुपजायेत । न तावत्समकालात्, समसमयभाविनोर्वामेतरविषाणयोरिव कार्यकारणभावस्याभावात् । भावे वा ज्ञानस्याप्यर्थं प्रति कारणत्वप्रसक्तिरविशेषात् । भिन्नकालात्तु ततस्तदुपजनने ज्ञानस्याहेतुकत्वप्रसङ्गः । तत्कालेऽर्थस्या-

२ योगाचरः—बौद्धभेदः । यतो बौद्धाश्चतुर्भेदाः । वैभाषिकसौत्रान्तिकमाध्यमिकयोगाचार इति भेदचतुष्टयेन ।

सत्त्वात् । गृहीतश्चेत् प्रकाशकः परः किं स्वतः परतो वा । स्वतश्चेत्, स्वरूपमात्रप्रकाशनिमग्नत्वाद्बहिरर्थप्रकाशकत्वाभाव एव भवेत् । परतश्चेत्, अनवस्था । तस्यापि ज्ञानान्तरेण ग्रहणात्तथा चार्थग्रहणाभावः । अगृहीतश्चेत् प्रकाशकोऽतिप्रसङ्गः । निर्व्यापारश्चेदर्थस्यापि बोधं प्रति प्रकाशकत्वानुषङ्गः । सव्यापारश्चेदस्माद्व्यतिरिक्तो व्यतिरिक्तो वा व्यापारो भवेत् । आद्ये पक्षे बोधमात्रमेव नापरो व्यापारः कश्चित् । न चानयोरभेदो युक्तो, धर्म्मधर्म्मितया लोके भेदप्रतीतेः । द्वितीये तु संबन्धासिद्धिस्ततस्तस्योपकाराभावात् । उपकारे चाऽनवस्था । तन्निर्वर्त्तितव्यापारस्य परव्यापारकल्पनानुषङ्गात् । निराकारश्चेदतः प्रतिकर्म्मव्यवस्था न स्यात् । साकारश्चेद्बाह्यार्थपरिकल्पनानर्थक्यम् । नीलाद्याकारेण बोधेनैव पर्याप्तत्वात् । भिन्नकालश्चेत् । स्वकालेऽविद्यमानस्यार्थस्य ज्ञानेन प्रकाशे सकलप्राणिनामशेषज्ञत्वप्रसङ्गः । समकालश्चेत्तर्हि यथा ज्ञानमर्थस्य ग्राहकमेवमर्थोऽपि ज्ञानस्य ग्राहकः स्यात्समसमयभावित्वाविशेषात् । अथार्थे ग्राह्यताप्रतीतेः स एव ग्राह्यो न ज्ञानमित्युच्यते । तन्न । तद्व्यतिरेकेणास्याः प्रतीत्यभावात् । स्वरूपस्य च ग्राह्यत्वे ज्ञानेऽपि तदस्तीति तत्रापि ग्राह्यता भवेत् । अथ जडत्वान्नार्थो ज्ञानस्य ग्राहकः । ननु कुतो जडत्वसिद्धिः । तदग्राहकत्वाचेत् अन्योन्याश्रयः । सिद्धे हि जडत्वे तदग्राहकत्वसिद्धिस्ततश्च जडत्वसिद्धिरिति ।

कृतमनल्पविकल्पकदम्बकं प्रतिहतं परतः प्रतिभासनम् ।
सकलवस्तुगणस्य ततोऽपि न प्रफलितैव मनोरथमञ्जरी ॥१५२॥

अत्रोच्यते—

स्वीयकदाशयमात्रसमुत्थाः कर्त्तुमिमे भवदीयविकल्पाः ।
साधु वयस्य विचिन्तय शक्ताः किं परतः प्रतिभासनिरासम् ॥१५३॥

---

१ 'अर्थार्थे' इति म. पुस्तके पाठः । २ 'साध्य' इति म. पुस्तके पाठः।

तथाह्यसम्बद्धागृहीतनिर्व्यापारसाकारपक्षेष्वनभ्युपगतोपालम्भेन केवलं कण्ठक्लेशमनुभूतवानसि । सम्बद्धादिपक्षास्त्वनवद्यकुक्षयः । संबन्धो हि योग्यतास्वभाव एव ज्ञानार्थयोर्ग्राह्यग्राहकभावाङ्गं न तु तादात्म्यादि । ज्ञानं हि स्वसामग्रीप्रतिनियमात्प्रतिनियतार्थसंवेदनयोग्यमेवोपजायते । अर्थोऽपि स्वसामग्रीविशेषादेव प्रतिनियतसंवेदनवेदनावेद्यतायोग्य एव समुत्पद्यत इति । गृहीतपक्षेऽपि यदुक्तं स्वतः परतो वेत्यादि । तत्र स्वत एवेति ब्रूमः । न च स्वतोऽस्य ग्रहणे स्वरूपमात्रप्रकाशनिमग्नत्वाद्बहिरर्थप्रकाशकत्वाभावः । विज्ञानस्य प्रदीपवत् स्वपरप्रकाशकस्वभावत्वात् । सव्यापारकल्पेऽपि व्यतिरिक्तविकल्पानवकाशः । स्वपरप्रकाशकस्वभावत्वव्यतिरेकेण ज्ञानस्य स्वपरप्रकाशनेऽपरव्यापाराभावात् । तस्य च ज्ञानात्कथञ्चिदव्यतिरिक्तत्वात् । यथा च तत्र विरोधादिकुनोद्यानामनवकाशस्तथा यतिष्यते । निराकारपक्षेऽपि भवदभिमतसाकारवादप्रतिक्षेपेण निराकारादेव प्रत्ययाद्यथा प्रतिकर्मव्यवस्था तथा प्रतिपादयिष्यते । एवं च "**धियो नीलादिरूपत्वे बाह्योऽर्थः किंनिबन्धनः । धियोऽनीलादिरूपत्वे बाह्योऽर्थः किंनिबन्धनः**" ॥ इति यदुच्यते । तदप्ययुक्तम् । भिन्नकालप्रकाशकपक्षेऽपि यदवादि स्वकालेऽविद्यमानस्यार्थस्य ज्ञाने प्रकाशे सकलप्राणिनामशेषज्ञत्वप्रसङ्ग इति । तदप्यसङ्गतम् । भिन्नकालस्यापि योग्यस्यैवार्थस्य ज्ञानेन ग्रहणात् । दृश्यते हि पूर्वचरादिलिङ्गप्रभवप्रत्ययाद्भिन्नकालस्यापि प्रतिनियतस्यैव शकटोदयाद्यर्थस्य ग्रहणम् । किं चैवंवादिनस्ते कथं भिन्नकालं किञ्चिदपि लिङ्गं साध्यस्यानुमापकं स्यात् । अनुमापकत्वे वा किञ्चिदेकमेव भस्मादिलिङ्गमतीतस्य पावकादेरिव समस्तस्याप्यतीतानागतानुमेयस्य प्रतिपत्तिहेतुः स्याद्भिन्नकालत्वाविशेषापि किञ्चिदेव लिङ्गं कस्यचिदेवार्थस्यानुमापकमित्यदोषोऽयम् ।

---

१ 'वेदना' इति प्र. पुस्तके नास्ति । २ 'विशेषात् । अथ भिन्नकालत्वाविशेषे' इति प. म. पुस्तकयोः पाठः ।

नन्वेवं तदविशेषेऽपि किंचिदेव ज्ञानं कस्यचिदेवार्थस्य ग्राहकं किं नेष्यते। समकालविकल्पेऽपि न कश्चित् कलङ्कः। ननूक्तं तत्र।

अयि सितादिनि वस्तुनि धीर्यथा प्रवरिवर्त्ति परिग्रहणोत्सुका।
किमु मतौ न तथा तव वस्त्वपि प्रवरिवर्त्ति परिग्रहणोत्सुकम्॥१५४॥

अत्रोच्यते—

ननु यथा सहसा महसां पतिः प्रकटयत्यखिलं भुवनोदरम्।
न तथैव न किं कलशोऽप्यदः प्रकटयत्यखिलं भुवनोदरम्॥१५५॥

अथ भवान् कथयेत्कलशार्कयोरतिशयेन विलक्षणरूपताम्।
वदति किं न तथा ग्रहणार्थयोरतिशयेन विलक्षणरूपताम्॥१५६॥

किंच स्वकारणप्रतिनियमादर्थ एव ग्राह्यो ज्ञानमेव च ग्राहकमिति समकालत्वेऽपि तयोः कथं ग्राह्यग्राहकभावव्यत्ययः स्यात्। स्वकारणक्षणान्यपि कथमर्थमेव ग्राह्यं ज्ञानमेव च ग्राहकं जनयतीति तु पर्यनुयोगे स्वभाव एवोत्तरम्। न च स्वभावः पर्यनुयोगभूमिः।

अणुमपि गुणमेव वीक्षते सुजनः सत्यपि दोषडम्बरे॥
तद्विपरीतस्तु दुर्जनः कुरुतां पर्यनुयोगमत्र कः॥ १५७॥

नीलाद्याकाराणां यथा बुद्धिर्व्यापिका तथा नीलादयः किं नास्या व्यापकाः। नियतानां चैषां यथाऽसौ व्यापिका तथा सर्वेषामेव विश्ववर्त्तिनामाकाराणां किं न व्यापिकेति प्रेर्येत। तवापि स्वभावभेदादपरं किं नामोत्तरम्। यदि चार्थे ग्राह्यताप्रतीतेः स एव ग्राह्यो न ज्ञानम्। यत्पुनरत्रोक्तं तद्व्यतिरेकेणास्याः प्रतीत्यभावादिति। तन्न। तद्व्यतिरेकेणास्याः प्रतीत्यभावासिद्धेः। ज्ञानग्रहणयोग्यतालक्षणस्य कथञ्चिद्व्यतिरिक्तस्य ग्राह्यताख्यस्य धर्मस्यार्थेषु प्रतीतिसिद्धत्वात्। जडत्वादपि नार्थो ज्ञानस्य ग्राहकः। यस्तु तत्रेतरेतराश्रयः समुदीरितः। स न सङ्गतः। ज्ञानग्राहकत्वेन तस्यास्माभिर्जडत्वाप्रसाधनात्। स्वभावादेव वस्तूनां जडत्वेनाजडत्वेन च व्यवस्थित-

त्वात् । ननु यया प्रत्यासत्त्या ज्ञानमात्मानं विषयीक्रोति तयैव चेदर्थं तर्हि तयोरैक्यम् । न ह्येकस्वभाववेद्यमानकं भिन्नं युक्तम् । ऐक्यस्य सर्वथाप्यभावप्रसङ्गात् । अथान्यया, तर्हि स्वभावद्वयापत्तिर्ज्ञानस्य भवेत् । तदपि स्वभावद्वयं यद्यपरेण स्वभावद्वयेनाधिगच्छति । तदाऽनवस्था । तद्वेदनेऽप्यपरस्वभावद्वयापेक्षणात् । ततः स्वरूपमात्रग्राह्येव ज्ञानं नार्थग्राहीत्यकामेनापि स्वीकर्त्तव्यमिति चेत् । तदरमणीयम् । स्वार्थग्रहणोभयस्वभावत्वाद्विज्ञानस्य यथा तत्र नाभिहितदोषानुषङ्गस्तथा स्वसंवेदनसिद्धावभिधास्यते । कथं चैवंवादिनो रूपादेर्लिङ्गस्य वा सजातीयेतरकर्तृत्वम् । तवाप्यस्य पर्यनुयोगस्य समानत्वात् । तथाहि रूपादिकं लिङ्गं वा यया प्रत्यासत्त्या सजातीयक्षणं जनयति तयैव चेद्रसादिकमनुमानं वा । तर्हि तयोरैक्यमित्यन्यतरदेव स्यात् । अथान्यया तर्हि रूपादेरेकस्य स्वभावद्वयमायातं तत्र चानवस्था । परापरस्वभावद्वयपरिकल्पनात् । न खलु येन स्वभावेन रूपादिकमेकां शक्तिं बिभर्त्ति तेनैवापराम् । तयोरैक्यप्रसङ्गात् । अथ रूपादिकमेकस्वभावमपि भिन्नस्वभावं कार्यद्वयं कुर्यात्तत्करणैकस्वभावत्वात् । तर्हि ज्ञानमप्येकस्वभावं स्वार्थयोर्ग्राहकमस्तु तद्ग्रहणैकस्वभावत्वात् । ननु व्यवहारेण कार्यकारणभावो न परमार्थतस्तेनायमदोष इति चेत् । तर्हि व्यवहारेणैवाहमहमिकया प्रतीयमानेन ज्ञानेन नीलादेरर्थस्य ग्रहणसिद्धिरित्यपि स्वीक्रियताम् । न चैवं परमार्थतो नार्थसिद्धिरिति वाच्यम् । व्यवहारस्यापि प्रमाणमन्तरेणानुपपत्तेरिति यद्व्यवहारसिद्धिः तत्पारमार्थिकमेव । न खलु निखिलोपाख्याविकलं वन्ध्यास्तनन्धयादिव्यवहारेणापि सद्रूपतया साधयितुं केनापि शक्यत इति चेष्टोत्तरमात्रमेतत्तथागतानां व्यवहारेण कार्यकारणभावो न परमार्थत इति । यदप्युच्यते । जडस्य प्रतिभासायोगादिति । तत्राप्यप्रतिपन्नस्यास्य प्रतिभासायोगः प्रतिपन्नस्य वा । न तावदप्रतिपन्नस्यासौ प्रत्येतुं शक्यः । अन्यथा सन्तानान्तरस्याप्रतिपन्नस्य स्वप्रतिभासायोगप्रसिद्धेस्तस्याप्यभावः स्या-

तथा च तत्प्रतिपादनार्थं प्रकृतहेतूपन्यासो व्यर्थः । अथ सन्तानान्तरं स्वस्य प्रतिभासयोगं स्वयमेव प्रतिपद्यते । जडस्यापि प्रतिभासयोगं तत्प्रत्येतीति किं नेष्यते । प्रतीतेरुभयत्रापि समानत्वात् । अथाप्रतिपन्नेऽपि जडे विचारात्तदयोगः । ननु तेनाप्यस्याविषयीकरणे प्रतिभासायोगप्रतिपत्तिविरोधः । विचारस्तत्र न प्रवर्त्तते तत एवं च कथं तदयोगप्रतिपत्तिः स्यादिति । विषयीकरणे वा विचारवत्प्रत्यक्षादिनाप्यस्य विषयीकरणात् प्रतिभासयोगोऽसिद्धः । न च प्रतिपन्नस्य जडस्य प्रतिभासायोगप्रतिपत्तिरित्यभिधातव्यम् । जडस्य प्रतीतिः प्रतिभासायोगश्चास्येत्यन्योन्यं विरोधात् । किं च जडस्य प्रतिभासायोगादिति यदि प्रतिभासात्मत्वाभावसाधनायोच्यते । तदा सिद्धसाधनम् । जडस्य प्रतिभासाद्भिन्नस्वभावतयाऽस्माभिरप्यभ्युपगमात् । अथ प्रतिभाससंसर्गाभावसाधनाय तन्निरुपपत्तिकम् । हेतोः साध्याविशिष्टत्वात् । न च जडस्य प्रतिभाससंसर्गेण न भवितव्यमित्यस्ति राज्ञामाज्ञा । यथा हि च्छिदिक्रिया छेद्येन सम्बध्यते भिद्यते च । तथा ज्ञानक्रियापि ज्ञेयेन सह सम्भन्त्स्यते भेत्स्यते च । तस्मादित्थं पदार्थानां परतः प्रकाशस्यैव योगात् कथं स्वतः प्रकाशः सिद्धयेत् । ननु ज्ञानातिरिक्तस्यार्थस्य प्रसाधकप्रमाणाभावोऽस्माकं ततोऽपि परतः प्रकाशस्यानिश्चयस्त्वयाप्यर्थाभावाविर्भावकं प्रमाणमनुपदर्शयता प्रसाधकप्रमाणाभावभाषणमात्रेण न परतः प्रकाशः उत्पुंसयितुं शक्यते । न च यावदयमेकान्तेन निर्भर्त्सितस्तावत् स्वतः प्रकाशोऽपि सर्वथा सिद्धयति । तस्मात्सन्दिग्धासिद्धोऽप्येवमयम् । न च प्रकाशमानत्वमेवार्थाभावसाधनोद्धुरमित्यभिधेयम् । अस्याद्यापि विप्रतिपत्तिभूरिभरावष्टम्भत्वेन किञ्चिदपि कर्त्तुमशक्तत्वात् । अस्ति चास्माकमर्थोपस्थापनसमर्थं प्रत्यक्षमेव प्रमाणम् । तथाहि ।

---

१ सन्दिग्धासिद्धः—धूमबाष्पादिविवेकानिश्चये कश्चिदाह वह्निमानयं प्रदेशः धूमवत्त्वात् इति ।

अन्तर्मुखाकारतयैव बुद्धिर्विभासमाना निखिलासुभाजाम् ।
नीलादिकं वस्तु बहिःप्रतिष्ठं प्रकाशयत्यस्तसमस्तबाधा ॥ १५८ ॥

अथापि मोहोदयतः स्फुरन्तं प्रत्यक्षबोधेऽपि बहिः पदार्थम् ।
न मन्यसे हन्त तदा कथं नु विज्ञप्तिरप्यत्र तव प्रसिद्ध्येत् ॥ १५९ ॥

तदप्रसिद्धौ च तवापि तत्त्वं समागतं सम्प्रति शून्यमेव ।
तदप्यथ स्वीकुरुषे तदानीं तद्दूषणं श्रोष्यसि मा त्वरिष्ठाः ॥ १६० ॥

तन्न प्रकाशमानत्वं हेतुः सङ्गतः । सुखादिकमिति दृष्टान्तोऽपि साध्यविकलः, सुखादेरेकान्तेन ज्ञानरूपत्वस्य प्रतिषेत्स्यमानत्वात् । तन्न प्रकाशतामुनापि माननीया मनीषिणाम् ।

वेद्यत्वहेतोः खण्डनम् ।

यत्तु यद्वेद्यते वेदनेनेत्यादि समावेदि । तत्र वेदनार्थयोर्भेदस्य प्रत्यक्षप्रतिपन्नत्वात्प्रत्यक्षप्रबाधितत्वं प्रतिज्ञादोषः । तथा किं यद्वेद्यत इति कर्म्मणि प्रयोगाद्वेदनकर्तृकविदिक्रियारूपं वेदनकर्म्मत्वं वेद्यत्वं हेतुरिष्यते । किं वा यद्वेद्यत इति यच्छब्दस्य वेदनक्रियया सामानाधिकरण्ये भावनिर्देशाद्विदिक्रियारूपवेदनस्वभावत्वम् । अत्र च विकल्पेऽयं प्रमाणार्थः । नीलादयो वेदनादभिन्नाः वेदनकर्तृकवेदनाक्रियारूपत्वाद्वेदनस्वरूपवदिति । आद्यपक्षे विरुद्धो हेतुः कर्तृकर्म्मभावस्य भेदेनैव व्याप्तत्वात् । नन्वेवं त्वन्मतेऽपि वेदनस्यात्मानं वेदयमानस्य कथमेकस्यैव कर्तृत्वं कर्मत्वं च चतुरस्रं स्यादिति चेत् । न तस्य सर्वथैक्यासिद्धेः । अन्यो हि वेदनस्य कर्त्रंशोऽन्यश्च कर्म्मांश इति । किं च यदि वेदनादर्थस्याभेदस्तदा वेदनमेव स्यान्नार्थस्तस्य तत्रैवानुप्रतिष्ठितत्वादिति कस्य कर्म्मत्वम् । तथा च वेद्यत्वादित्यसिद्धो हेतुः । वेदनस्वरूपस्य च दृष्टान्तस्य साधनविकलत्वम् । वेदनादभिन्ने तस्मिन् भेदव्याप्यस्य वेदनकर्म्मत्वस्य साधनस्य त्वन्मतेनासम्भवादिति । द्वितीयपक्षे तु प्रतिवाद्यसिद्धः । वेदन॰क्रियातः । पार्थक्येनार्थानां परैरभ्युपगमात् । विरुद्धश्चायम् । क्रिया-

कर्तृभावस्य भेदाविनाभावित्वेन विदिक्रियावेदनकर्त्रोरभेदविरुद्धभेदस्य साधनात् । साधनविकलश्चात्राऽपि पक्षे दृष्टान्तः । वेदनाख्ये कर्त्तरि तत्स्वरूपमात्रस्य क्रियात्वासिद्धेः । अपि च यदि वेदनस्वभाव एव नीलादिरर्थः स्यात्तदेक एव कश्चित्तं प्रतीयात्तद्वेदनकस्वभावत्वान्न पुनरपरे प्रमातारः । प्रतीयते चाऽयं बहुभिरेकः । सर्वेषां तदाभिमुख्येन युगपत्प्रवृत्तौ यस्त्वया दृष्टः स मयापीति प्रतिसन्धानात् । कथं ज्ञानरूपत्वे नीलादेः सप्रतिरूपता[1] स्यात् । बहीरूपतया तस्याः प्रतिभासात् ज्ञानस्य चान्तारूपतया प्रतीतेः । यच्च भेदे नियमहेतोः सम्बन्धस्य व्यापकस्यानुपलब्ध्या भेदाद्विपक्षाद्व्यावर्त्तमानं वेद्यत्वमभेदेन व्याप्यत इत्युक्तम् । तदप्ययुक्तम् । सम्बन्धानुपलब्धेरसिद्धत्वात् । भेदेऽपि योग्यतारूपस्य नियमहेतोः सम्बन्धस्य दर्शितत्वात् । यच्चार्थाकारो ग्राह्यत्वेन प्रतीयत इत्याद्याशङ्क्य परमार्थतो धीर्यद्ग्राहकग्राह्यतया विमुक्तेत्यवाचि । तदप्यचारु । यतो यदि तत्त्वतो ज्ञाने ग्राह्यत्वं ग्राहकत्वं च नास्त्येवेति अभिधीयते । तर्हि किमपरमवशिष्टं यदस्य स्वरूपं स्यात् । न हि ग्राह्यग्राहकाकारविविक्तमपरं रूपमर्वाग्दर्शनैः साक्षात्क्रियते । साक्षात्करणे वा त्वन्नीत्या तत्त्वदर्शित्वं स्यात्तथा चायत्नमुक्ताः सकलशरीरिणः स्युः । नाप्यनुमानात्तस्या निश्चयः । अद्वयरूपे तत्त्वे वस्तुभूतस्याभावभूतस्य वा कस्यचिल्लिङ्गस्यासिद्धेः । स्यादेतन्न ग्राहकशब्देनान्तर्बोधरूपं स्वसंविदितमुच्यते येन तस्याप्यभावः स्यात्किन्तु यदेतद्विज्ञानाद्बहिरिव नीलादि भासते तस्यैकानेकविचाराक्षमत्वेनासत्त्वान्न ज्ञानव्यतिरिक्तं परमार्थतो ग्राह्यमस्ति । तदभावाच्च तदपेक्षाप्रकल्पितं बोधरूपस्य यत्कर्तृरूपमस्य ग्राह्यस्यायं ग्राहक इति तदिह ग्राहकं रूपं तन्नास्तीत्युच्यते । कर्तृकर्मणोः परस्परापेक्षाप्रकल्पितत्वात् । अत एवोक्तम् । परस्परापेक्षया तयोर्व्यवस्थानादिति । बोधरूपं तु स्वसंवेदनमात्रमस्त्येव । तस्य परानपेक्षत्वे-

---

१ 'सप्रतिघानिरूपता' इति प. पुस्तके पाठः ।

नापरिकल्पितत्वात् । स्वहेतोरेव स च तथोत्पन्नत्वात् । तदेव बोधरूपं स्वसंवेदनमात्रे स्थितं यथोक्तेन ग्राह्यग्राहकद्वयेन रहितत्वादद्वयमित्युच्यते । तथा चोक्तम् ॥ " नीलपीतादि यज्ज्ञानाद्बहिर्यदवभासते । तन्न सत्यमतो नास्ति विज्ञेयं तत्त्वतो बहिः ॥१॥ तदपेक्षया च संवित्तेर्मता या कर्त्तृरूपता । साप्यतत्त्वमतः संविदद्वयेति विभाव्यते ॥२॥ " इति । एतदप्यसत् । नीलादावेकानेकविचाराक्षमत्वस्यासिद्धत्वात् । जात्यन्तरत्वेन तस्यैकानेकात्मकत्वात् । तथा च ज्ञानातिरिक्तग्राह्याभावोऽसिद्धः । अद्वयस्य स्वप्नेऽप्यननुभूयमानत्वाच्च । अनुभवे वा सर्वेषां तत्त्वदर्शनापत्त्या त्वन्नीतितोऽयत्नमुक्तिः स्यादित्युक्तम् । अथाभिधीयेताद्वयमेव बोधरूपं स्वसंवेदनसिद्धं, नैव सर्वेषां तत्त्वदर्शनप्रसक्तिः । यतो गृहीतेऽपि तस्मिन्निरंशत्वाद्वये बोधरूपे भ्रान्तिबीजानुगमनान्न यथाबोधमद्वयावसायो जायते । ततो गृहीतमपि तदगृहीतकल्पमित्यननुभूतिर्न तत्त्वत इति । नैतदेवम् । अद्वयतत्त्वस्य कदाचिदननुभूयमानत्वात् । तथाध्यवसायस्य कदाचिदनुदयात् । तदाप्यद्वयकल्पनेऽतिप्रसक्तिः । नीलाद्याकारबोधादप्यन्यरूप एव बोधोऽनुभूयते नीलादिभ्रान्तिबीजानुगमात्तु न यथाबोधमवसीयत इत्यपि वक्तुं शक्यत्वात् । किञ्चैवं परिकल्पिताद्वयरूपत्वेऽपि ज्ञानस्य तत्त्वतो ग्राह्यग्राहकत्वासिद्धिरेव । स्वात्मसंवेदनेन विज्ञानस्य कर्त्तृकर्म्मभावोपपत्तेरन्यथा स्वात्मसंवेदनायोगात् । न ह्यात्मनात्मनो वेदनाभावे स्वसंवेदनं नाम । नन्वेवं स्वात्मनि क्रियाविरोधः । इति चेत् । तथैवानुभवात्को नाम विरोधः । विरोधे तु कथं कर्त्तृकर्म्मभावस्तस्य स्यात् । अथ माभूदयमपसरत्वौषधं विनैव व्याधिरिति चेत् । फलोदये मनोरथस्ते यदि समुद्रान्तर्भग्ननिर्भरभृतयानपात्रस्वामीव मूलनाशेन न दुःस्थः स्याः, कर्त्तृकर्मभावाभावे हि विज्ञानस्याप्यननुभवादभाव एव च भवेत् । स्वहेतोरेव स्वसंवेदनस्वभावं तदिति चेत्, किमनेनान्वयनिवेदनेन । सर्वथा

चेत् ग्राह्यत्वग्राहकत्वाभ्यां न ज्ञानस्य कर्तृकर्मभावस्तदा नास्य स्वरूपसंवेदितत्वमिति शक्रस्यापि दुरतिक्रमम् । सति च स्वसंविदितत्वे नियमात्स्वभाववैचित्र्येण कर्तृकर्मभाव इति । एतेन यदप्युच्यते गगनतलवर्त्यालोकवदकर्म्मकत्वं स्वयमेवैतत् प्रकाशत इत्यादि । तदपि प्रतिक्षिप्तम् । यत प्रकाशमानं तद्बोधरूपं न चाबुद्ध्यमानस्य बोधरूपता सङ्गतेत्यात्मबोधोऽभ्युपेयस्तथा च सत्युक्तदोषानतिवृत्ति । एवमपरोक्षस्वभावमित्याद्युक्तावपि स्वप्रत्यक्षस्वभावमित्यादिशब्दार्थापत्तित उक्तदोषानतिवृत्तिरेव । तस्मात्पारमार्थिकमस्त्येव ज्ञाने ग्राह्यत्वं ग्राहकत्वं चेति ।

प्रतीतिव्यवस्थानादिवासनासामर्थ्यादेवोपपद्यत इति बौद्धमतस्य खण्डनम् ।

यत्तु तथाप्रतीतिव्यवस्था पुनरनादिवासनासामर्थ्यादेवोपपद्यत इत्यवादि । तदपि नावदातम् । यतो वासनेयमवस्तु वस्तु वा । यद्यवस्तु, तर्ह्यवस्तुनः सकाशादेव प्रतीतिरिति रिक्ता वाचोयुक्तिः । अथ वस्तु, एवमपि ज्ञानादव्यतिरिक्ता व्यतिरिक्ता वा सा स्यात् । आद्यभेदेऽस्याः कथं यथोक्तप्रतीतिव्यवस्थानिबन्धनत्वमुपपद्यते । उपपत्तौ वा न कदाचिदभ्रान्तता बोधस्य स्यात् । ज्ञानाद्व्यतिरेके वा संज्ञाते भेदमात्र भवेदर्थो वासनेति । एतेन धर्मोत्तरेण यदभिदधे, "तस्मादविद्याशक्तियुक्तं ज्ञानमसत्यरूपमादर्शयतीत्यविद्यावशात् प्रकाशत इत्युच्यत इत्यनवद्यम्" इति । तदप्यविद्याशक्तेर्ज्ञानाद्भेदाभेदपक्षाभ्यां विचार्यमाणाया अयुज्यमानत्वान्निरस्तमवसेयम् । यच्च ननु ज्ञानेन नीलाद्याकारस्येत्याद्याशंक्य वासनासामर्थ्यादेवेत्याद्यभिदधे । तदप्यसाधु । वासनाया निराकृतत्वात् । तस्मान्न बाह्याभावे ज्ञाने नीलाद्याकारोऽपि घटते । ननु स्वापादिदशाया बहिरर्थरूपनिमित्ताभावेऽपि नीलाद्याकारभ्रान्तिरुल्लसतीत्युक्तम् । उक्तमेतत्किन्त्वयुक्तम् । तत्रापि परम्परया बाह्यार्थस्य व्यापारात् । न ह्यननुभूतेऽर्थे स्वप्नः कदाचित्किञ्चिदुत्पद्यते । अथाननु-

१ 'च' इति प. पुस्तके पाठः ।

भूतेऽपि। स्वशिरश्छेदादौ स्वप्नदशाया ज्ञानमुत्पद्यत एवेत्युच्यते। तदप्यचारु। तत्रापि हि परशिरश्छेदो दृष्टः स्वशरीरं चानुभूतमतो दोषवशात्तु विवेकमपश्यन्नात्मशरीरे परशिरश्च्छेदमभिमन्यते। ततस्तत्राप्यनुभूतो बाह्यार्थ एव निमित्तम्। न ह्यननुभूतपरशिरश्छेदस्य तदपि संवेदनमुदयते। गन्धर्वनगरज्ञानेऽपि हि बहिर्वर्त्तिनः परमार्थतः सन्तः पाथोदा एवान्याकारतया कुतोऽपि भ्रान्तिनिबन्धनात् प्रतिभासन्ते। ततस्तदपि नानिमित्तम् बाह्यार्थापलापे च कथं प्रतिनियतदेशकालप्रमातृनिष्ठत्वेन रूपादिसंवेदनमुत्पद्येत। नियामकबाह्यार्थविरहेण सर्वत्र सर्वदा सर्वेषामनियमेनैव तत्प्रसक्तेः। कथं वा तत्रैव प्रदेशे तदवस्थस्य तस्यैव प्रमातुः कदाचिदुपाजयेत कदाचिन्न। कथं वा तिमिरान्तरितनयनस्यैव प्रमातुः सन्ताने व्योम्नि कुन्तलकलापालोकनं न पुनरितरेषाम्। कथं वा समानेऽप्यर्थाभावे तैमिरिकोपलब्धैरेव कुन्तलैः कार्यं न क्रियते न त्वन्यैः। कथं वा जातिनियमसिद्धिः। बोधमात्रे हि विश्वे नियमकारणाभावात्कुरङ्गोऽपि तुरङ्गस्तुरङ्गोऽपि कुरङ्गः कलभोऽपि शलभः शलभोऽपि कलभः करभोऽपि शरभः शरभोऽपि करभः स्यात्। बाह्यार्थाङ्गीकारे तु तन्नियमः सुघट एव। येन हि तुरङ्गत्वजात्युपभोग्यसुखदुःखादिकारणं कर्म्म कृतपूर्वं स तत्परिणाममाहात्म्यात्तामेव जातिं समाश्रयते। एवमपरेऽपि जन्मिनस्तत्कर्म्मसामर्थ्यात्तां तां जातिं भजन्त इति।

**एवं सौगत** युक्तयस्तव हठान्निर्मूलमुन्मूलिताः
प्रोक्ताः शैलसुनिश्चलाः पुनरमूर्बाह्यार्थसंसिद्धये।
**योगाचारमत**प्रपञ्चचतुरोऽप्येतर्हि तस्मादहो
तूष्णीं तिष्ठ सुनिश्चितो ननु मया कश्चिद्भवान् वञ्चकः॥१६१॥

ततश्च—

अनुभववसुधायामत्र लब्धप्रतिष्ठः
प्रबलविविधयुक्तिप्रौढशाखाभिमनोज्ञः।

प्रकटितनिजमूर्त्तिर्बाह्यभावः सितादि-
र्नृप इव निजराज्यं तन्त्रयित्वात्मकार्यम् ॥ १६२ ॥

चित्रप्रतिभासामप्येकां बुद्धिं विनाऽपि बाह्येन ।
इह मन्यन्ते केचित् कुवासनात. सुगतशिष्याः ॥१६३॥

**चित्राकारैका बुद्धिरेव ननु बाह्योऽर्थः कश्चित्तत्साधकप्रमाणाभावादिति बौद्धैकदेशिनो मतस्योपपादनपूर्वकं खण्डनम् ।**

तथाहि । ते एवमाहुः । ज्ञानमेवेदं नीलाद्यनेकाकाराक्रान्तं चित्रमेकमाभासते न पुनस्तदतिरिक्तमूर्तिर्नीलादिश्चित्रो बाह्यार्थः । तत्सद्भावे प्रमाणाभावात् । यस्य हि सद्भावे प्रमाणं न विद्यते तन्नास्ति यथा तुरङ्गशृङ्गं नास्ति च नीलादिचित्रबाह्यार्थसद्भावे किञ्चित्प्रमाणमिति । न च प्रमाणाभावरूपो हेतुरत्रासिद्धः । तथाहि तद्व्यवस्थापकं प्रमाणं किं प्रमेयात्पूर्वकालभावि स्यादुतस्विदुत्तरकालभावि समकालभावि वा । प्रथमपक्षे कथमस्य प्रमेयव्यवस्थापकता । तमन्तरेणैवोत्पद्यमानत्वात् व्योमकुसुमज्ञानवत् । द्वितीयपक्षे तु प्रमाणात्पूर्वकालवृत्तित्वं नीलादेः प्रमेयस्य कुतश्चित्प्रतिपन्नं न वा । यदि न प्रतिपन्नम् । कथं सद्व्यवहारविषयः कूर्म्मरोमवत् । अथ प्रतिपन्नम् । तत्किं स्वतः परतो वा । यदि स्वतः । कथमस्य ज्ञानाद्भेदः । तस्यैव स्वतोऽवभासलक्षणत्वात् । अथ परतः । तन्न । प्रमाणाद्व्यतिरिक्तस्य प्रमेयव्यवस्थाहेतोः परस्यासम्भवात् । अथ प्रमाणमेव प्रमेयस्य पूर्वकालवृत्तित्वं प्रकाशयति । तन्न । तस्य स्वयमसतः प्रमेयकाले तत्प्रकाशकत्वायोगात् । समकालत्वे तु प्रमाणप्रमेययोः सव्येतरगोविषाणवत् ग्राह्यग्राहकभावाभाव. । न च प्रमाणे नीलाद्याकारानुरागप्रतीत्यन्यथानुपपत्त्या तदनुरञ्जको बहिश्चित्रोऽर्थः समस्तीत्यभिधातव्यम् । स्वप्नदशायां तदभावेऽपि तदनुरागप्रतीते. । तथाहि—

---

१ ' सूत्रयित्वा ' इति भ. पुस्तके पाठः ।

दर्पप्रोद्धुरगन्धसिन्धुरघटासङ्घट्टसण्टङ्कितं
तुङ्गं तुङ्गतुरङ्गभङ्गुरगुरुग्रीवाविलासोज्ज्वलम् ।
दिव्यस्यन्दनवृन्दसुन्दरगुरुप्रेङ्खत्पदातिव्रज
साम्राज्यं कुरुतेऽत्र कश्चन किल स्वप्ने प्रमोदाञ्चितः ॥१६४॥

न च तद्दशाभाविनि करितुरगादिप्रत्ययेऽनुरञ्जको बहिरर्थोऽस्ति । स्वप्नेतरप्रत्ययानामविशेषप्रसङ्गात् । अतो बुद्धिरेवार्थनिरपेक्षा स्वसामग्रीतो विचित्राकारोद्धुरिता यथा स्वप्नदशायामुपजायते तथा जाग्रद्दशायामपि नन्वेवमप्येकस्या बुद्धेर्विचित्राकारतया प्रतिभासमानायाः कथमेकत्वं युक्तमित्यप्यचोद्यम् । अशक्यविवेचनतस्तस्यास्तदविरोधात् । तदुक्तं "**नीलादिश्चित्रविज्ञाने ज्ञानोपाधिरनन्यभाक् । अशक्यदर्शनस्तं हि पतत्यर्थे विवेचयन् ॥ १ ॥**" अत्र देवेन्द्रव्याख्या । चित्रज्ञाने हि यो नीलादिः प्रत्यवभासते ज्ञानोपाधिः । ज्ञानविशेषणः अनुभवस्वात्मभूत इति यावत् । स एवैकोऽनन्यभाक् तज्ज्ञानस्वभावत्वादन्यमर्थं ज्ञानवदेव न भजते । तादृशश्च सन्नसौ तच्चित्रदर्शनप्रतिभासी तदन्यपीतादिप्रतिभासविवेकेन न केवलः शक्यते द्रष्टुम्, तस्मिन् प्रतिभासमाने सर्वेषामेव तज्ज्ञानतया तदन्येषामपि नियोगतः प्रतिभासनात् । तस्माद्यदैवैकं नीलादिकमाकारं तदन्येभ्यः पीतादिभ्योऽयं नील इति ज्ञानान्तरेण विवेचयति प्रमाता तदैव तथा विवेचयन्नसौ न तज्ज्ञानमामृशत्यतद्रूपत्वात् तस्य । किं तर्ह्यर्थे पतति । अर्थ एव तज्ज्ञानं प्रवृत्तं भवतीत्यर्थः । तस्मादेकस्मिन्नप्याकारे प्रतिभासमाने सर्वमाभाति न वा किञ्चिदपीत्यशक्यो विवेकतो दर्शने नीलादिप्रतिभास इति । ननु नीलादिर्बहिश्चित्ररूपतया प्रतीयते तस्या. कुतो ज्ञानधर्म्मतेति चेत् । अर्थधर्म्मत्वानुपपत्तेरिति ब्रूमः । तथाहि नीलादिकमवयविरूपमेकं वस्तु स्यात्तद्विपरीतं वा । प्रथमपक्षे नीलभागे गृह्यमाणे तदितरभागानामग्रहणं न स्यात् । तेषां ततो भेदप्रसङ्गात् । तथा चावयविनोऽ-

१ 'त्वङ्गत्' इति प. पुस्तके पाठः ।

प्येकरूपतानुपपत्तिर्विरुद्धधर्म्माध्यासात् जलानलवत् । नीलभागस्य तदितरभागात्मकत्वाद्वा तदग्रहे तस्याप्यग्रहणमेव स्यात् पीताद्यग्रहे तत्स्वरूपवत् । तद्विपरीतत्वपक्षे तु नीलादेः सिद्धः स्वयमेव चित्रतापायो विभिन्नाश्रयवृत्तिनीलपीतादिवत् । तन्नार्थधर्मता । किन्तु ज्ञानधर्मता । स्वकारणकलापाद्विज्ञानमुपजायमानमनेकाकारखचितमेवोपजायतेऽनुभूयते च । ततस्तथाभूतं ज्ञानमेवैकं तत्त्वमिति चित्राद्वैतसिद्धिः । सुखादेस्तु ज्ञानाभिन्नहेतुजत्वेनापि ज्ञानात्मकत्वोपपत्तिः । तथाहि ज्ञानात्मकाः सुखादयो ज्ञानाभिन्नहेतुजत्वाज्ज्ञानान्तरवत् । तदुक्तम् । "तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः । तत्सुखादिकं विज्ञानं विज्ञानाभिन्नहेतुजम् ॥ १ ॥" इति । एवं च—

एकं चित्रं बहिरिह यतो वस्तुभूतं न किञ्चि-
न्मानारूढं कथमपि घटाकोटिमायाति तस्मात् ।
चित्रामेकां धियमनुभवेनैव संवेद्यमानां
मुक्त्वा मिथ्याभिमतिमधुना किं न भोः स्वीकुरुध्वे ॥१६५॥

चित्राकारामेकां बुद्धिं बाह्यार्थमन्तरेणापि ॥
इत्थं ये प्रतिपन्नाः सम्प्रति तेषामियं शिक्षा ॥ १६६ ॥

तथाहि यत्तावदुक्तम् तद्व्यवस्थापकं प्रमाणं किं प्रमेयात्पूर्वकालभावि स्यादित्यादि । तदशिक्षितोत्प्रेक्षितम् । प्रकाशकस्य पूर्वोत्तरसहभावनियमाभावात् । तथाहि क्वचित् पूर्वं विद्यमानपदार्थः पश्चाद्भाविनः प्रकाश्यस्य प्रकाशको भवति । यथा कृत्तिकोदयः शकटोदयस्य । क्वचिच्च पूर्वं सतः पश्चाद्भवन्प्रकाशको दृष्टो, यथा शकटोदयः कृत्तिकोदयस्य । क्वचित्पुनः प्रकाशकः समकालमवलोक्यते यथा कृतकत्वादिरनित्यत्वादेः । अतः प्रमाणं पूर्वोत्तरसहभावनियमानपेक्षं वस्तु प्रकाशयति प्रकाशकत्वात् । ततश्च यस्य हि सद्भावे प्रमाणं न विद्यते इत्याद्यनुमाने प्रमाणाभावरूपो हेतुरसिद्धः । यच्चान्यदुक्तं स्वमदशायां

तदभावेऽपि तदनुरागप्रतीतेरित्यादि । तदपि प्रलापमात्रम् । स्वप्नज्ञानेऽपि बाह्यार्थविषयत्वस्य पूर्वमेव विपर्ययविचारावसरे प्रसाधितत्वात् प्रसाधयिष्यमाणत्वाच्चानन्तरमेव माध्यमिकमतविचारप्रस्तावे । यदप्युक्त, अशक्यविवेचनतस्तस्यास्तदविरोधादित्यादि । तदप्यनुपपन्नम् । बाह्यस्यापि द्रव्यस्य चित्तपर्यायात्मकस्याशक्यविवेचनत्वाविशेषाच्चित्रैकरूपतापत्ते.। यथैव हि ज्ञानस्याकारास्ततो विवेचयितुमशक्यास्तथा पुद्गलादेरपि रूपादयः । नानारत्नराशौ बाह्ये पद्मरागमणिरयं चन्द्रकान्तमणिश्चायमिति विवेचनं प्रतीतमेवेति चेत् तर्हि नीलाद्याकारैकज्ञानेऽपि नीलाकारोऽयं पीताकारश्चायमिति विवेचनं किं न प्रतीतम् । चित्रप्रतिभासकाले तत्र प्रतीयेन्त एव पश्चात्तु नीलाद्याभासानि ज्ञानान्तराण्यविद्योदयाद्विवेकेन प्रतीयन्त इति चेत् । तर्हि मणिराशिप्रतिभासकाले पद्मरागादिविवेचन न प्रतीयत एव पश्चात्तु[1] तत्प्रतीतिरविद्योदयादिति शक्यं वक्तुम् मणिराशेर्देशभेदेन विभजनं विवेचनमिति चेत् । एतदन्यत्रापि समानम् । एकज्ञानाकारेषु तदभाव इति चेत् । मैवम् । तदभावस्यासिद्धत्वात् । चित्रज्ञानेऽपि नीलाद्याकाराणामन्योन्यदेशपरिहारेण स्थितत्वात् । एकदेशत्वे पुनरेकाकार एव समस्ताकाराणामनुप्रवेशप्रसङ्गतस्तद्वैलक्षण्याभावात्तच्चित्रता विरुद्ध्येत । तथाहि यदेकदेशं न तस्याकारवैलक्षण्यं यथैकनीलाकारस्य । एकदेशाश्च ज्ञाने नीलाद्याकारा इति । तथा यत्राकारावैलक्षण्यं न तत्र चित्ररूपता यथैकनीलज्ञाने । आकारावैलक्षण्यं चैकदेशतयाभिमताना नीलाद्याकाराणामिति । सिद्ध्यतु वैकज्ञानाकारेषु देशभेदेन विभजनाभाव. । किन्त्वेकमण्याकारेष्वप्यसौ समस्त्येव । मणेरेकस्य खण्डने तदाकारेषु देशभेदेन विभजनमस्तीति चेत् । ज्ञानस्यास्य बुद्ध्या खण्डने तदस्त्येव । पराण्येव ज्ञानानि तानि तत्खण्डने तथेति चेत् । पराण्येव मणिखण्डद्रव्याणि मणिखण्डने तानीति समानम् । नन्वेवं चित्रज्ञानं

१ ' तत्प्रतीयत एव ' इति प पुस्तके पाठः ।

विवेचयन्नर्थे पततीति तदविवेचनमेवेति चेत् । तर्ह्येकत्वपरिणतद्रव्याकारानेवं विवेचयन्नानाद्रव्याकारेषु पततीति तदविवेचनमस्तु । ततो यथैव ज्ञानाकाराणामशक्यविवेचनत्वं तथैव पुद्गलादिद्रव्याकाराणामपीति ज्ञानमिव बाह्यमपि सिद्ध्यत्कथं प्रतिषेध्यं येन चित्राद्वैतं सिद्ध्येत् । अथ बाह्यस्य विवेच्यमानस्यानुपपद्यमानत्वाज्ज्ञानस्यैव चित्ररूपता सिद्ध्यति नार्थस्येति चेत् । मैवम् । एवं हि ज्ञानस्यैवाभावः प्रसज्यते । यतः स्वसंविदितचित्रज्ञानवादिमते ज्ञानमेवोपलम्भयोग्यत्वाद्विवेचयितुं शक्यते । बाह्यं पुनरत्यन्तानुपलभ्यस्वभावं कथं विवेच्यताम् । न खल्वनालोक्य लोकः सुरलोकविकसत्पारिजातमञ्जरीमञ्जुकिञ्जल्कपुञ्जपिञ्जरतायाः स्वरूपं विवेचयितुं शक्नोति । ज्ञानाकारस्य बाह्यत्वेनाभिमतस्य दृश्यत्वाद्विवेचनोपपत्तिरिति चेत् । किं तद्विवेचनात्तस्यैवाभावोऽन्यस्य वा । न तावत्तस्यैव । ज्ञानस्य निराकारत्वप्रसङ्गात् । ततश्च चित्रैकरूपव्याघात. । नाप्यन्यस्याभावः । अन्यविवेचने ह्यन्यस्याभावसिद्धौ त्रैलोक्याभावः स्यात् । किञ्च बाह्यस्यार्थस्य विवेचनं ज्ञानविषयत्वमुच्यते यस्य च ज्ञानविषयत्वं तस्य कुतोऽसत्त्वम् । सन्तानान्तरस्याप्यभावप्रसक्तेः । भ्रान्तितो बाह्यार्थस्य ज्ञानविषयत्वमिति चेत् । भ्रान्तं तर्हि विवेचनं ततोऽप्रमाणत्वान्नासत्त्वसाधकम् । भ्रान्तिरप्यर्थसम्बन्धतः प्रमेति चेत् । तदसत् । बाह्यार्थेन सह भ्रान्तेः सम्बन्धाभावात् । सम्बन्धे वा न तस्यासत्त्वमिति । अपि च नीलादेरवयविनोऽवयवबुद्ध्या विवेच्यमानस्यासत्त्वमुच्यतेऽवयविबुद्ध्या वा । न तावदवयविबुद्ध्या । तस्यास्तत्सत्त्वगृहीतिरूपत्वान्नीलादिबुद्धिवत् । यदि पुनस्तत्सत्त्वबुद्ध्या तदसत्त्वं व्यवस्थाप्यते । तदा तदसत्त्वबुद्ध्या तत्सत्त्वं व्यवस्थाप्यत इत्यपि स्यात्तत साध्वी व्यवस्थिति । अथ तदसत्त्वबुद्ध्या विवेच्यमानस्य तस्यासत्त्वमभिधीयते । भवत्वेवं यत्र तदसत्त्वबुद्धिरभ्रान्तास्ति । न च सर्वत्र पटाद्यसत्त्वबुद्धिरभ्रान्ता भवति ततो न सर्वत्रासत्त्वसिद्धिः । अथावयवबुद्ध्या

विवेच्यमानस्यासत्त्वम् । तदप्यसत्यम् । यतोऽवयवबुद्धिर्नावयविनः सत्त्वं विधातुं प्रतिषेद्धुं वा शक्नोति । तदविषयत्वात्तस्याः । अथावयवेषूपलभ्यमानेष्ववयवी नोपलभ्यते ततोऽसौ नास्त्येवेति । एवं तर्हि स्वज्ञाने समुपलभ्यमाने पुरुषान्तरज्ञानं नोपलभ्यतेऽतस्तस्याप्यभावः स्यात् । पुरुषान्तरेण स्वज्ञानस्योपलम्भान्नाभाव इति चेत् । एवं तर्ह्यवयविनोऽप्युपलम्भान्तरेणोपलम्भभावान्नाभावः । प्रतिभाति हि लौकिकानां तन्तुभ्यः कथञ्चिद्व्यतिरिक्तस्तत्समुदायात्मकः पट इति । भ्रान्तिरेषा तेषामिति चेत् । नैवम् । सर्वलोकव्यवहाराविसंवादिनी खल्वेषा प्रतीतिर्बहुभिस्तन्तुभिरयमेकः कथंचिदात्मभूतः पटो निष्पादित इति कथं भ्रान्तिः स्यादिति न शक्यविवेचनत्वादवयविन एकत्वमपह्नोतुमशक्यविवेचनत्वात्तु चित्रज्ञानस्याभ्युपगन्तुं युक्तम् । किञ्चैते नीलाद्याकाराश्चित्रज्ञाने सम्बद्धाः सन्तस्तद्व्यपदेशहेतवोऽसम्बद्धा वा । न तावदसम्बद्धाः । अतिप्रसङ्गात् । अथ सम्बद्धाः, किं तादात्म्येन तदुत्पत्त्या वा । न तावत्तदुत्पत्त्या, समसमयवर्त्तिनां सीमन्तिनीनयनयुग्मवत् तदसम्भवात् । नापि तादात्म्येन, ज्ञानस्यानेकाकाराव्यतिरिच्यमानरूपत्वेनैकरूपत्वाभावप्रसङ्गात् । अनेकाकाराणां चैकस्माज्ज्ञानस्वरूपादव्यतिरेकादनेकत्वानुपपत्तिः । यदप्युक्तमर्थधर्मत्वानुपपत्तेरिति, तदपि प्रत्यक्षबाधितम् । चित्रपटादिबाह्यार्थधर्मतया ह्यबाधिताध्यक्षप्रत्यये चित्राकारः प्रतिभासते इति न तस्य ज्ञानधर्मता युक्ता । अतिप्रसक्तेः । यदप्यवादि नीलादिकमवयविरूपमेकं वस्तु स्यात्तद्विपरीतं वेत्यादि । तदपि प्रलापमात्रम् । सर्वथैकत्वानेकत्वयोरस्वीकारात् । न चानयोः कथञ्चित्स्वीकारे विरोधो वाच्यः । चित्रज्ञानेऽप्येवं विरोधप्रसङ्गात् । तथाहि तदेकं वा सदनेकाकारं तद्विपरीतं वा । न तावदाद्यविकल्पो युक्तः । एकस्य परस्परविरुद्धाकारैस्तादात्म्यायोगात्तावद्भिः प्रकारैस्तस्यापि भेदप्रसङ्गात् । प्रयोगो यदेकं न तस्य परस्परविरुद्धाकारैः सह तादात्म्यं यथोत्पन्नस्य क्षणस्योत्पत्त्यनुत्पत्तिभ्यां सत्त्वविनाशाभ्यां वा । एकं च चित्रज्ञानं

भवद्भिरभिप्रेतमिति । आकाराणां वा चित्रैकज्ञानतादात्म्यादनेकत्वाभावः स्यात् । अथ नीलाद्याकारवत्तज्ज्ञानमप्यनेकमिष्यते । तदापि किं कथञ्चित्सर्वथा वा । यदि सर्वथा तदा तज्ज्ञानानां परस्परमत्यन्तभेदाच्चित्रप्रतिपत्तिः स्वप्नेऽपि न प्राप्नोति । सन्तानान्तरज्ञानवत् । कथञ्चिद्भेदे तु ज्ञानवद्बहिरर्थस्यापि स्वाकारैर्विचित्रैः कथंचित्तादात्म्यमनुभवतः प्रत्यक्षादिप्रमाणेन प्रतीयमानस्य चित्रस्वभावतेष्यतां किं कदाग्रहेण । यतः—

पर्यनुयोगपराकृतिमार्गश्चित्रमतौ तव हन्त मतो यः ।
एष सखे सकलोऽपि समानश्चित्रबहिर्भववस्तुनि भाति ॥१६७॥

यदप्युक्तं ज्ञानात्मकाः सुखादयो ज्ञानाभिन्नहेतुजत्वादित्यादि । तत्र हेतुरनैकान्तिकः । यतः कुम्भादिभङ्गज शब्दः कपालखण्डादिना तुल्यहेतुजो न च तद्रूपः । किं च सर्वथा ज्ञानाभिन्नहेतुजत्वं तेषामभिप्रेतमायुष्मतः कथञ्चिद्वा । प्रथमपक्षे हेतुरसिद्धः । सुखादीनां विशिष्टादृष्टविपाकस्रग्वनितादिनिमित्तजन्यत्वात्, तस्य चादृष्टविशेषविलयेन्द्रियादिकारणकलापप्रभवत्वात् । विभिन्नस्वभावत्वाच्चामीषां सर्वथा ज्ञानाभिन्नहेतुजत्वमनुपपन्नम् । तथाहि येषां विभिन्नस्वभावत्वं न तेषां सर्वथाप्यभिन्नजत्वं यथा जलानलादीनां विभिन्नस्वभावत्वं च ज्ञानसुखादीनामिति । न चात्र हेतोरसिद्धिः । सुखादेराह्लादनाद्याकारत्वाज्ज्ञानस्य च प्रमेयानुभवस्वभावत्वात् । उक्तं च " सुखमाह्लादनाकारं विज्ञानं मेयबोधनम्" इति । अथ कथञ्चिद्विज्ञानाभिन्नहेतुजत्वं विवक्षितम् । तद्रूपालोकादिना विज्ञानसहभाविना क्षणान्तरेणानैकान्तिकम् । यथैव बहीरूपालोकादेः सकाशाद्विज्ञानस्योत्पत्तिस्तथा रूपालोकादिक्षणान्तरस्यापि न च तस्य विज्ञानादभेदः । अपि चोपादानकारणापेक्षया सुखादीनां विज्ञानाभिन्नहेतुजत्वमुच्यते सहकारिकारणापेक्षया वा । तत्राद्ये पक्षे किमेषामभिन्नमुपादानकारणमात्मद्रव्यं ज्ञानक्षणो वा । न तावदात्मद्रव्यमनङ्गीकारात् अङ्गीकारे वा कुम्भादिभि-

व्यभिचारः। न ह्यभिन्नोपादानानां घटघटीशरावोदञ्चनादीनां स्वरूपेणाभेदोऽस्ति अथ ज्ञानक्षणोपादानत्वं विज्ञानाभिन्नहेतुजत्वं सुखादीनां मतम्। तदसिद्धम्। आत्मद्रव्योपादानत्वात्तेषाम्। न खलु पर्यायाणां पर्यायान्तरोत्पत्तौ उपादानत्वं क्वचिद्दृष्टम्। द्रव्यस्यैवान्तर्बहिर्वोपादानत्वोपपत्तेः। तदुक्तम्। "**त्यक्तात्यक्तात्मरूपं यत्पौर्वापर्येण वर्त्तते। कालत्रयेऽपि तद्द्रव्यमुपादानमिति स्मृतम्॥ १॥**" इति आत्मद्रव्यं च पुरतः सविस्तरमात्मसिद्धिप्रस्तावे प्रसाधयिष्यते। अथ सहकारिकारणापेक्षयाभिन्नहेतुजत्वं सुखादीनां विवक्षितम्। तदपि स्वविवक्षामात्रम्। तस्य रूपालोकादिभिरनैकान्तिकत्वप्रतिपादनात्। यदि च सुखादयो ज्ञानात्सर्वथाप्यभिन्नास्तर्हि तद्वदेवैषामप्यर्थप्रकाशकत्वं स्यात्। न चात्र तदस्ति। सुखादीनामपि स्वज्ञानप्रकाश्यत्वेन बहिरर्थाविशिष्टत्वादतो विरुद्धधर्माध्यासात्कथमत्राभेदो जलानलवत्। तदेवं सुखादीनां ज्ञानरूपत्वाप्रसिद्धेस्तदतद्रूपिणो भावा इत्यादिवचः परिप्लवत इति।

बहिश्चित्रं रूपं तदिदमधुना सिद्धिसदनं
समारोपि प्रौढस्फुरदतुलयुक्तिव्यतिकरात्।
धियं चित्रामेकां तत इह कथं बाह्यविरहे
प्रपद्यध्वे यूयं प्रमितिरहितं भोः कुगतयः॥ १६८॥

अन्तर्बहिर्वा न हि तत्समस्ति यच्चित्रतालिङ्गितमूर्ति वस्तु।
बुद्धिर्निरालम्बनतामुपेता तत्त्वं विशुद्धेति वदन्ति केचित्॥ १६९॥

अन्तर्बहिर्वा चित्रं वस्तु नास्ति किन्तु निरालम्बना बुद्धिरेवेति माध्यमिकमतस्य सविस्तर खण्डनम्।

तथाहि **माध्यमिकाः** प्राहुः। चित्रज्ञाने नीलाद्याकारप्रतिभासस्याविद्याशिल्पिकल्पितत्वादतात्त्विकत्वमेव। ज्ञानमात्रस्यैवैकस्य मध्यमक्षणस्वरूपस्य प्रतीतिसरणिसमधिरूढस्य तात्त्विकत्वम्। नीलाद्याकाराणां हि तस्मादभेदो भेदो वा भवेत्। आद्यपक्षेऽनेकत्वविरोधस्तेषाम्। भेदपक्षे तु प्रतिभासासम्भवः। ज्ञानाद्भिन्नत्वेन जडत्वात्तेषाम्। अथ

तेऽपि प्रतिभासन्ते तर्हि तेषां संवेदनान्तरत्वापत्तिः। ततः कथं ज्ञानस्यैकस्य चित्रता स्यात्। तदुक्तम्।

" किं स्यात्सा चित्रतैकस्यां न स्यात्तस्यां मतावपि।
यदीदं स्वयमर्थानां रोचते तत्र के वयम् ॥ १ ॥"

अत्र देवेन्द्रव्याख्या। यदि नामैकस्यां मतौ न सा चित्रता भावतः स्यात्। किं स्यात् को दोषः स्यात्। तथा च भावतश्चित्रया मत्या भावा अपि चित्राः सिद्ध्यन्ति। तद्वदेव च सत्या भविष्यन्तीति प्रष्टुरभिप्रायः। शास्त्रकार आह न स्यात्तस्यां मतावपि इति। व्याहतमेतत् एका चित्रा चेति। एकत्वे हि सत्यनानारूपापि वस्तुतो नानाकारतया प्रत्यवभासते न पुनर्भावतस्ते तस्या आकाराः सन्तीति वलादेष्टव्यम्। एकत्वहानिप्रसङ्गात्। न हि नानात्वैकत्वयोः स्थितेरन्यः कश्चिदाश्रयोऽन्यत्र भाविकाभ्यामाकारभेदाभेदाभ्याम्। तत्र यदि बुद्धिर्भावतो नानाकारैका चेष्यते। तदा सकलं विश्वमप्येकं द्रव्यं स्यात्। तथा च सहोत्पत्त्यादिदोषः। तस्मान्नैकानेकाकारा। किन्तु यदीदं स्वयमर्थानां रोचतेऽतद्रूपाणामपि सतां यदेतत्ताद्रूप्येण प्रख्यानं तदेतद्वस्तुत एव स्थितं तत्त्वमिति। तत्र के वयं निषेद्धार एवमस्त्वित्यनुमन्यन्त इति। न च ज्ञाने चित्ररूपताया अपाये तत्स्वरूपप्रतिपत्तिर्विरुद्ध्यते। तदपायेऽपि स्वरूपस्य स्वतो गतेरुपपत्तेः। संवेदनमात्रतापाय एव तद्विरोधात्। न चानेकत्वप्रतिभासः संवेदने तात्त्विकानेकत्वे सत्येवोपपद्यत इति प्रेर्यम्। स्वप्नदशायां तदभावेऽपि तद्दर्शनात्। अतः संवेदनमात्रमेवालम्बनप्रत्ययरहितं तत्त्वम्। प्रयोगश्च। ये प्रत्ययास्ते निरालम्बना यथा स्वप्नप्रत्ययाः प्रत्ययाश्च विवादापन्नाः। न चालम्बनीभूतार्थप्रसाधकं किंचित्प्रमाणमस्ति। यतस्तद्बाध्यत्वमत्र पक्षस्य स्यात्। मध्यमक्षणस्वरूपसंविद्व्यतिरिक्तेऽर्थे समकालस्य भिन्नकालस्य वा तस्य प्रवृत्त्यनुपपत्तेः। ततः सैव परमार्थसती मध्यमा प्रतिपत्तिः

१ 'मतौ' इत्यत. 'तस्यां' इति यावत् भ. पुस्तके नास्ति।

सर्वधर्मनिरात्मता शून्यता च प्रोच्यते । तदाह । " **मध्यमा प्रतिपत्सैव सर्वधर्मनिरात्मता । भूतकोटिश्च सैवेयं मध्यता सैव शून्यता** " इति । सर्वधर्मराहितता च शून्यताऽपरपर्यायाऽर्थानामेकानेकस्वरूपविचारासहत्वात्सिद्धा । आत्मादिपदार्थाना ह्येकरूपतयोपगतानां क्रमवद्विज्ञानादिकार्योपयोगित्वाभ्युपगमे तावद्वा भेदप्रसङ्गात् नैकरूपतावतिष्ठते । अनेकरूपता तु नित्यैकरूपतयोपगतत्वात् नितरां नावतिष्ठते । अतः—

यथा जराजर्जरपञ्जराणि क्षणेन नश्यन्ति दृढप्रहारात् ।
द्रुतं तथैते विशरारुभावं भजन्ति भावा अपि सद्विचारात् ॥१७०॥

इति सिद्धं तेषां तद्विचारासहत्वम् । यथोक्तम् ।

**भावा येन निरूप्यन्ते तद्रूपं नास्ति तत्त्वतः ।**
**यस्मादेकमनेकं च रूपं तेषां न विद्यते ॥ १ ॥**
**तदेतन्नूनमायातं यद्वदन्ति विपश्चितः ॥**
**यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा ॥ २ ॥**"

इति । उत्पादादिधर्मरहिताश्चैते तद्रूपतयाऽपि विचारासहत्वाविशेषात् । तथाहि भावाः स्वतः परतः उभाभ्यां अनिमित्ता वा समुत्पद्यन्ते । न तावत् स्वतः । कारणनैरपेक्ष्येणोत्पद्यमानानां तेषां देशादिनियमाभावप्रसक्तेः । परतोऽपि सतामसतां सदसद्रूपाणां वा भावानामुत्पत्तिर्भवेत् । न तावत् सताम् , कारणवत्तथाविधानामुत्पत्तिविरोधात् । नाप्यसताम्, खपुष्पवत्तेषामप्युत्पत्त्ययोगात् । नापि सदसद्रूपाणाम् । सदसद्रूपताया एकत्र विरोधात् । नाप्युभाभ्यामेषामुत्पत्तिः । उभयदोषानुषङ्गात् । अहेतुका तूत्पत्तिर्न केनचिदिष्टा । तदुक्तम्—

" **न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः ।**
**उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन ॥ १ ॥** "

---

१ आदिशब्दात् व्ययध्रौव्ययोर्ग्रहणम् । २ माध्य. का ४ ।

इति । एतेन भावानां स्थितिभङ्गावपि प्रत्याख्यातौ । तयोरपि स्वतः परतो वेत्यादिप्राक्तनन्यायेन सद्भावस्वीकारे कारणनैरपेक्ष्येण तिष्ठतां विनश्यतां च भावानां देशादिनियमाभावप्रसङ्गः इत्यादेः प्राक्तनदूषणस्य समानत्वात् । ततः शुक्तिकाशकलादौ कलधौतादिप्रतीतिवत्पदार्थेषूत्पादस्थितिभङ्गप्रतीतिर्भ्रान्तिरेव । उक्तं च—

"यथा[1] माया यथा स्वप्नो गन्धर्वनगरं यथा ।
तथोत्पादस्तथा स्थानं तथा भङ्ग उदाहृतः ॥ १ ॥" इति ।

असतां वस्तूनामविद्याप्रभावात्प्रतिभास इति मतस्य खण्डनम् ।

यद्येवमसतां कथ तेषां प्रतिभास इति चेत् । अनाद्यविद्यावासनाप्रभावात् । करितुरगादीनामसतां मन्त्राद्युपप्लवसामर्थ्यान्मृच्छकलादौ केषांचित्प्रतिभासवत् । यदाह ।

"मन्त्राद्युपप्लुताक्षाणां यथा मृच्छकलादयः ।
अन्यथैवावभासन्ते तद्रूपरहिता अपि ॥ १ ॥" इति ।

ग्राह्यग्राहकभावादिव्यवहारोऽप्यविद्यानिर्मित एव । बुद्ध्यात्मन्यविपर्यासितदर्शनानां प्रतिपत्तॄणां तथाप्रतिभासाभावात् । तदुक्तं—

"अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शने ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ १ ॥" इति ।

खरतरदिनकरकरनिकरसम्पर्कतस्तुषारनिकुरम्बस्येव तत्त्वज्ञानतः समस्ताविद्याविलासस्य विलये तु ग्राह्यग्राहकभावाद्यखिलधर्मविकलं संवित्स्वरूपमात्रमवभासते[2] । तदाह । "नान्योऽनुभाव्यो बुद्ध्यास्ति" इत्यादि ।

प्रकाशमाना स्वयमेव तस्मादाकारकालुष्यपराङ्मुखीयम् ।
स्वस्थैव संविद्वत तत्त्वमास्तां मायोपमानं हि समग्रमन्यत् ॥१७१॥

---

१ माध्य. का. ४. २ 'आभासते' इति भ. पुस्तके पाठः ।

भो भोः तर्कवितर्कणैकरसिकाः सर्वैरपि श्रूयता-
मेतन्माध्यमिकस्य निर्मलतमप्रज्ञासमुज्जृम्भितम् ।
विश्वस्यानुभवं विहाय कुरुते यत्तर्जनीस्फोटनै-
र्मुग्धानां मतिमोहनैरभिनवां तत्त्वव्यवस्थामयम् ॥१७२॥

तथाहि यत्तावदुक्तं चित्रज्ञाने नीलाद्याकारप्रतिभासस्याविद्याशिल्पिकल्पितत्वादतात्त्विकत्वमित्यादि । तत्र यद्याकारशब्देन सारूप्यमभिधीयते । तदा तदतात्त्विकत्वमभिधीयमानं न नः प्रतिकूलम् । अथार्थग्रहणपरिणामः, तदा कुतोऽयं नीलाद्याकारप्रतिभासोऽविद्यानिबन्धनः, किं बाध्यमानत्वात् गोचरस्यार्थक्रियाकारित्वाभावाद्वा । आद्यविकल्पे न सर्वत्र नीलाद्याकारप्रतिभासस्याविद्यानिबन्धनत्वसिद्धिः । यत्र ह्यसौ बाध्यमानस्तत्रैवाविद्यानिबन्धनः स्यात् । यथा मरुस्थलप्रतिफलितेषु भास्करकिरणेषु पयःप्रतिभासो न पुनः सत्ये पयसि । किञ्चात्र बाधकं येन बाध्यमानत्वान्नीलाद्याकारप्रतिभासस्याविद्यानिबन्धनत्वमभिधीयते । मध्यमक्षणस्वरूपं संन्विन्मात्रं चेत् । कुतस्तत्सिद्धिः । नीलाद्याकारप्रतिभासानामवास्तवत्वाच्चेत्, तर्हि चक्रकम् । नीलाद्याकारप्रतिभासानामवास्तवत्वसिद्धौ हि मध्यमक्षणस्वरूपसंविन्मात्रसिद्धिस्तत्सिद्धौ चाविद्यानिबन्धनत्वसिद्धिस्तत्सिद्धौ चावास्तवत्वसिद्धिरिति । तद्गोचरस्यार्थक्रियाकारित्वाभावपक्षस्त्वसिद्धो नीलादेस्तद्गोचरस्य लोचनानन्दाद्यर्थक्रियाविधायितयाऽतिप्रतीतत्वात् । तथाहि—

जनयति जनतायाश्चक्षुषां हर्षलक्ष्मी
किमपि किल कलापः केकिना दृश्यमानः ।
अयि यदि, तदबुद्धे नेयमर्थक्रियास्या-
न्ननु कथय किमन्यत्तर्हि तस्याः स्वरूपम् ॥ १७३ ॥

अथ स्वरूपानुभवनमर्थक्रिया एनां चाकुर्वतो बाह्यस्य नीलादेरसत्त्वात्तद्गोचरप्रतिभासानामविद्यानिबन्धनत्वमिति चेत् । एवं तर्हि

ज्ञानगतानां नीलाद्याकाराणां स्वरूपानुभवलक्षणार्थक्रियाकारित्वात्सत्त्वसिद्धौ तदुपेतस्य ज्ञानस्य चित्राकारतासिद्धिः प्रसज्यते । न हि निराकारस्य मध्यमक्षणरूपसंविन्मात्रस्य कदाचिदप्यनुभवोऽस्ति । किं च संविन्नीलाद्याकारयोरेकानेकस्वभावयोः प्रतिभासाविशेषेऽपि कुतः सत्येतरत्वप्रविभागः । एकाकारस्यानेकाकारेण विरोधादनेकाकारस्यासत्यत्वे कथमेकाकारस्यासत्यस्य प्रतीतिरितरत्राप्येकाकारस्यैवासत्यत्वं किन्न भवेत् । यथा चानेकाकारस्यैकाकारादभेदेऽनेकत्वं विरुद्धयते भेदे तु संवेदनान्तरत्वमनुषज्यते तथैकाकारस्याप्यनेकाकारादभेदे एकत्वं विरुद्धयते भेदे तु संवेदनान्तरत्वमनुषज्यत इति । एतेन नीलाद्याकाराणां हि तस्मादभेदो भेदो वा भवेदित्यादि प्रागुक्तं प्रत्युक्तमवगन्तव्यम् ।

एवं च दुर्दर्शनपक्षपाती भिक्षुर्विलक्षः कथमेष न स्यात् ।
प्रेक्षावतां सम्प्रति यत्समक्षं परीक्ष्य सिद्धिं गमितोऽयमर्थः ॥ १७४ ॥

यदपि ये प्रत्ययास्ते निरालम्बना इत्याद्यनुमानमवादि । तदप्यवद्यम् । यतस्तवायं वाक्योपन्यास एव न प्राप्नोति । परप्रत्यायनार्थं हीदं वाक्यं भवता साधनत्वेनोपन्यस्तं न च भवतः परावबोधोऽस्ति । सत्त्वे वा परावबोधस्यैव सालम्बनत्वात् । तेनैवानेकान्तः साधनस्य । पराप्रतिपत्तौ च कथं तद्गतसर्वप्रत्ययानां प्रत्ययत्वं गृह्यते, नागृहीतपक्षधर्म्मत्वे हेतुर्गमक इति च भवतामेवोद्गारः । तथायमनुमानप्रत्ययः समस्तं विवादास्पदतयालम्बनीकरोति न वा । यदि करोति, तदा तेनैव व्यभिचारी हेतुः । तस्य प्रत्ययत्वेऽपि सालम्बनत्वादिति कथं सर्वविवादापन्नप्रत्ययानामनालम्बनत्वसिद्धिः । अथ न करोति । तदापि कथं तेषां तत्सिद्धिरनुमानाविषयत्वादिति विस्तरतटीकरालशार्दूलान्तरालवर्त्तिनस्ते कुतः कुशलम् । निरालम्बनस्यैवास्य प्रमाणत्वाभ्युपगमादयमदोष इति चेत् । तदमनोज्ञम् । निरालम्बनस्य प्रमा-

१ 'च' इत्यधिकं प. म. पुस्तकयोः ।

णत्वायोगात् । न हि पारिभाषिकं ज्ञानस्य प्रमाणत्वं निरालम्बनत्वं किं तर्हि येन प्रत्येयं परिच्छिद्यते तत्प्रमाणम् । यत्र तु न किञ्चित् प्रतिभाति तन्निरालम्बनमुच्यते । तत्कथं नानयोर्विरोधः । स्वात्मालम्बनापेक्षया निरालम्बनत्वाभिधानाविरोध इति चेत् । तत्किमिदानीं स्वात्मापेक्षयैवास्यानुमानत्वम् । एवमिति चेत् । न तर्हि स्वात्मैकविषयेणानेन प्रत्ययान्तराणां निरालम्बनत्वं वा सिद्ध्यत्यविषयत्वात् । न हि यो यस्य न विषयः स तेन साधयितुं शक्यते । तत्साधने हि स एव तस्य विषयः स्यात् साध्यलक्षणत्वाद्विषयस्य । तन्नास्यानुमानस्य सर्वप्रत्ययालम्बनत्वे तदनालम्बनत्वे वा प्रवृत्तिः । अपि च निरालम्बनाः प्रत्यया इत्यत्र न किञ्चित्प्रत्ययानामालम्बनमस्तीति साध्यार्थो विवक्षितः किं वा बाह्यमालम्बनं नास्तीति यद्वा यथाप्रतिभातोऽर्थो नालम्बनमिति । आद्यपक्षे पटादिपदार्थवद्बोधमात्रस्याप्यसिद्धेरस्तंगत जगत्स्यात् । द्वितीयपक्षे त्वात्मख्यातिप्रतिक्षेप एव विसर्जनम् । अथ यथाप्रतिभातार्थानालम्बनत्वं निरालम्बनत्वं उच्यते । एवं तर्हि बोधावभासिनोऽपि प्रत्ययस्य तदालम्बनत्वं न स्यात् । ततश्च बाह्यार्थवत् बोधस्याप्यसिद्धिरिति समायातमान्ध्यमशेषस्य जगतः । अथ स्वप्ने बाह्यत्वेन प्रतीतस्यार्थस्य प्राप्त्यनुपलम्भेनासत्त्वासिद्धेः । तत्प्रतिभासस्य निरालम्बनत्वसिद्धौ तत्समानरूपोपलक्षणात्सर्वप्रत्ययानां निरालम्बनत्वसिद्धिः । तदपि नोपपन्नम् । समानरूपोपलक्षणासिद्धेः । सर्वत्रार्थाप्राप्तौ हि समानरूपत्वं सिद्ध्यति । यदा तु कचिदर्थः प्राप्यते तदा कुतः समानरूपत्वम् । अथ नैव कचिदर्थप्राप्तिरिति । कुत एतन्निरणायि अर्थाभावादिति चेत् । कुतस्तदभावसिद्धिः । तदुपस्थापकत्वाभिमतप्रत्ययानां निरालम्बनत्वादिति चेत् । न । परस्पराश्रयप्रसक्तेः । अर्थाभावसिद्धौ हि निरालम्बनत्वसिद्धिस्तत्सिद्धौ चार्थाभावसिद्धिरिति । प्रत्यक्षबाधितत्वं चात्र पक्षे दोषः । जाग्रत्प्रत्ययानां स्वरूपव्यतिरिक्तभावाद्यर्थकुम्भाद्यर्थसामर्थ्ये द्योतकत्वेन सालम्ब-

नत्वस्य प्रत्यक्षतः प्रतीयमानत्वात् । हेतोश्च स्वरूपासिद्धत्वम् । हेतुस्वरूपग्राहकप्रमाणस्यापि प्रत्ययत्वेन निरालम्बनत्वात् । अथैतद्दोषपरिजिहीर्षया तद्ग्राहकप्रत्ययस्य सालम्बनत्वमङ्गीक्रियते तर्हि तेनैव प्रत्ययत्वमनैकान्तिकम् । सन्दिग्धानैकान्तिकं च, प्रत्ययत्वसालम्बनत्वयोर्विरोधासिद्धेः । विरुद्धं वा प्रत्ययत्वस्य सालम्बनत्वेनैव व्याप्तस्य प्रत्ययान्तरालम्बनप्रत्यये दर्शनात् । अथ स प्रत्यय एव नास्ति यः प्रत्ययान्तरालम्बनमिति कथं तत्र विपरीतव्याप्तिप्रतिपत्तिरिति चेत् । तत्किमिदानीं स्वप्नादिप्रत्ययाः पुरुषान्तरप्रत्ययाश्च न प्रतीयन्त एव । तथात्वे हि कथं व्यवहारः । अथ क एवमाह न प्रतीयन्ते । किन्तु नालम्बनीभवन्तीति ब्रूम इति चेत् । अहो तवायं तर्कवत्त्वोत्प्रेक्षणप्रकारो यत्प्रतीयन्ते न चालम्बनीभवन्तीति । न हि प्रतीयमानत्वादन्यदेवालम्बनत्वम् । संवेदनस्यापि निरालम्बनत्वप्रसङ्गात् । अपि च प्रतीयते स्वरूपं पररूपं च यैस्ते प्रत्ययास्तद्भावः प्रत्ययत्वं एवं च निरालम्बनत्वविरुद्धेन सालम्बनत्वेनैव प्रत्ययत्वस्य व्याप्तेः कथं न विरुद्धमेतत् । दृष्टान्तश्च साध्यविकलः । स्वप्नप्रत्ययस्यापि बाह्यार्थालम्बनत्वेन निरालम्बनत्वाप्रसिद्धेः । द्विविधो हि स्वप्नः सत्यस्तद्विपरीतश्च । प्रथमो देवताविशेषकृतो धर्म्माधर्म्मकृतो वा कश्चित्साक्षादर्थाव्यभिचारी । यद्देशकालाकारतया स्वप्ने प्रतिपन्नोऽर्थस्तद्देशकालाकारतया जाग्रद्दशायां तस्य प्राप्तिसिद्धेः । कश्चित्पुनः परम्परयाऽर्थाव्यभिचारी । राजादिदर्शनेन स्वप्नाध्यायनिगदितस्य कुटुम्बवर्धनादेः प्राप्तिहेतुत्वादनुमानवत् । योऽपि वातपित्ताद्युद्रेकजनितोऽसत्यत्वेन प्रसिद्धः स्वप्नः । सोऽपि नार्थमात्रव्यभिचारी । न हि सर्वथाप्यननुभूतेऽर्थे स्वप्नोऽपि समुपजायत इति न स्वप्नप्रत्ययो निरालम्बनो युक्तः ।

अस्तु स्वप्नमतिर्यद्वा निरालम्बनतास्पदम् ।
तथापि तदवष्टम्भात्साध्यसिद्धिर्न बन्धुरा ॥ १७५ ॥

तथाहि—

इह स्वप्नावस्थाप्रभवमतिवद्विश्वभवभृ-
त्प्रतीतीनां सिद्धेर्यदि किल निरालम्बनविधिः ।
तदा स्वप्नावस्थाविलसदनुमानप्रतिमया
भवेन्न भ्रान्तत्वं कथमिव समस्तानुमितिषु ॥ १७६ ॥

अथाप्ययुक्तं किमिवोपजातमेव सतीति प्रतिपादयेथाः ।
न किंचिदन्यद्भवदीयमेकं मुक्त्वा निरालम्बनतानुमानम् ॥ १७७ ॥

भ्रान्तं भवत्वेतदथाऽनुमानं तथापि का नाम तवार्थसिद्धिः ।
मूलाद्विलूने दशकण्ठकण्ठपीठे रघूणामधिपस्य यासीत् ॥ १७८ ॥

किं च स्वप्नप्रत्यये साध्यसाधनधर्म्मग्राहकप्रत्ययस्य निरालम्बनत्वे साध्यसाधनोभयविकलता दृष्टान्तस्य प्रसज्यते । दृष्टान्तग्राहकस्य च प्रत्ययस्य निरालम्बनत्वे दृष्टान्तस्यैवाभावादसाधारणानैकान्तिकत्व हेतोः। साध्यधर्म्मिधर्म्मोभयप्रत्ययाना निरालम्बनत्वे वाऽप्रसिद्धविशेष्योऽप्रसिद्धविशेषणोऽप्रसिद्धोभयश्च पक्षः स्यात् । अपि च स्वप्नदृष्टान्तेनाखिलप्रत्ययाना बहिर्मिथ्यात्वाभ्युपगमे स्वरूपेऽपि तत्प्रसङ्गः । तथाहि यत्प्रतिभासते तन्मिथ्या यथा स्वप्नः प्रतिभासते च विज्ञानस्वरूपमिति प्रतिभासाविशेषेऽपि स्वरूपप्रतिभासस्य सत्यत्वाङ्गीकारेऽर्थप्रतिभासस्यापि सत्यत्वं किं नाङ्गीक्रियेत । विशेषाभावात् । ततश्च ।

अत्यनल्पनिजकूटकल्पनाविप्लवैकमृगतृष्णिकाकुलः ।
मुग्ध माध्यमिक मा मुधाभ्रमीः स्वच्छवेदनजलौघवाञ्छया ॥१७९॥

यच्चार्थानामेकानेकस्वरूपविचारासहत्वादित्याद्युपन्यस्तम् । तदपि न प्रशस्तम् । एकत्वस्यानेकत्वस्य च विचार्यमाणस्य तत्रासम्भवेऽपि जात्यन्तरस्यैकत्वानेकत्वस्य सम्भवेन सत्त्वाविरोधात्। यदप्युक्तमुत्पादादिधर्मरहिताश्चैते इत्यादि । तदप्यनुपपन्नम् । द्रव्यरूपतया सतां पर्यायरूपतया चासतां भावानामुत्पादादिधर्म्मसद्भावोपपत्तेः । सर्वथा सतामसतां वा वस्तूनामुत्पादादयो धर्माः न कथञ्चिदुपपद्यन्त इति यथा-

१ ‘न’ इति प. पुस्तके नास्ति ।

वसरं समर्थयिष्यामहे । यदि वोत्पादादयो धर्म्माः सर्वथा न सन्ति तदा त्वदङ्गीकृतस्य स्वसंवेदनमात्रस्याप्यभावः प्रसज्यते । उत्पादव्ययध्रौव्ययुक्तस्यैव सत्त्वात् । सर्वथाप्यसत्त्वे च तेषां स्पष्टप्रतिभासविषयता पुरुषविषाणस्येव कथं नाम स्यात् । स्पष्टप्रतिभासविषयत्वे वा तेषां स्वसंवित्स्वरूपस्येव सर्वथाप्यसत्त्वं न स्यात् । न च स्पष्टप्रतिभासविषयत्वमेषामसिद्धम् । कनकादौ कुण्डलाद्युत्पादादीनां महिलाहालिकगोपालमुखैरपि स्पष्टप्रतिभासविषयतया सुप्रतीतत्वात् । अपि च उत्पादादीनां धर्माणामसत्त्वे स्वीक्रियमाणे सम्बन्धाभावतस्तस्मिन् संवेद्यमाने न ते नियमेन संवेद्येरन् । यस्य येन सम्बन्धो नास्ति तस्मिन् संवेद्यमानें नासौ नियमेन संवेद्यते । यथा ज्ञानात्मनि संवेद्यमाने कूर्मरोमसमूहः । नास्ति च सम्बन्धो ज्ञानेन सार्धमसद्रूपाणामुत्पादाद्याकाराणामिति । अस्ति चैतेषां ज्ञाने संवेद्यमाने नियमेन संवेदनमतः समस्ति कश्चित्तेषां तेन सह सम्बन्धः । स च परमार्थसत्त्वमन्तरेण न सम्भवतीति सिद्धं तेषां परमार्थसत्त्वम् ।

ग्राह्यग्राहकभावविकलस्य संविन्मात्रस्य खण्डनम् ।

संवेद्यमानानामप्येषामसत्त्वे ज्ञानस्वरूपेऽप्यसत्त्वप्रसङ्गान्निखिलशून्यतापत्तिर्भवेत् । यत्तूक्तमनाद्यविद्यावासनाप्रभावादित्यादि । तदप्यसुन्दरम् । अविद्यायाः पूर्वमेव परास्तत्वात् । अपि च स्वस्थसंविन्मात्रं कुतोऽभ्युपगतम् । प्रतीतेश्चेन्नैवम् । स्वस्थसंविन्मात्रस्य कदाचिदप्यप्रतीतेः । प्रतीत्या च वस्तु व्यवस्थापयता बाह्यमपि वस्तु स्वीकर्त्तव्यम् । तस्यापि प्रतीतौ परिस्फुरणात् । न चेयमसत्यरूपा प्रतीतिः । बाधकाभावात् । विपरीतार्थोपलम्भो हि बाधको न चात्रासौ समस्ति । तद्विपरीतस्य मध्यमक्षणस्थायिनः संविन्मात्रस्य स्वप्नेऽप्युपलम्भाभावात् । अतः कथमसताऽनेनानुभूयमानस्य बाह्यार्थस्य बाधा । असतापि बाधाकल्पने नित्यनिरंशव्यापिपरमब्रह्मोपलम्भेनाऽसतापि त्वदभिमतमध्यक्षणस्थायिसंविन्मात्रस्य बाधा कथं न भवेद्विशेषाभावात् ।

वस्तुव्यवस्थितिमुपैषि यदि प्रतीत्या
बाह्यं तदा किमिति वस्तु पराकरोषि ।
बालाबलाप्रभृतिरप्यखिलः पदार्थान्
बाह्यान् जनो यदवगच्छति पीतमुख्यान् ॥ १८० ॥

मिथ्याप्रतीतिरियमित्यपकर्णनीयं
यन्नास्ति काचिदपि बाधकबुद्धिरत्र ।
मध्यक्षणस्थितिमितिप्रतिभास एव
शङ्क्येत बाधकतया न च विद्यतेऽसौ ॥ १८१ ॥

असन् शक्तः कर्तुं कथय किमतो बाधविधुरान्
सितायर्थोद्गाराननुभवसुधास्वादजनितान् ।
अथासन्नप्येष प्रभवति सखे बाधनविधौ
न किं बाधेतैवं तव मतमपि ब्रह्मणि मतिः ॥ १८२ ॥

इति संग्रहवृत्तानि[1] ।

अथ केचित्पुनः संविन्मात्रस्याप्यपलापेन सकलशून्यतामाहुः । सापि नोपपद्यते । यतस्तस्याः साधकं किञ्चित्प्रमाणमस्ति न वा । यदि नास्ति कथं सा सिद्ध्येत् । प्रमाणनिबन्धनत्वाद्विदुषामिष्टसिद्धेः ।

सकलशून्यतामभ्युपगच्छतः शून्यवादिनो मतस्य खण्डनम् ।

अथास्ति, तदा कथं सकलशून्यता । प्रत्यक्षादिप्रमाणस्य तज्जनकस्येन्द्रियादेश्च सद्भावे सकलशून्यताविरोधात् । किञ्च । सकलशून्यता प्रमाणप्रमेययोरनुपलब्धितो, विचारात्, प्रसङ्गसाधनाद्वा स्यात् । प्रथमपक्षे कथं तयोरनुपलब्धिः । तद्ग्राहकप्रमाणाभाव इति चेत्, सोऽपि किं संशयादयः प्रत्ययाः प्रमाणानुत्पादो वा । तत्राद्यः पक्षो न युक्तः । संशयादिसद्भावाभ्युपगमे सकलशून्यतायाः सलिलाञ्जलिदान-

---

१ संग्रहवृत्तानीति पदनिर्देशादेव प्रतीयते यदिमे श्लोकाः स्वयमन्येन वा कृते संग्रहग्रन्थे प्रणीता इति ।

प्रसङ्गात् । प्रमाणानुत्पादोऽपि ज्ञातः सन् सर्वाभावं गमयत्यज्ञातो वा । न तावदज्ञातोऽतिप्रसङ्गात् । अथ ज्ञातः, कुतस्तज्ज्ञानमन्यतः प्रमाणाभावात् स्वतो वा । प्रथमपक्षेऽनवस्थातः प्रस्तुताभावस्याप्रतिपत्तिः। स्वतस्तज्ज्ञाने सर्वाभावस्यापि स्वत एव ज्ञानप्रसङ्गात् । प्रमाणाभावोपन्यासो व्यर्थः स्यात् सकलशून्यताव्याघातश्च । तथाभूतस्यास्यैव प्रमाणप्रमेयरूपत्वप्रसक्तेः प्रमाणप्रमेयपदाव्यपदेश्यः सर्वाभाव इति न वाच्यम् । स्वतः स्वरूपं प्रतिपद्यमानस्य तस्य प्रमाणप्रमेयपदाभ्यामवश्यव्यपदेश्यत्वात् । तत्पदाव्यपदेशत्वे च तस्यासत्त्वप्रसक्तिर्व्योमकुसुमवत् । किं चात्रानुमाने धर्म्मिहेतुदृष्टान्तानां ग्राहकं प्रमाणमस्ति न वा। यद्यस्ति, कथं सकलशून्यता । अथ नास्ति, कथं प्रकृतानुमानप्रवृत्तिः । प्रमाणाभावे हि धर्म्मिहेतुदृष्टान्तानां सिद्धेरभावादाश्रयासिद्धतादिदोषदूषितमनुमानं कथं नाम प्रवर्त्तितुमुत्सहेत । अनुमानाभावे च कथं सकलशून्यतासिद्धिः । अथ विचारात्सकलशून्यता साध्यते । ननु विचारः पारमार्थिकः समस्ति न वा । समस्ति चेत्, कथं सकलशून्यता । अथ नास्ति, कुतस्त्या तर्हि तत्सिद्धिः । अथ प्रसङ्गसाधनात् सकलशून्यतासिद्धिरास्थीयते । दुःस्थमेतत् । सकलशून्यतावादिनः स्वपरविभागासम्भवे प्रसङ्गसाधनस्यैवासम्भवात् परस्येष्टेनानिष्टापादनलक्षणत्वात्तस्य । कथं चैष दुरात्मा प्रमाणप्रमेयप्रपञ्चं प्रतीतिपर्यङ्कोत्सङ्गसङ्गतमनङ्गीकृत्य स्वप्नदशायामप्यननुभूयमानां सकलशून्यतामङ्गीकुर्वाणः प्रामाणिकपरिषदि प्रवेशमपि प्राप्नुयात् ।

तस्मादयं नीलसितादिरर्थः प्रमाणमुद्रामवलम्बमानः ।
अबाध्यमानश्च भुवि प्रसिद्धो न शून्यता नाम समस्ति काचित्। १८३।

अथ परब्रह्मवादिनः प्राहुः—

परब्रह्मवादिनो वेदान्तिनो मतस्य उपपादनपूर्वकं खण्डनम् ।

भावग्रामो घटादिर्बहिरिह घटते वस्तुवृत्त्या न कश्चि-
त्तन्मिथ्यैव प्रपंचस्तमपि च मनुते तत्त्वभूतं जनोऽयम्।
प्रौढाविद्याविलासप्रबलनरपतेः पारवश्यं गतः सन्
आत्माद्वैतं तु तत्त्वं परमिह परमानन्दरूपं तदस्तु
॥ १८४ ॥

तथाहि समस्तं चेतनाचेतनस्वभावं वस्तु प्रतिभासान्तःप्रविष्टं प्रतिभासमानत्वात् यद्यथोक्तसाधनं तद्यथोक्तसाध्यं यथा प्रतिभासस्वरूपं प्रतिभासते च समस्त चेतनाचेतनस्वभावं वस्तु तस्माद्यथोक्तसाध्यसम्बद्धम् । न चात्र हेतुरसिद्धः । साक्षादसाक्षाच्च समस्तवस्तुनोऽप्रतिभासमानत्वे सकलविकल्पगोचरातिक्रान्तत्वेन वक्तुमशक्तेः । आगमोऽप्यस्य प्रतिपादकः समस्त्येव "**सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचन । आरामं तस्य पश्यन्ति न तं पश्यति कश्चन ॥ १ ॥**" इत्यादि । तदेव च परमात्मरूपं सकललोकसर्गस्थितिप्रलयहेतुः तदाह । "**ऊर्णनाभ इवांशूनां चन्द्रकान्त इवाम्भसाम् । प्ररोहाणामिव प्लक्षः स हेतुः सर्वजन्मिनाम् ॥ २ ॥**" इति । अपि चेन्द्रियसन्निपातानन्तरसमुद्भूताविकल्पकाध्यक्षेण[२] परानपेक्षतयैकत्वमेव भावानां प्रतीयते तच्चैकप्रतिभासान्तःप्रवेशाभावे तेषां कथं सम्भवेत् । भेदाः पुनः परापेक्षतया प्रतीयन्ते । ततश्चैतत्[३] प्रत्ययरूपत्वेनाप्रमाणभूतत्वाद्भेदमसाधयन्नैकत्वं निरुणद्धि । निन्दा च श्रूयते भेददर्शिनः, "**मृत्योः स मृत्युमाप्नोति इह नानेव पश्यति**" इत्यादिना । न चाभेदशंसिनः प्रत्यक्षविरुद्धत्वमस्यागमस्य वक्तुं शक्यम् । न ह्यन्यानिषेधे प्रत्यक्षं प्रभवति । स्वरूपमात्रग्रहणपरिसमाप्तव्यापारत्वात् । पररूपनिषेधमन्तरेण च दुरुपपादत्वाद्भेदे कुण्ठमेव प्रत्यक्षमिति कथमभेदाभिधायिनमेवमागमं विरुन्ध्यात् । तदुक्तं । "**आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः । नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते ॥ १ ॥**" इति । किंच कचिद्भावे भावान्तरेभ्यो भेदः प्रतिपद्यमानः क्रमेण यौगपद्येन वा प्रतिपद्यते । न तावद्यौगपद्येन, भेदप्रतिपत्तेः प्रतियोगिग्रहणसापेक्षत्वात् । न च प्रतियोगिभावान्तराणामशेषाणां युगपद्ग्रहणं सम्भवति । नापि

---

१ तत्त्वसंग्रहे पुरुषपरीक्षायां प्रथमश्लोको भूयसांशेनैतत्सदृशः । २ 'काध्यक्षतः' इति प. पुस्तके पाठः । ३ 'ततश्चैतत्प्रत्ययः कल्पनाप्रत्ययरूपत्वेनाप्रमाणभूतत्वात्' इति प. पुस्तके पाठः ।

क्रमेण, यतोऽनन्तानां प्रतियोगिनां क्रमेण प्रतिपत्तावेवोपक्षीणपुरुषायुषः प्रतिपत्ता कथं कदापि कस्यापि भेदं प्रतिपद्येत । तथाऽसौ भेदः पदार्थेभ्यो भिन्नः स्यादभिन्न उभयरूपोऽनुभयरूपो वा । यदि भिन्नः, तत्रापि किमसौ स्वतो भिद्यते भेदान्तरेण वा । यदि स्वतस्तदा पदार्थैः किमपराद्धं येनैषां स्वत एव भेदो नानुमन्यते । अथ भेदान्तरेण, तदाऽनवस्था । तस्यापि भेदान्तरेणार्थेभ्यो भेदप्रसक्तेः । अथाभिन्नः, तदा पदार्थमात्रमेव भवेत् । नाप्युभयरूपः, उभयपक्षनिक्षिप्तदोषानुषङ्गात् । भेदाभेदयोः परस्परपरिहारस्थितिलक्षणत्वेनैकत्रैकदा सम्भवाभावाच्च । नाप्यनुभयरूपः, विधिप्रतिषेधयोरेकतरप्रतिषेधेऽन्यतरविधेरवश्यंभावित्वात् । अन्यच्च समस्तार्थानां किमेक एव भेदः प्रत्यर्थं भिन्नो वा । यद्येक एव, तर्हि तस्याभेदात्तेषामप्यभेद एव स्यात् । अथ प्रत्यर्थं भिन्नः, किं स्वतो भेदान्तरेण वा । पक्षद्वयेऽपि प्राक् प्रतिपादितमेव दोषद्वयमुपढौकनीयम् । अपि च पदार्थाना भेदः किं देशभेदात्कालभेदादाकारभेदाद्वा भवेत् । न तावद्देशभेदात्स्वरूपेणाभिन्नाना भावानामन्यभेदेऽपि भेदायोगात् । नह्यन्यभेदोऽन्यत्र संक्रामति असंकीर्णभावव्यवस्थाभ्युपगमविलोपप्रसङ्गात् । किंच देशस्यापि किमपरदेशभेदतो भेदः स्वतो वा । यद्यपरदेशभेदतः, तर्हि तद्देशस्याप्यपरदेशभेदाद्भेद इत्यनवस्था । अथ स्वत एव देशस्य भेदः, तदा पदार्थभेदोऽपि स्वत एवास्तां किं देशभेदात्तद्भेदकल्पनया । ततो न देशभेदाद्भावभेदः । एवं कालाकारभेदाभ्यामपि न भावानां भेदः । प्रोक्तदोषाणामिहापि समानत्वात् ।

एवं विचार्यमाणोऽसौ भेदो न व्यवतिष्ठते ।
अविद्यानिर्मितं तस्मात् स्फुटं तत् प्रतिभासनम् ॥ १८५ ॥

भेदसिद्धौ न सामर्थ्यमेवं चास्य विभाव्यते ।
ततो नैकत्वमेतेन कथंचन विरुद्ध्यते ॥ १८६ ॥

तस्मादेकत्वसंवित्तेरन्यथानुपपत्तितः ।
एकरूपं परं ब्रह्माङ्गीकर्त्तव्यं परैरपि ॥ १८७ ॥
इदमेव परां विद्यामामनन्ति मनीषिणः ।
एतस्य श्रवणादिभ्यः प्राप्तिः समुपजायते ॥ १८८ ॥

ननु विद्यास्वभावत्वे ब्रह्मणस्तदभिन्नस्वभावाना संसार्यात्मनामपि विद्यास्वभावत्वात्तत्प्राप्त्यर्थाना श्रवणमननादीनां निरुपयोगित्वमिति चेत्, तदचारु । विद्यास्वभावत्वेऽप्यस्य श्रवणमननादीना निरुपयोगित्वासम्भवादविद्याव्यावर्त्तनफलत्वात्तेषाम् । अविद्याव्यावर्त्तनमेव च विद्याप्राप्तिः । यत एवाविद्या ब्रह्मणोऽर्थान्तरभूता तत्त्वतो नास्त्यत एव तैर्व्यावर्त्यते । तत्त्वतस्तस्याः सद्भावे[1] न कश्चिद्व्यावर्त्तयितुं ता शक्नुयात् ब्रह्मवत् । सर्वैरेव च वादिभिरतात्त्विकानाद्यविद्याया व्यावृत्त्यर्थं मुमुक्षूणां प्रयासः स्वीकृत एव । अस्याः स्वावच्छेदिकाया व्यावृत्तौ परमात्मैकस्वरूपतायां संसार्यवतिष्ठते, घटाद्यवच्छेदकस्य व्यावृत्तौ शुद्धाकाशरूपतायामिवाकाशम् । न च श्रवणमननादीना भेदरूपत्वेनाविद्यास्वभावत्वात् कथमविद्याव्यावर्त्तकत्वं यतो विद्याप्राप्तिहेतुत्वमभिधीयेतेति वाच्यम् । यथैव हि रजःसम्पर्ककलुषेऽम्भसि द्रव्यविशेषचूर्णरजोरूपं प्रक्षिप्तं रजोन्तराणि प्रशमयत्स्वयमपि प्रशाम्यति स्वस्वरूपावस्थामुपनयति तथैवानाद्यविद्यासंश्लेषमलिने संसार्यात्मनि श्रवणमननादिभिरविद्याविद्यान्तराणि समुच्छिन्दती स्वयमपि समुच्छिद्यमाना परमात्मैकस्वरूपतामुपढौकयतीति । न चाद्वैते बन्धमोक्षादिभेदव्यवस्थाऽनुपपन्नेति वचनीयम् । समारोपितादपि भेदाद्भेदव्यवस्थोपपत्तेः । यथा हि द्वैतवादिना वक्षसि मे सुखं शिरसि मे दु खमित्येकस्यात्मनः समारोपितभेदनिमित्ता सुखादिभेदव्यवस्था तथाऽस्माक ब्रह्मणोऽपि बन्धमोक्षादिभेदव्यवस्था भविष्यति । ननु वक्ष.प्रभृतीनामेव सुखाद्यधिकरणत्वं तेषां च भेदात्तद्व्यवस्था युक्तैवेति चेत् । तदप्ययुक्तम् ।

---

१ ‘ सद्भावेऽपि ’ इति भ. पुस्तके पाठः ।

तेषामन्यत्वेन भोक्तृत्वायोगात् । भोक्तृत्वे चार्वाकमतानुषङ्गः ।
तथा च—

शिशिरतरमृणालीजालकैः कीर्णवक्षा-
स्तरुणतरणितापक्लान्तखल्वाटमूर्द्धा ।
अनुभवति विशिष्टां वक्षसि प्रीतिलक्ष्मीं
शिरसि किमपि कष्टं चेति तावत् प्रतीतम् ॥ १८९ ॥

तदिह यथैकत्रात्मन्यारोपितभेदहेतुका भवति ।
अद्वैतद्वेषिमते सुखादिभेदव्यवस्थेयम् ॥ १९० ॥

एकत्रैव ब्रह्मणि स्वस्थरूपे क्त्यामुष्मिन् कोविदैः कीर्त्यमाने ।
तद्वन्मिथ्याभेदमादर्शयन्ती किं नेष्टा ते बन्धमोक्षव्यवस्था ॥ १९१ ॥

आधारः सुखदुःखयोरथ भवेद्वक्षःस्थलीमस्तके
तद्भेदादुपपत्स्यतेऽनुपहता भेदव्यवस्था तयोः ।
नैतद्वाच्यमचेतनादिह यतः स्यातां न ते भोक्तृणी
तत्त्वे वाभिमते कथं नु भवतश्चार्वाकता नो भवेत् ॥१९२॥

इत्यात्मब्रह्म सिद्धं परमसुखमयं नित्यचैतन्यरूपं
सर्वाविद्याविलासे प्रलयमुपगते सर्वतो यच्चकास्ति ।
तस्माद्भेदावभासस्त्रिजगति शशभृद्युग्ममायेन्द्रजाल-
स्वप्नाद्याभासकल्पः कथमिह सुधियः कुर्वते पक्षपातम् ॥१९३॥

ब्रह्मप्रसाधनविधौ विविधं व्यधायि
यद्युक्तिपञ्जरमनन्तरमेतदेवम् ॥
तज्ज्वालजालजटिलज्वलनप्रकारे
प्रत्युत्तरेऽत्र परितः पतताद्दिदानीम् ॥ १९४ ॥

तथाहि यत्तावत्समस्तं चेतनाचेतनस्वभावं वस्तु प्रतिभासान्तः-प्रविष्टमित्याद्यनुमानमदर्शितम् । तत्र स्वतः प्रतिभासमानत्वं हेतोः परतो वा । न्यनध्येन, तर्हि प्रतिवादिनो भागासिद्धो हेतुः । पक्षी-

कृतचेतनाचेतनरूपवस्तुमध्याच्चेतनेष्वेव हि स्वतः प्रतिभासमानत्वं स्याद्वादिनः सिद्धं न पुनरचेतनेषु । परतश्चेत्, तर्हि विरुद्धो हेतुः । परतः प्रतिभासमानत्वस्य भेदाविनाभावित्वात् । सर्वं खल्विदं ब्रह्मेत्याद्यागमोऽपि नाद्वैतसाधनसमर्थः प्रत्युत द्वैतमेवायं साधयति । सर्वस्य प्रसिद्धस्याप्रसिद्धेन ब्रह्मत्वेन विधानात् । सर्वथा प्रसिद्धस्य विधानायोगादेकान्ताप्रसिद्धवत् । प्रसिद्धाप्रसिद्धयोश्च भेदाद्द्वैतसिद्धिरेव । द्वैतप्रपञ्चारोपव्यवच्छेद एवानेनागमेन क्रियत इति चेत्, नैवम् । एवमपि व्यवच्छेद्यव्यवच्छेदकयोः सद्भावसिद्ध्या द्वैतसिद्धेरनिवारणात् । किं च यथा अस्मादागमात्पुरुषाद्वैतसिद्धिस्तथा सन्त्यनन्ता जीवा इत्यागमान्नानाजीवसिद्धिरस्तु । अथ पुरुषाद्वैतविधेस्तदागमेन प्रकाशमानात् प्रत्यक्षस्यापि विधातृतया स्थितस्य तत्रैव प्रवृत्तेस्तेन तस्याविरोधात्ततः पुरुषाद्वैतनिर्णय इति चेत्, नानागमस्यापि तेनाविरोधान्नानाजीवनिर्णयोऽस्तु । तथाहि । "आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः । न नानात्वागमस्तेन प्रत्यक्षेण विरुध्यते ॥ १ ॥" यदि ह्यपरप्रतिषेधे प्रत्यक्षं प्रवर्त्तेत तदा तेन तदभावविनिश्चयाद्भवेन्नानात्वविधायकागमस्य विरोधो न चैवम् अस्य सर्वत्र[1] विधायकत्वेनात्र[2] व्यवस्थानात् । एवं च नानेन नानात्वविधायकस्यागमस्य विरोधः सम्भवत्येकत्वविधायिन इव विधायकत्वाविशेषात् । कथमेकत्वमनिषेधत्प्रत्यक्षं नानात्मतां विदधातीति चेत् । नानात्वमनिषेधदेकत्वं कथं तद्विदधीत । तस्यैकत्वविधानमेव नानात्वप्रतिषेधकत्वमिति चेत् । तर्हि नानात्वविधानमेवैकत्वप्रतिषेधकत्वमस्यास्तीति समः समाधिः । किं पुनः प्रत्यक्षमात्मनां नानात्वस्य विधायकमिति चेत् । तदेकत्वस्य किं विधायकमित्यप्युच्यताम् । न ह्यस्मदादिप्रत्यक्षमिन्द्रियजं मानसं वा स्वसंवेदनमेक एवात्मा सर्व इति विधातुं समर्थं नानात्मभेदेषु

---

१ 'सर्वदा' इति भ. पुस्तके पाठः । २ 'विधायकत्वेनैव' इति प. म. पुस्तकयोः पाठः ।

तस्याप्रवृत्तेः । योगिप्रत्यक्षं समर्थमिति चेत् । पुरुषनानात्वमपि विधातुं तदेव समर्थमस्तु तत्पूर्वकागमश्चेत्यविरोधः । स्वसंवेदनमेवास्मदादेः स्वैकत्वविधायकमिति चेत् । तथाऽन्येषां स्वैकत्वस्य तदेव विधायकमनुमन्यताम् । तथाहि परेषां प्रत्यक्षं स्वैकत्वविधायकं प्रत्यक्षत्वादात्मप्रत्यक्षवत् । स्वैकत्वाविधायकत्वे वा तत्प्रत्यक्षस्य मत्प्रत्यक्षस्यापि कथं स्वैकत्वाविधायकत्वं स्यात् प्रत्यक्षत्वादित्यतः प्रत्यात्मं स्वसंवेदनस्यैकत्वविधायकत्वसिद्धेरात्मबहुत्वसिद्धिरात्मैकत्वसिद्धिर्वा । न च विधायकमेव प्रत्यक्षमिति नियमोऽस्ति । निषेधकत्वेनापि तस्य प्रतीयमानत्वादित्यनन्तरमेव निर्णेष्यते । तन्नागमवाक्यादप्यद्वैतसिद्धिः । अपि चाद्वैताभ्युपगमे पारमार्थिकमागमवाक्यं लिङ्गं वा न किञ्चित् प्रमाणभूतं भिन्नमस्ति यतः परमब्रह्मप्रतीतिः परीक्षकस्य स्यात् ।

अथ तस्य परमब्रह्मविवर्त्तत्वाद्विवर्त्तस्य च विवर्त्तिनोऽभेदेन परिकल्पनाचतस्तत्प्रतीतिरिति मन्यसे । ननु कथं परिकल्पितादागमवाक्याल्लिङ्गाद्वा परमार्थपथावतारिणः परब्रह्मणः प्रतीतिः परिकल्पिताद्धूमादेः । पारमार्थिकमेवागमवाक्यं लिङ्गं च परमब्रह्मत्वेनेति चेत् । तर्हि यथा तत्पारमार्थिकं तथा साध्यसममिति कथं पुरुषाद्वैतं व्यवस्थापयेत् । यथा च प्रतिपाद्यजनस्य प्रसिद्धं न तथा पारमार्थिकं द्वैतप्रसङ्गादिति कुतः परमार्थसिद्धिस्ततस्तामङ्गीकुर्वता पारमार्थिकमागमवाक्यं लिङ्गं च स्वीकर्त्तव्यम् तच्चोऽचित्स्वभावम् । प्रतिपादकचित्स्वभावत्वे परसंवेद्यत्वविरोधात् प्रतिपादकचित्स्वभावत्वात्तत्सुखादिवत् । प्रतिपाद्यचित्स्वभावत्वे वा न प्रतिपादकसंवेद्यत्वं प्रतिपाद्यसुखादिवत् । तस्य तदुभयचित्स्वभावत्वे प्राश्निकादिसंवेद्यत्वविरोधस्तदुभयसुखादिवत् । सकलजनचित्स्वभावत्वे वा प्रतिपादकादिभावानुपपत्तिरविशेषात् । प्रतिपादकादीनामविद्योपकल्पितत्वाददोषोऽयमिति चेत् । हन्त तर्हि यैव प्रतिपादकस्याविद्या प्रतिपादकत्वोपकल्पिका सैव प्रतिपाद्यस्य प्राश्निकादेश्चा-

---

१ 'तथा' इति प. म. पुस्तकयोः पाठः ।

विशिष्टा प्रतिपादकत्वमुपकल्पयेत् । प्रतिपाद्यस्य चाऽविद्या प्रतिपाद्यत्वोपकल्पनपरा प्रतिपादकादेरविशिष्टा प्रतिपाद्यत्वं परिकल्पयेत् । प्रतिपादकादीनामभेदात्तदविद्यानामप्यभेदात् । भेदे वा प्रतिपादकादीनां भेदसिद्धिर्विरुद्धधर्माध्यासात् । अनाद्यविद्योपकल्पित एव तदविद्यानां भेदो न पारमार्थिक इति चेत् परमार्थतस्तर्ह्यभिन्नास्तदविद्या इति स एव प्रतिपादकादीनां सङ्करप्रसङ्गः । यदि [१]पुनरविद्याऽपि प्रतिपादकादीनामविद्योपकल्पितत्वादेव न भेदाभेदविकल्पसहा नीरूपत्वादिति मतम् । तदा परमार्थपथावतारिणः प्रतिपादकादय इति बलादीर्येते । तदविद्यानामविद्योपकल्पितत्वे विद्यात्वविधेरवश्यंभावित्वात् । तथा च प्रतिपादकादिभ्यो भिन्नमागमवाक्यं लिङ्गं च सकृत्प्रतिपादकादिसंवेद्यत्वान्यथानुपपत्तेरित्यचित्स्वभावं तत्सिद्धं बहिर्वस्तु तद्वत् घटादिवस्तुसिद्धिरिति न प्रतिभासाद्वैतव्यवस्था प्रतिभास्यस्यापि सुप्रसिद्धत्वात् । प्रतिभास्यसमानाधिकरणता पुनः प्रतिभासस्य कथंचिद्भेदेऽपि न विरुद्ध्यते । घटः प्रतिभासत इति प्रतिभासविषयो भवतीत्युच्यते विषयविषयिणोरभेदोपचारात् । प्रस्थप्रमितं धान्यं प्रस्थ इति यथा । ततः सामानाधिकरण्यादुपचरितान्नानुपचरितैकत्वसिद्धिः । मुख्यं सामानाधिकरण्यं क सिद्धमिति चेत्, सवेदनं प्रतिभास इत्यत्र । वैयधिकरण्यव्यवहारस्तु गौणस्तत्र संवेदनस्य प्रतिभासनमिति । घटस्य प्रतिभासनमित्यत्र तस्य मुख्यत्वप्रसिद्धेः । किंच कथञ्चिद्भेदमन्तरेण सामानाधिकरण्यस्यानुपपत्तेस्तत एव कथंचिद्भेदस्य सिद्धिः । शुक्लः पट इत्यत्र सर्वथा शुक्लपटयोरैक्ये हि न समानाधिकरणता । पटः पट इति यथा । नापि तयोः सर्वथा भेदे रत्नसानुरत्नाकरवदिति ।

परब्रह्मणः सकललोकसर्गप्रलयहेतुत्वमित्यद्वैतवादिवेदान्तिमतस्य निराकरणम् ।

यच्चोक्तम् । तदेव च परमात्मरूपं सकललोकसर्गस्थितिप्रलयहेतुरिति । तदप्याकाशचर्वणप्रायम् । अद्वैतैकान्ते कार्यकारणभावविरोधात् । तस्य द्वैताविनाभावित्वात् । किंच ।

१ 'वा' इति प. म. पुस्तकयोः पाठः ।

अक्षात्मा विदधाति चेद्व्यसनतश्चित्रां त्रिलोकीमिमां
मुग्ध ब्रूहि तदा भवेत् कथमयं प्रेक्षावतामग्रणीः ।
प्रेक्षावान् जगति प्रयोजनलवं कंचित्परित्यज्य भोः
कोऽपि क्वापि कदाचनाऽपि कुरुते किं नाम काञ्चित् क्रियाम्॥१९५॥

अथापि निष्कम्पकृपापरीतः परोपकाराय करोत्ययं तान् ।
नैतद्घटामेति यदस्य कश्चित् कारुण्यपात्रं न परः समस्ति ॥१९६॥

सत्त्वे वा न कथञ्चनापि नरकक्रोडेषु कुर्याज्जना-
न्नित्यं वैतरणीतरङ्गतरणव्यापारपीडाजडान् ।
कान्ताकुङ्कुमपङ्कपङ्कजरजोज्योत्स्नाच्छवायुच्छटा-
ताम्बूलाद्युपभोगतः प्रमुदितान् किं तर्हि निर्म्मापयेत् ॥१९७॥

सृष्टेः प्रागनुकम्पनीयजनता नास्तीति तस्यां कथं
कारुण्यं किल कल्प्य तस्य जगतः स्रष्टा भवेद्यद्वशात् ।
कारुण्यात्कुरुते प्रवृत्तिमिति च प्रख्याप्यमाने त्वया
कुर्यान्नो सुखिनां मृतिं बत तथा नो दुःखितानां स्थितिम् ॥ १९८ ॥

अथापि कर्म्मौघमपेक्षमाणः करोति दुःखं जगतः सुखं वा ।
इमं विमुञ्चाग्रहमेवमस्य स्वतन्त्रतायाः प्रलयप्रसक्तेः ॥ १९९ ॥

किं च—

दुःखश्रेणीकरणनिपुणप्राणिकर्मव्यपेक्षा
युक्ता नैव प्रगुणकरुणा सान्द्रचित्तस्य तस्य ।
औदासीन्यं किमपि कुरुतां किन्तु तत्र प्रवादिन्
अक्षात्मायं कथमपरथा स्यात्कृपालुः कथञ्चित् ॥२००॥

यतो महान्तः करुणासमुद्राः परेषु कांक्षन्ति न दुःखहेतून् ।
तेषां सदा दुःखितजन्तुदुःखतद्धेतुविध्वंसधिया प्रवृत्तेः ॥ २०१ ॥

तथा समर्थः स्वयमेव चेत्स्यात्परानपेक्षेत कथं कदाचित् ।
अथासमर्थः स्वयमेव चेत्स्यात्परानपेक्षेत कथं कदाचित् ॥२०२॥

अदृष्टतः स्वीक्रियते त्रिलोकीविचित्रतैषा यदि च प्रवादिन् ।
सुदुर्भगाविभ्रमसन्निभेन ब्रह्मात्मना तर्हि किमत्र कार्यम् ॥ २०३ ॥

ननूर्णनाभो यथा लालाजालकरणे स्वभावात् एव प्रवर्त्तते तथा परमात्मा जगन्निर्माण इति चेत् । तदपि सकर्णानामनाकर्णनीयम् । ऊर्णनाभो हि न स्वभावत एव प्रवर्त्तते किं तर्हि प्राणिभक्षणलाम्पट्यात्प्रतिनियतहेतुसम्भूततया कादाचित्कात् । यदप्युक्तमिन्द्रियसन्निपातानन्तरसमुद्भूताविकल्पकाध्यक्षतः परानपेक्षतया प्रतीयमानमेकत्वमेवेत्यादि । तदपि न पेशलम्, यतः—

एकव्यक्तिगतं किं वाऽनेकव्यक्तिसमाश्रितम् ॥
व्यक्तिमात्रगतं यद्वा तदेकत्वं प्रतीयते ॥ २०४ ॥
एकव्यक्तिगतं तच्चेत्तदा पर्यनुयुज्यते ॥
समानमसमानं वा न समानं विरोधतः ॥ २०५ ॥
एकव्यक्तिगतं तद्धि कथं साधारणं भवेत् ॥
अथासमानमेतन्न भेदसिद्धिप्रसङ्गतः ॥ २०६ ॥
यदसाधारणं रूपं भेदस्तस्माद्धि कोऽपरः ॥
एकव्यक्तिगतं तस्मान्नैकत्वमुपपद्यते ॥ २०७ ॥
अनेकव्यक्तिसम्बद्धं सत्तासामान्यलक्षणम् ॥
प्रत्यक्षमानतो ग्राह्यमथैकत्वमिहोच्यते ॥ २०८ ॥
व्यक्त्याधारतया तत्किं प्रतीयेतान्यथापि वा ॥
आद्यपक्षे प्रतिक्षेपः कथं भेदस्य सम्भवेत् ॥ २०९ ॥
व्यक्तेराधाररूपत्वं तस्य चाधेयतेत्ययम् ॥
आधाराधेयभावो हि भेदमाकर्षति ध्रुवम् ॥ २१० ॥
अथ तद्व्यक्त्यनाधारतया हन्त प्रतीयते ॥
अन्तरालेऽपि भासेत व्यक्तीनामग्रहे ननु ॥ २११ ॥

१ 'च' इति प. पुस्तके पाठ. । २ 'नतु' इति भ. पुस्तके पाठः ।

तथा—

व्यक्तिभ्यः किमु सत्ताख्यं एकत्वं व्यतिरिच्यते ॥
न वा व्यक्तिस्वरूपत्वममेदेऽस्य प्रयुज्यते ॥ २१२ ॥
असाधारणरूपत्वाद्व्यक्तिर्व्यक्त्यन्तरं न च ॥
अन्वेति तत्कथं तस्य निःशेषव्यक्तिनिष्ठता ॥ २१३ ॥
अथ तद्व्यतिरिच्येत व्यक्तिभ्यस्तर्हि नो जयः ॥
समीहितस्य भेदस्य ध्रुवमेवं प्रसिद्धितः ॥ २१४ ॥
यथा च स्तम्भकुम्भादिव्यक्तिष्वैकत्वमिष्यते ॥
अनुवृत्तमनीषायाः करणत्वान्मनीषिभिः ॥ २१५ ॥
तथैव हन्त किं तासु नानात्वमपि नेष्यते ॥
व्यावृत्तिबुद्धिहेतुत्वाद्विशेषो हि न कश्चन ॥ २१६ ॥
तस्माद्व्यक्तिषु नैकत्वं नानात्वेन विना कृतम् ॥
कथञ्चिदुपपद्येत प्रमाणेन विरोधतः ॥ २१७ ॥

तथाहि—

विवादास्पदमेकत्वं तात्त्विकानेकतात्त्विकम् ॥
एकान्तैकस्वरूपेण प्रमाणागोचरत्वतः ॥ २१८ ॥
यथा कुम्भशरावादिभेदसन्दोहसंयुतम् ॥
निर्द्रव्यैकत्वमेवं च सिद्धो भेदो हि तात्त्विकः ॥ २१९ ॥
व्यक्तिमात्रगतं तच्च पुरैकत्वं विकल्पितम् ॥
समानयोगक्षेमत्वात्तदप्येतेन चर्चितम् ॥ २२० ॥
एकां व्यक्तिमनेकां वा परित्यज्यापरस्य यत् ॥
व्यक्तिमात्रस्य नैवास्ति प्रतीतिपथचारिता ॥ २२१ ॥

भेदः परापेक्ष्या प्रतीयत इति स न तात्त्विक इत्यद्वैतवादिवेदान्तिमतस्य निराकरणम् ।

यदपि गदितं भेदः पुनः परापेक्षतया प्रतीयत इत्यादि । तदपि नोपपन्नम् । एकत्वमपि हि परापेक्षतया प्रतीयते ततश्चैतत्प्रत्ययोऽपि कल्पनाप्रत्ययरूपत्वेनाप्रमाणत्वात् कथमिवैकत्वं साधयेत् । एकत्वं ह्यनेकव्यक्तिग्रहणमन्तरेण कथं ग्रहीतुं शक्यत

इति परापेक्षतया गृह्यमाणत्वाद्व्यक्तमस्य परापेक्षत्वम् । अथैकत्वं परानपेक्षतया एवाध्यक्षेण समधिगतं परापेक्षया तु कल्पनाप्रत्ययेनानुगामिरूपतया व्यवह्रियते । तर्हि भेदोऽपि तथैव प्रत्यक्षेण परिच्छिन्नम्, केवलं परापेक्षया कल्पनाप्रत्ययेन व्यावृत्तस्वभावतया व्यवह्रियत इत्यप्यनिवार्यम् । किं चान्यापेक्षया भवनमेव भेदप्रत्ययस्य कल्पनात्वं स्यात्किं वा स्मरणसमनन्तरभावित्वं यद्वा शब्दानुविद्धत्वमुत जात्याद्युल्लेखित्वमथासदर्थविषयत्वमुपचाररूपत्वं वा । नाद्यः पक्षः । एकत्वप्रत्ययस्यापि कल्पनात्वप्रसक्तेः । परापेक्षामन्तरेणैव भेदस्वरूपप्रतिभासस्य समर्थयिष्यमाणत्वाच्च । नापि द्वितीयः, एकत्वप्रत्ययस्यापि स्मरणसमनन्तरभावित्वेन कल्पनात्वापत्तेः । शब्दानुविद्धत्वं च ज्ञाने शब्दब्रह्मनिर्मूलनावसरे प्रागेव प्रतिक्षिप्तम् । स्तम्भोऽयं कुम्भोऽयमित्यादिभेदप्रतिभासस्य जात्याद्युल्लेखित्वात्कल्पनारूपतायामभेदज्ञानस्यापि कल्पनारूपत्वप्रसङ्गस्तस्यापि सत्तासामान्योल्लेखित्वात् । असदर्थविषयत्वं पुनर्भेदप्रतिभासस्यासिद्धम् । अर्थक्रियाकारिणो वस्तुभूतार्थस्य तत्र प्रतिभासनात् । नापि भेदप्रतिभासस्योपचाररूपत्वं कल्पनात्वं सम्भवेत्, क्वचिदप्युपचारस्यानुपलम्भान्माणवके पावकाद्युपचारवत् । न चाभेदवादिनो मुख्यभेदाभ्युपगमोऽस्त्यपसिद्धान्तप्रसक्तेः । "**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति**" इति निन्दावादोऽप्यनुपपन्नः । भेदाभेदग्राहित्वेनैव निखिलप्रमाणानां प्रवृत्तेः समर्थयिष्यमाणत्वात् । यथोक्तमाहुर्विधातृप्रत्यक्षमित्यादि ।

प्रत्यक्षस्य विधातृत्वमेवेत्यस्य खण्डनम् ।

तत्र किमिदं प्रत्यक्षस्य विधातृत्वं नाम । सत्तामात्रावबोधोऽसाधारणवस्तुस्वरूपपरिच्छेदो वा । प्रथमपक्षो न क्षमः । नित्यनिरंशव्यापिनो विशेषनिरपेक्षस्य सत्तामात्रस्य स्वप्नेऽप्यप्रतीतेर्वाजिविषाणवत् । द्वितीयपक्षे न पुनः कथं नाद्वैतप्रतिपादकागमस्य प्रत्यक्षविरोधः । भाव-

१ 'मुख्यमन्तरेण' इत्यधिकं म. पुस्तके । २ 'यच्चोक्त' इति प. म. पुस्तकयोः पाठः ।

भेदग्राहकत्वेनैव प्रत्यक्षस्य प्रवर्त्तमानत्वात् । अन्यथा त्वसाधारणस्वरूपपरिच्छेदकत्वविरोधोऽस्य । अथाभिदध्याः विधात्रिति कोऽर्थ इदमिति वस्तुस्वरूपं गृह्णाति नान्यस्वरूपं निषेधति प्रत्यक्षमिति, नैवम् । अन्यरूपनिषेधमन्तरेण तत्स्वरूपपरिच्छेदकस्याप्यसम्पत्तेः । पीतादिव्यवच्छिन्नं हि नीलं नीलमिति गृहीतं भवति नेतरथा । तथा चाहुः स्याद्वादवादा अपि । "तत्परिच्छिनत्ति अतद्व्यवच्छिनत्ति" इति । अपि च यदेदमिति वस्तुस्वरूपमेव गृह्णाति प्रत्यक्षमित्युच्यते । तदावश्यमपरस्य प्रतिषेधमपि तत्प्रतिपद्यत इत्यभिहितमेव भवति । केवलवस्तुस्वरूपप्रतिपत्तेरेवान्याभावप्रतिपत्तिरूपत्वात् । केवलभूतलप्रतिपत्तेरेव घटाभावप्रतिपत्तिसिद्धेः । न ह्ययं प्रतिपत्ता किञ्चिदुपलभ्यमानः पररूपैः संकीर्णमेवोपलभते । स्तम्भोऽयं कुम्भोऽयमिति तदसंकीर्णस्य समस्तस्य प्रतिभासात् । न च तैरसंकीर्णतैव । सदाद्यात्मनाऽपि तदसङ्करे तस्यासत्त्वप्रसङ्गात् । स्वपररूपोपादानापोहापाद्यत्वाद्वस्तुनो वस्तुत्वस्य । तथा चाहुर्वृद्धाः "सर्वमस्ति स्वरूपेण पररूपेण नास्ति च । अन्यथा सर्वसत्त्वं स्यात्स्वरूपस्याप्यसम्भवः ॥ १ ॥" किं च विधात्रेव प्रत्यक्षमिति नियमस्याङ्गीकारो विद्यावदविद्याया अपि विधानं तवानुपज्यते । सोऽयमविद्याविवेकेन सन्मात्रं प्रत्यक्षात् प्रतियन्नेव न निषेद्धृ तदिति ब्रुवाणः कथं स्वस्थः । कथं वा प्रत्यक्षस्य निषेद्धृत्वाभावं प्रतीयात् । न तावत्प्रमाणान्तरात्, द्वैतप्रसङ्गात् । स्वतस्तु प्रत्यक्षस्य तथा निश्चये सिद्धं तस्य निषेद्धृत्वमपि । परस्याहं निषेद्धा न भवामीति स्वयं प्रतीतेः । एवं च भेदविषयमेव प्रत्यक्षम् ।

---

१ 'तद्रूपपरिच्छेदकस्य' इति म. पुस्तके पाठः । २ 'हेतोरसङ्कीर्णतैव' इति म. पुस्तके पाठः । ३ 'अङ्गीकारे' इति प. म. पुस्तकयोः पाठः ।

भेदो मिथ्येति मतस्य भेदव्यवस्थापनेन निराकरणम् ।

यच्चोक्तं क्वचिद्भावे भावान्तरेभ्यो भेदः प्रतिपद्यमानः क्रमेण यौगपद्येन वेत्यादि । तत्र यौगपद्येनैव भेदप्रतिपत्तिरिति ब्रूमः । सदृशपरिणामस्येव विसदृशपरिणामस्यापि समस्तपदार्थानां युगपत् प्रतिभासात् । विसदृशपरिणामस्वभाव एव च भेदप्रतिभासः । यच्चात्रोक्तं भेदप्रतिपत्तेः प्रतियोगिग्रहणसापेक्षत्वादित्यादि । तदप्यनुचितम् । यतो भेदव्यवहार एव परापेक्षो न पुनस्तत्स्वरूपप्रतिभासः । स हि तथाविधक्षयोपशमविशेषात् प्रतियोगिग्रहणनिरपेक्ष एव प्रादुर्भवतीति सिद्धो युगपद्भेदप्रतिभासः । भेदः पदार्थेभ्यो भिन्नः स्यादित्याद्यपि स्याद्वादस्वीकारात् प्रतिविहितम् । भेदो हि पदार्थानां धर्मः स च तेभ्यः कथञ्चिद्भिन्नोऽभिन्नश्च । न खलु धर्मधर्म्मिणोः सर्वथा भेदोऽभेदो वा सम्भवतीति पुरतः प्रकाशयिष्यते । यच्चोक्तं किमेक एव भेदः प्रत्यर्थं भिन्नो वेत्यादि । तत्र प्रत्यर्थं भिन्न इति नः पक्षः । साधारणासाधारणपरिणामवतो वस्तुनोऽसाधारणपरिणामस्य प्रतिवस्तुनियतस्याभेदत्वेनेष्टेः । स चायमीदृशो भेदः स्वतो भेदान्तराद्वा न विद्यते । किन्तु प्रतिनियताद्वस्तूत्पादककारणादेव । कारणस्यापि प्रतिनियमः स्वकीयप्रतिनियतकारणादेव । न चैवमनवस्थादोषः । एवंविधानवस्थाया बीजाङ्कुरानवस्थानवन्मूलक्षयकारित्वाभावेन दूषणत्वासम्भवात् । एतेन पदार्थानां भेदः किं देशभेदादित्याद्यपि प्रत्युक्तम् । अपि च यदीत्थं विकल्पाद्भेदो दूष्यते तदानीमभेदेऽपि भवतः का प्रत्याशा । तत्राप्येवंविधविकल्पानां सुकरत्वात् । तथा ह्यभेदः पदार्थानां किं देशाभेदात् कालाभेदादाकाराभेदाद्वा भवेत् । यदि देशाभेदात्, तदा देशस्यापि कुतः सकाशादभेदः । अन्यदेशाभेदाच्चेदनवस्थाप्रसङ्गः । स्वतश्चेत्पदार्थानामपि स्वत एवाभेदो भवतु किं देशाभेदादभेदकल्पनयेत्यादि सर्वत्रापि[1] योजनीयम् । यदपि निगदितं यत एवाविद्या ब्रह्मणोऽर्थान्तरभूता

१ ' सर्वमत्रापि ' इति प. म. पुस्तकयोः पाठः ।

तत्त्वतो नास्त्यत एव तैर्व्यावर्त्तत इत्यादि । तदप्यसारतया डिण्डीरपिण्डाडम्बरं विडम्बयति । यतो यद्यवस्तुसत्यविद्या कथमियं प्रयासतो निवर्त्तनीया भवेत् । न ह्यवस्तुसन्तः सुरसरणिसरसिजप्रमुखाः प्रयासतो निर्वर्त्तनीयतामनुसरन्तः समुपलभ्यन्ते । यद्यविद्यापि सती कथमियं निवर्त्तयितुं केनापि शक्येतेति चेत् । कातर किमत्र संत्रासेन । सतामेव हि महीरुहादीनां निवृत्तिरिह प्रतीयते । तदियमविद्या निवर्त्तनीयत्वादेकान्तनित्या माभूत्सती तु भवत्येव । सत्त्वे च द्वितीयाया अविद्यायाः सद्भावात्कथमद्वैतवादः । न चाविद्यानिर्म्मितत्वेन महीरुहादीनामपि पदार्थानां परमार्थतोऽसत्त्वमिति वाच्यम् । परस्पराश्रयदोषप्रसक्तेः । सिद्धे ह्यविद्यानिर्मितत्वे तेषां परमार्थतोऽसत्त्वं सिद्ध्यति तत्सिद्धौ चाविद्यानिर्म्मितत्वसिद्धिरिति । यच्चोक्तं यथैव हि रजःसम्पर्ककलुषेम्भसीत्यादि । तदपि फल्गु । यतो बाध्यबाधकभावाभावे कथं श्रवणमननादिलक्षणाविद्यान्तरं प्रशमयेत् । बाध्यबाधकभावश्च सतोरेव दन्दशूकनकुलयोरिव न त्वसतोः शशकाश्वविषाणयोरिव । न वाऽविद्यात्वेन सम्मतस्य भेदस्योच्छेदो घटते । वस्तुस्वभावत्वेनाभेदस्येव तस्योच्छेत्तुमशक्तेः । ननु स्वप्नावस्थायां भेदाभावेऽपि भेदप्रतिभासो दृष्टस्ततो न पारमार्थिको भेद इति । अभेदेऽपि समानम् । तस्यापि तद्दशायामसतः प्रतिभासमानत्वेनापारमार्थिकत्वापत्तेः । कथं च स्वप्नावस्थायां भेदस्यासत्त्वम् । बाध्यमानत्वाच्चेत्, तर्हि तत्र एवाभेदस्यापि तदस्तु । यदि च तदवस्थायां बाध्यमानत्वाद्भेदस्यासत्त्वम् । तर्हि जाग्रदवस्थायां तस्याबाध्यमानत्वात्सत्त्वमस्तु ।

एकत्रास्य बाध्यमानत्वोपलम्भात्सर्वत्रासत्त्वे च स्थाणौ पुरुषस्य बाध्यमानत्वोपलम्भात्सर्वत्र पुरुषस्यासत्त्वप्रसङ्गः । ततो जाग्रदवस्थायां स्वप्नावस्थायां वा यत्र बाधकोदयस्तदसत्यं यत्र तु तदभावस्तत्सत्यमित्यवगन्तव्यम् । अपि च भेदप्रतिभासस्तावत्सर्वेषां भवति तस्यासत्यता तु कुतः प्रतीयते किं तत एव प्रतिभासान्तराद्वा । तत एवेति न युक्तम् । तस्य

भेदविषयत्वात् । न हि भिन्ना एतेऽर्था इति प्रतिभासः स्वात्मनोऽसत्यतां निश्चिनोति । तन्निश्चये हि विपर्ययात् प्रवृत्तिर्न स्यात् । अथ प्रतिभासान्तरादसत्यता निश्चीयते । तदपि प्रतिभासान्तरं स्वसंवेदने नियतं कथमन्यस्यासत्यतां वेत्ति । अथोभयगोचरं तत्, तदा कथं न भेदावगमः । उभयगोचरत्वेऽपि न भेदावगम इति स्ववचनविरोधः । पराभ्युपगमेनाभिधानादविरोध इति चेत् । स पराभ्युपगमः किं स्वाभ्युपगमादभेदेनावगतोऽर्थ[1] भेदेनेति । यद्यभेदेन, तदासौ स्वाभ्युपगम एव स्यात् । अथ भेदेन, तर्हि तदवस्थ एव विरोधः । लोकव्यवहारानुवाद एष इति चेत्, स खलु लोकव्यवहारस्तत्त्वदृष्टेरर्थान्तरमनर्थान्तरं वा । यदि नार्थान्तरम्, तर्हि तत्त्वदृष्टिरेव लोकव्यवहारः । ततस्तद्व्यवहारादेव भेदसिद्धिः । अथ[2] तत्त्वदृष्टेरर्थान्तरं लोकव्यवहारः । ततः कथं न भेदः । उपप्लव एवेति चेत् । सोऽपि [3]सत्त्वदर्शनाद्भिन्नोऽथाभिन्न इति पूर्ववत्प्रसङ्गः । अविद्यानिर्मितः समस्ति भेद इत्यपि न युक्तम् । अविद्यापि तत्त्वदृष्टेरन्यानन्या वेत्यानिवृत्तः पर्यनुयोगः न चेत्थमनिर्वचनीयाऽविद्येत्यभिधातव्यम् । वस्तुनो भेदाभेदाभ्यां विचार्यमाणत्वोपपत्तेः । न चावस्तुत्वमस्या इत्यभिधेयम् । वस्तुत्वस्यात्रैवानन्तरं प्रसाधितत्वात् । यच्च समारोपितादपि भेदाद्भेदव्यवस्थोपपत्तेरित्याद्युक्तम् । तदप्ययुक्तम् । आत्मनः सांशत्वे सत्येव बन्धमोक्षादिभेदव्यवस्थोपपत्तेः निरंशस्यान्तर्बहिर्वा वस्तुनः सर्वथाप्यप्रतीतेरित्यात्माद्वैताभिनिवेशं परित्यज्यान्तर्बहिश्चानेकप्रकारं वस्तु वास्तवं प्रमाणसिद्धमङ्गीकर्त्तव्यं न पुनर्भेदप्रपञ्चः समग्रोऽपि हेय इति वाच्यमिति ।

तस्माच्चाद्वैतमेतत्प्रबलपरिलसद्युक्तिभिर्विप्रयुक्तं
युक्तं किं नाम वक्तुं कथय तव सखे युक्तिमार्गानुगस्य॥

---

१ 'अर्थभेदेन' इति भ. प. पुस्तकयोः पाठः । २ 'अर्थ' इति भ. प. पुस्तकयोः पाठः । ३ 'तत्त्व' इति भ. प. पुस्तकयोः पाठः ।

छिद्रप्रच्छादनार्थं प्रकटयति भवान्यामपीमामविद्या-
मत्यन्तं च्छिद्रिताऽसौ प्रभवति न तरां तत्समाच्छादनाय ॥ २२२ ॥

अद्यापि वादिन्यदि तुण्डकण्डूर्विडम्बयत्येव भवन्तमेषा ॥
तदा पुनर्ब्रूहि वयं तदेतत्तथैव वर्त्तेमहि हन्त सज्जाः ॥ २२३ ॥

मिथ्यात्वसाधकानुमानस्य खण्डनम्।

नन्वेष ब्रवीमि। विवादविषयापन्नः प्रपंचो मिथ्या प्रतीयमानत्वाद्यदित्थं तदित्थं यथा निशीथिनीनाथद्वित्वमिति। श्रुतमिदमनुमानं पर दुर्वारमारुतप्रहततरंगिणीतुङ्गतरङ्गपरम्पराप्रेरितोत्पलनालवद्दोलायते। तथाहि मिथ्यात्वमत्र कीदृक्षमाकाङ्क्षितं सूक्ष्मदृशा, किमत्यन्तासत्त्वमुतान्यस्यान्याकारतया प्रतीतत्वमाहोस्विदनिर्वचनीयत्वमिति न तावदाद्यः पक्षः, असत्ख्यातेस्त्वयाऽनङ्गीकाराच्चन्द्रद्वित्वस्यात्यन्तासत्त्वाभावेनोदाहरणस्य साध्यविकलत्वप्रसङ्गाच्च। अथान्यस्यान्याकारतया प्रतीतत्वम्, तदपि न। विपरीतख्यातेरपि त्वयाऽनभ्युपगमात्। अथानिर्वचनीयत्वरूपं मिथ्यात्वं सिषाधयिषितम्। तदापि चन्द्रद्वित्वे तदभावात्साध्यविकलत्वमुदाहरणस्य। न हि चन्द्रद्वित्वमनिर्वचनीयत्वेन प्रतिपन्नमस्त्यनिर्वचनीयख्यातिमन्यान्यानप्रवर्तके विकुण्ठितत्वात्। प्रत्यक्षबाधितत्वं च पक्षस्य दोषः अनुष्णस्तेजोऽवयवत्वादिवत्। तथाहि सन् घटः सन् पट इत्याद्युल्लेखवता प्रत्यक्षेण प्रपञ्चस्य सत्यत्वमेव प्रतीयते न हि घटादेः पृथक् प्रपञ्चो नाम कश्चिदस्ति। ननु पक्षस्य प्रत्यक्षबाधितत्वमसमंजसं प्रपञ्चान्तर्गतत्वेन प्रत्यक्षस्य तत्रापि मिथ्यात्वस्य साध्यमानत्वात्। न च मिथ्यारूपेण तेन किमपि बाधितुं शक्यमतिप्रसक्तेः। ततश्च यथानुमानमिथ्यात्वं साधयन्तं लोकायतं प्रत्यनुमानबाधा नोपपन्ना तथा प्रपञ्चान्तर्गतत्वेन प्रत्यक्षमिथ्यात्वं साधयन्तं मायावादिनं प्रति प्रत्यक्षबाधापीति चेत्। न। त्वदीयानुमानस्यापि प्रत्यक्षवत् प्रपञ्चान्तर्गतत्वेन मिथ्यात्वात्प्रस्तुतसाध्यसाधकत्वानुपपत्तिप्रसक्तेः। अथैवमभिधीयते प्रपञ्चमिथ्यात्वप्रसाधकं ह्यनुमानमेव सन् घटः सन् पट इत्यादिप्रत्यक्षप्रतीतिं बाधते

तत्कथं पक्षस्य प्रत्यक्षबाधितत्वमिति । तन्न वाच्यम् । इतरेतराश्रयप्रसङ्गात् । प्रपञ्चग्राहिणि प्रत्यक्षे बाधिते सत्यस्यानुमानस्य प्रसवः प्रस्तुते चास्मिन्ननुमानेऽनेनप्रत्यक्षबाधितत्वम् । किं च लिङ्गजत्वमात्रमिन्द्रियजत्वमात्रं वा न बाधकत्वे प्रयोजकमपि त्वनन्यथासिद्धत्वमेव । यत् खल्वन्यथासिद्धं तदनन्यथासिद्धेन बाध्यतेऽनन्यथासिद्धं चात्रेन्द्रियजं विज्ञानमतो मिथ्यात्वानुमानं बाधत एव । नन्वेवमनुमानमपि प्रत्यक्षं बाधेत विशेषाभावात् । इदमतिपरिफल्गु । विशेषाभावासिद्धेः । अन्यथासिद्धत्वलक्षणस्य विशेषस्य प्रस्तुतानुमाने विद्यमानत्वात् । तथाहि प्रतीयमानस्य प्रकृतहेतोः प्रपञ्चाख्ये धर्मिणि सत्यत्वेनैवान्यथानुपपत्तिर्न पुनर्मिथ्यात्वेन । यदि हि घटादिप्रपञ्चो मिथ्यारूपः स्यात्तदा कथं नाम स्वविषयां प्रतीतिं जनयेत् । न खलु मिथ्याभूतं निशीथिनीनाथद्वित्वादिकं कस्याश्चित् प्रतीतेर्जनकत्वेन सम्मतं विदुषाम् । प्रतीतिजनकत्वाभावे च प्रपञ्चस्य प्रतीयमानत्वमपि न स्यात् । तच्चेदङ्गीक्रियते तर्हि तद्व्यापकं सत्यत्वमपि प्रपञ्चस्य किन्नाङ्गीकरणीयम् ततः सत्यत्वेनैवान्यथानुपपन्नः प्रतीयमानत्वाख्यो हेतुर्न मिथ्यात्वेनेत्यन्यथासिद्धमिदं प्रपञ्चमिथ्यात्वानुमानम् । न चैवं सन् घटः सन् पट इत्याद्युल्लेखवतः प्रपञ्चसत्त्वग्राहकस्य प्रत्यक्षस्यान्यथासिद्धिरस्ति । गत्यन्तराभावात् । न खलु प्रपञ्चस्य मिथ्यात्वे प्रत्यक्षस्य कथञ्चिदुत्पत्तिः सम्भविनी । मिथ्यारूपस्य कस्यचित्काञ्चिदपि प्रतीतिं प्रति न जनकत्वमित्युक्तत्वात् । तदेवमनन्यथासिद्धमिदं प्रत्यक्षमेव प्रपञ्चमिथ्यात्वानुमानमन्यथासिद्धं बाधते । ततः सिद्धं पक्षस्य प्रत्यक्षबाधितत्वम् । विवादास्पदीभूतः प्रपञ्चो मिथ्या न भवति असद्विलक्षणत्वाद्य एवं स एवं यथात्मा तथा चायं तस्मात्तथेत्यनुमानबाधितत्वं च । प्रतीयमानत्वं च हेतुत्वेनाभिमतं भवतः किं प्रतिभास्यत्वमात्रमाहोस्वित्प्रतीतिजनकत्वेन प्रतिभास्यत्वस्य प्रपंचे भवतानभ्युपगमात् । अनैकान्तिकत्वं च, यस्मादात्मनः प्रतीतिजनकत्वेनाभ्युपगमात् प्रतिभास्यत्वमस्ति न च मिथ्या-

त्वम् । तस्य मिथ्यात्वे वा स्वसिद्धान्तविरोधापत्तिः । साधनविकलत्वं चात्र पक्षे दृष्टान्तस्य । उदाहरणीकृते निशीथिनीनाथद्वित्वे प्रतीतिजनकत्वेन प्रतिभास्यत्वस्य साधनस्याभावात् । न हि मिथ्यारूपं चन्द्रद्वित्वं कस्यचिदपि ज्ञानस्य जनकत्वेन प्रतीतमपि त्वेकत्वमेव शुद्धाशोस्तथाविधदोषसामग्रीसमवधानसामर्थ्याद्वित्वोल्लेखिनी धियमुपजनयतीत्यवोचाम विपरीतख्यातिविचारावसरे । विरुद्धत्वं चास्य हेतोः, साध्यविपरीतसाधनात् । तथाहि विवादाधिरूढः प्रपञ्चो मिथ्या न भवति प्रतीतिजनकत्वे सति प्रतिभास्यत्वाद् इत्थं स इत्थं यथात्मा तथा चायं तस्मात्तथेति । अपि च किं सम्यक्प्रतीयमानत्वं साधनत्वेन विवक्षितं मिथ्याप्रतीयमानत्वं वा । प्रथमपक्षे वाद्यसिद्धत्वं हेतोः । सम्यक्प्रतीयमानत्वस्य प्रपञ्चे त्वयानभ्युपगमात् । अभ्युपगमे वा विरुद्धत्वं स्यात् सम्यक्प्रतीयमानत्वस्य सत्यत्वेनैवाविनाभूतत्वात् । द्वितीयपक्षे पुनः प्रतिवाद्यसिद्धित्वम् । मिथ्याप्रतीयमानत्वस्य प्रपञ्चे स्याद्वादिभिरनङ्गीकरणादिति । इदं च पर्यनुयोज्यो भवान्किमेतदनुमानं प्रपञ्चाद्भिन्नमभिन्नं वा । यदि भिन्नम्, तर्हि सत्यमसत्यं वा, यदि सत्यम्, तदा तद्दृष्टान्तबलेन प्रपञ्चस्यापि सत्यत्वं स्यात् । अनुमानस्यापि हि सत्यत्वं प्रतीयमानत्वादेव भवद्भिरभ्युपेयं तच्च प्रपञ्चेऽप्यविशिष्टमिति कथं स न सत्यः स्यात् । अथासत्यम्, तत्रापि शून्यमन्यथाख्यातमनिर्वचनीयं वा । आद्यपक्षद्वये न साध्यसाधकत्वं सम्भवति । नृशृङ्गवच्छुक्तिकाकलधौतवच्च । तृतीयपक्षोऽपि न श्रेयान् । अनिर्वचनीयत्वस्य प्रपञ्चतः प्रागेव प्रतिहतत्वात् । व्यवहारसत्यमिदमनुमानमतोऽसत्यत्वाभावात् स्वसाध्यसाधकमिति चेत् किमिदं व्यवहारसत्यं नाम । व्यवहृतिर्व्यवहारो ज्ञानं तेन च सत्यं तर्हि पारमार्थिकमेतत् । ज्ञानजनकत्वेनार्थक्रियाकारित्वात् पारमार्थिकत्वे चाऽस्यैतद्दृष्टान्तबलेनैव प्रपञ्चस्यापि पारमार्थिकत्वं दुःप्रतिषेधं स्यात् । अथ व्यवहारः शब्दस्तेन सत्यं व्यवहारसत्यमिति ब्रूषे । ननु शब्दोऽपि सत्यस्वरूपस्त-

दितरो वा । सत्यस्वरूपश्चेत्, तर्हि तेन यत्सत्यं तत्पारमार्थिकमेव । तत्र चोक्तो दोषः । अथासत्यस्वरूपश्शब्दः, कथं ततस्तस्य सत्यत्वं नाम। नहि स्वयमसत्यमन्यस्य सत्यत्वव्यवस्थापनहेतुरतिप्रसङ्गात् । अथ कूटकार्षापणे सत्यकार्षापणोचितक्रयविक्रयव्यवहारजनकत्वेन सत्यकार्षापणव्यवहारवदसत्येऽप्यनुमाने सत्यव्यवहार इति चेत् । तर्हि सत्यमेव तदनुमानम् । तत्र चोक्तो दोषः । अतो न प्रपञ्चाद्भिन्नमनुमानं कथमप्युपपद्यते । नाप्यभिन्नम् । प्रपञ्चस्वभावतया तस्यापि मिथ्यात्वप्रसक्तेर्मिथ्यारूपं[1] तत्कथं मानं स्वसाध्यं साधयेदित्युक्तमेव ।

तस्मादेवं यत्प्रपञ्चानृतत्वे साध्ये साधो प्रत्यपादि प्रमाणम् ॥
तस्मिन् साध्यं साधनं चेति सर्वं प्रत्याख्यातं प्रोक्तयुक्तिप्रबन्धात् ॥२२४॥

अद्वैतवादिसंमतानुमानान्तरखण्डनम् ।

यान्यपि परैरपराणि प्रपञ्चगोचराण्यनुमानानि ख्याप्यन्ते । विवादगोचरापन्नः प्रपञ्चः सन्न भवति प्रतीयमानत्वादृश्यत्वाद्वा यथा चन्द्रद्वैतरूप्यम् । तथा प्रपञ्चो मृषा सत्त्वासत्त्वाभ्यामनिर्वाच्यो वाऽनात्मत्वाज्जडत्वादुत्पत्तिमत्त्वाद्विनाशित्वाद्वा यत्पुनर्मृषा न भवति सत्त्वासत्त्वाभ्यामनिर्वाच्यं न भवति तन्न यथोक्तानात्मत्वादिसाधनाधिकरणं यथात्मतत्त्वमित्यादीनि । तत्र तावत्पक्षस्य प्रत्यक्षबाधितत्वमनुमानबाधितत्वं च सर्वत्राप्यविशिष्टं द्रष्टव्यम् । तथा हि सन् घटः सन्पट इत्याद्युल्लेखवता निर्बाधप्रत्यक्षेण प्रपञ्चस्य सत्त्वं, सत्यत्वं, निर्वाच्यत्वं च प्रतीयते न पुनरसत्त्वं, मृषात्वमनिर्वाच्यत्वं चेति व्यक्तं पक्षस्य प्रत्यक्षबाधितत्वम्। तथा विवादास्पदः प्रपञ्चः सद्रूपस्तथा सत्यः सत्त्वासत्त्वाभ्या निर्वाच्यश्चासद्विलक्षणत्वाद्यदेवं तदेवं यथात्मतत्त्वमसद्विलक्षणश्च प्रपञ्चस्तस्माद्यथोक्तसाध्यत्रयसम्पन्न इत्यनुमानबाधितत्वं च । प्रपञ्चासत्त्वप्रतिज्ञायां च प्रतीयमानत्वदृश्यत्वलक्षणं हेतुद्वयं पूर्वोक्तानुमानहेतुवद्विदुषा स्वयमभ्यूह्य दूषणीयम् । शेषाश्चा-

---

१ 'स्वरूपं' इति प म. पुस्तकयोः पाठः ।

नात्मत्वादयो हेतवः सर्वेऽप्यन्यथानुपपत्तिशून्यत्वेन व्यभिचारित्वान्न स्वसाध्यसमर्थनासामर्थ्यभाजो भवितुमर्हन्ति। न खलु मृषात्वानिर्वचनीयत्वाभ्यां सार्द्धमनात्मत्वजडत्वोत्पत्तिमत्त्वविनाशित्वादिहेतूनामन्यथानुपपत्तिः केनापि प्रमाणेन प्रतीयते। सत्यत्वनिर्वचनीयत्वाभ्यां सह तेषां विरोधाप्रतिपत्तेः। तथा सर्वेऽप्यमी हेतवः किमसद्रूपाः सद्रूपा वा, असत्याः सत्या वा, अनिर्वचनीया निर्वचनीया वा । असद्रूपासत्यानिर्वचनीयपक्षेषु प्रतिवाद्यसिद्धत्वं हेतूनाम्। अनेकान्तवादिभिस्तथानङ्गीकरणात् । सद्रूपसत्यनिर्वचनीयपक्षेषु पुनर्वाद्यसिद्धत्वम् । तेषां प्रपञ्चान्तर्गतत्वेन हेतूनामप्यसद्रूपतया मृषारूपतयाऽनिर्वचनीयतया च भवता स्वीकरणात् । तथारूपतया तेषामस्वीकरणे वा तद्दृष्टान्तबलेनैव विवक्षितप्रपञ्चस्यापि सद्रूपत्व सत्यत्वं निर्वचनीयत्वं च प्रसज्यमानं केन वार्येत। विशेषाभावात्। तथैतान्यनुमानानि प्रपञ्चाद्भिन्नान्यभिन्नानि वा। भिन्नान्यपि सत्यान्यसत्यानि वा प्रपञ्चाख्योऽपि धर्म्मी प्रसिद्धोऽप्रसिद्धो वेत्यादि सर्वमत्रापि प्राग्वत् कुशाग्रीयमतिना चिन्तनीयमिति ।

तस्मात् अत्र ब्रह्मवादिन्निदानीं मूलादेव क्षिप्तमेतत्त्वदुक्तम् ।
यत्नि.शेषा युक्तिवीथी त्वदीया शान्ति नीता कीर्त्तिता च स्वकीया।२२५॥

एवं च—

ज्ञानाद्वैतं निरस्तं तदनु विदलितश्चित्रविज्ञानवादः
शून्यं निर्लूनमस्याप्युपरि परिहृताऽनन्तरं ब्रह्मवार्त्ता ।
तस्मादुद्दामयुक्तिव्यतिकरकलितस्तत्र यल्लोकयात्रा
स्तम्भादिस्तात्त्विकोऽयं जयति भुवि परव्यानवाच्य.पदार्थः।२२६॥१६॥

इदानीं प्राक्प्रतिज्ञातं स्वव्यवसायित्व ज्ञानविशेषणं व्याख्यानयन्नाह—

**स्वस्य व्यवसायः स्वाभिमुख्येन प्रकाशनं बाह्यस्येव तदाभिमुख्येन करिकलभकमहमात्मना जानामीति इति ॥ १७ ॥**

स्वस्य प्रमाणत्वेनाभिमतस्य ज्ञानस्वरूपस्य सम्बन्धी व्यवसायः । क उच्यत इत्याह । स्वस्य विज्ञानस्वरूपस्याभिमुख्यमुन्मुख्यता स्वाभिमुख्यं तेन स्वाभिमुख्येन स्वानुभवनेन प्रकाशनं प्रतिभासनं यत्स इति । स्वव्यवसायसमर्थनार्थं बाह्यार्थव्यवसायं स्वपरप्रसिद्धं बाह्यस्येवेत्यादिना दृष्टान्तीकरोति । यथा बाह्याभिमुख्येन प्रकाशनं बाह्यव्यवसायो ज्ञानस्य तथा स्वाभिमुख्येन प्रकाशनं स्वस्य व्यवसायः । उल्लेखमाह । करिकलभकमिति प्रमेयस्य अहमिति प्रमातुर्ज्ञानामीति प्रमितेः प्रतिभासस्तथात्मनेति प्रमाणाभिमतज्ञानस्यापि । इदमत्र हृदयम् । ज्ञानान्तरानपेक्षं यत्स्वरूपप्रकाशनं तदिह स्वव्यवसायित्वं वादिप्रतिवादिभ्यां ज्ञानस्याभिमतं परव्यवसायित्वान्यथानुपपत्तेः ।

ज्ञाने स्वव्यवसायित्वप्रसाधकमनुमानमुपदर्शित तत्र दूषणोद्धारः ।

तथाहि ज्ञानं स्वव्यवसायि परव्यवसायित्वात् यत्तु स्वव्यवसायि न भवति न तत्परव्यवसायि यथा स्तम्भादि परव्यवसायि च ज्ञानं ततः स्वव्यवसायीति । न तावदत्र हेतुरसिद्धः । परव्यवसायित्वस्य ज्ञाने वादिप्रतिवादिभ्यां प्रतिपन्नत्वात् । नापि स्वरूपमात्रव्यवसायव्याप्ते सुखादिज्ञाने परव्यवसायित्वाभावान्निखिलपक्षाव्यापकतया भागासिद्धोऽयं हेतुरिति शङ्कनीयम् । सुखादिसंवेदनस्यापि स्वस्मात्पृथग्भूतस्य सुखादेः परिच्छेदकत्वात्परव्यवसायित्वसिद्धेः । न च कुम्भादिवेदनस्यापि सर्वथा स्वपृथग्भूतार्थपरिच्छेदकत्वम् । सत्त्वप्रमेयत्ववस्तुत्वादिरूपेण कुम्भादेः संवेदनाभेदप्रतीतेः । अन्यथा तस्यासत्त्वप्रसक्तेः । कथञ्चित् पृथग्भूतत्वं तु सुखादिसंवेदनात्सुखादेरपि प्रतीयत एव । सुखादितत्संवेदनयोः कारणा[1]दिभेदव्यवस्थितेः । यथा च तयोः कारणादिभेदः सम्भवति तथाऽधस्तादेव चित्रविज्ञानवादविचारे विवेचितम् । नन्वेवं कुम्भादिज्ञानवत्सुखादिज्ञानस्यापि बहिर्भूतार्थपरिच्छेदकत्वात्ताभ्यामन्यस्य च विज्ञानस्यासम्भवात्किं स्वस्य संवेदकं ज्ञानं स्या-

१ ‘ भेदात् ’ इत्यधिक प. पुस्तके ।

दिति चेत् । न । तस्यैव कुम्भादिसुखादिज्ञानस्य स्वरूपसंवेदकस्य सतः परसंवेदकत्वोपगमात् स्वसंवेदनसिद्धेः । स्वपरव्यवसायकत्वान्निखिलवेदनस्य ततः सुखादिज्ञानस्यापि परव्यवसायित्वसिद्धेर्नायं भागासिद्धो हेतुः । नाप्यनैकान्तिकः । स्तम्भादेर्विपक्षात् स्वसाध्यव्यावृत्तौ परव्यवसायित्वहेतोरप्यत्यन्तं व्यावृत्तत्वात् । विरुद्धोऽपि नासौ साध्यविपर्ययान्यथानुपपन्नत्वं हि तल्लक्षणं न चात्र तदस्तीति ॥१७॥

स्वव्यवसायित्वमेव ज्ञानस्य स्पष्टदृष्टान्तोपदर्शनेन सावष्टम्भं समर्थयमानः प्राह—

**कः खलु ज्ञानस्यालम्बनं बाह्यं प्रतिभातमभिमन्यमानस्तदपि तत्प्रकारं नाभिमन्येत मिहिरालोकवदिति ॥ १८ ॥**

क. खलु लौकिकः परीक्षको वा । ज्ञानस्यालम्बनं गोचरम् । बाह्यं ज्ञानाद्बहिर्भूतम् । प्रतिभातं परिस्फुरितं प्रकटीभूतमिति यावत् । अभिमन्यमानः स्वीकुर्वाणः । तदपि ज्ञानमपि । स प्रतिभातत्वलक्षणः प्रकारः प्रतिनियतं स्वरूपं यस्य तत्तत्प्रकारं प्रतिभातमित्यर्थः । नाभिमन्येत किं तर्हि प्रतीतिमनुसरन्नभिमन्येतैव । किमिवेत्याह । मिहिरालोकवत् मार्त्तण्डालोकमिव । यथैव हि गिरिनगरगहनादिकं मिहिरालोकस्य विषयं प्रतिभातमभिमन्यमानैस्तैर्ज्ञानमपि प्रतिभातं स्वीकर्त्तव्यमित्यर्थः ।

अत्राहुर्जैमिनीयाः ।

जैमिनीयमतस्योपपादनपूर्वकं खण्डनम्।

अये भवानत्र यथा कथञ्चित्
स्वमन्दिरे गायतु मङ्गलानि ॥
विचार्यमाणं तु न वेदनस्य
स्वसंविदात्मत्वमुपैति युक्तिम् ॥ २२७ ॥

---

१ 'प्रतिभातमभिमन्यमानैर्मिहिरालोकोऽपि प्रतिभातोऽभिमन्यते लौकिकपरीक्षकैस्तद्ज्ञानस्य विषयं प्रतिभात इत्यादि कुम्भादिकं' इत्यधिक चिह्नान्तर्गतं म. पुस्तके ।

कर्मत्वेनाप्रतीयमाने हि तस्मिन्परोक्षत्वमेवोपपद्यते । तथाहि ज्ञानं परोक्षं कर्मत्वेनाप्रतीयमानत्वात् । न खलु स्तम्भादिभाववत्कर्म्मत्वेन ज्ञानं स्वप्नेऽपि प्रतिभासते । प्रतिभासने वा करणात्मनो ज्ञानान्तरस्य परिकल्पना प्रसज्येत । तस्यापि प्रत्यक्षत्वे करणात्मकं ज्ञानान्तरं परिकल्पनीयमित्यनवस्था दुर्निवारा स्यात् । तस्याप्रत्यक्षत्वेऽपि करणत्वे प्रथमज्ञाने किं दुश्चरितमालोचितं चेतस्विना । येनास्य परोक्षत्वे करणत्वं नानुमन्यते । तस्मादेतद्दोषसंश्लेषमनभिलषता ज्ञानस्य स्वव्यवसायित्वमुपेक्ष्य प्रतीत्यनुल्लङ्घनेन परोक्षरूपतैव स्वीकर्त्तव्या । इन्द्रियार्थसंप्रयोगादिसामग्रीतो हि क्रियास्वभावमात्मनि ज्ञानमुपजायमानं नित्यपरोक्षरूपमेवोपजायत इति ।

मीमांसकैरेवमवादि बुद्धि-पारोक्ष्यसिद्धावनुमाप्रमाणम् ॥
एषा च दोषैर्व्यभिचारमुख्यैः कलङ्किता भाति यतीश्वराणाम् ॥२२८॥

तथा ह्यस्यामनुमायां कर्म्मत्वेनाप्रतीयमानत्वाख्यस्य हेतोरात्मना प्रमाणफलेन च व्यभिचारित्वं तावत्कर्म्मत्वेनाननुभूयमानयोरप्यनयोः प्रत्यक्षत्वेनाङ्गीकरणात् । यदि पुनरेतयोः कर्म्मत्वेनाननुभूयमानयोरपि कर्तृत्वेन प्रमाणफलत्वेन वानुभूयमानत्वात् प्रत्यक्षत्वमनुमन्यते । तर्हि प्रमाणत्वेनाभिमतस्य ज्ञानस्य कर्म्मत्वेनाननुभूयमानस्यापि करणत्वेनानुभूयमानत्वात्प्रत्यक्षत्वमनुमन्यतां विशेषाभावात् । अथ करणत्वेनानुभूयमानं ज्ञानं करणमेव स्यान्न प्रत्यक्षम् । तर्हि कर्तृप्रमाणफलरूपतयानुभूयमानयोरात्मप्रमाणफलयोः कर्तृप्रमाणफलरूपतैव स्यान्न प्रत्यक्षत्वमित्यप्यस्तु । तुल्याक्षेपसमाधानत्वात् । अपि चात्मनः प्रत्यक्षत्वे परोक्षज्ञानकल्पनायाः किं फलम् । आत्मन एव स्वरूपवद्बाह्यार्थग्राहकत्वप्रसिद्धेः । अथ कर्त्तुः करणमन्तरेण क्रियायां व्यापारासम्भवात्करणभूतपरोक्षज्ञानकल्पना न निष्फलेत्युच्यते । तदप्यसाधीयः । मनसश्चक्षुरादेश्चान्तर्बहिःकरणस्य सद्भावात्ताभ्यां ज्ञानस्य परोक्षत्वेन विशेषाभावाच्च । अथ मनश्चक्षुरादिकायादेर-

चेतनत्वात् ज्ञानाख्यं करणं चेतनत्वेन ताभ्यां विशिष्यत इत्युच्यते । तदप्यनुपपन्नम् । भावरूपयोरिन्द्रियमनसोरपि चेतनत्वात् । तत्परोक्षत्वसाधने च सिद्धसाधनम् । स्वार्थग्रहणशक्तिलक्षणाया भावेन्द्रियमनःस्वभावाया लब्धेरर्वाग्दर्शिनामप्रत्यक्षत्वात् । उपयोगलक्षणं तु भावकरणमप्रत्यक्षं न जातुचिद्भवति । स्वार्थग्रहणव्यापारलक्षणस्यास्य स्वसंवेदनप्रत्यक्षप्रसिद्धत्वात् । चक्षुरादिद्वारेणोपयुक्तोऽहं घटं पश्यामीत्युपयोगस्वरूपसंवेदनस्य सर्वेषामपि प्रसिद्धत्वात् । क्रियायाः करणाविनाभावित्वे वात्मनः स्वसंवित्तौ किं करणं स्यात् । स्वात्मैवेति, तदर्थेऽपि स एवास्तु किमदृष्टान्यकल्पनया । स्वात्मनः करणतायामात्मनः शाश्वतत्वाच्छश्वदर्थप्रकाशानुषङ्ग इति चेत् । तत एव तस्य स्वसंवेदनं कुतो न शाश्वतम् । तस्य तद्धर्मत्वादिति चेत्, बहिरर्थप्रकाशनमपि तत एव शाश्वतं माभूत् । कथं तर्हि शाश्वतयोरात्मज्ञानयोर्धर्म्मधर्म्मिभावः पुरुषस्वसंवेदनयोरपि भेदोपगमादिति चेत् इतरत्रापि तुल्यमेतत् । सर्वत्र धर्म्मधर्म्मिणोर्भेदाभेदात्मकतायामविवादात् । स्वसंवेदनमपि पुरुषस्य शाश्वतमिति चेत् । न । श्रोत्रियमतव्याघाताद्देशादिप्रतिनियमानुपपत्तेश्च । यदि पुनरभिव्यञ्जकप्रत्ययवशात्तदभिव्यक्तिप्रतिनियमस्तदा पुरुषस्य शाश्वतार्थप्रकाशनप्रतिनियमोऽपि तथैव स्यात् । किं चैवं सति न किंचिदनित्यमसर्वगतं वा नाम स्यात् । अभिव्यञ्जकवशादेव सर्वस्य देशादिनियमोपपत्तेर्यतः कपिलमतसिद्धिर्न भवेदिति स्वपरप्रकाशके पुरुषे सत्यपार्थकं परोक्षज्ञानपरिकल्पनम् । परोक्षेण चक्षुरादिनैव प्रयोजनसिद्धेस्ततश्चक्षुरादिभ्यो विशेषमिच्छता करणज्ञानस्य कर्म्मत्वेनाप्रतीयमानस्यापि प्रत्यक्षत्वमङ्गीकर्त्तव्यम् । किं चात्मप्रमाणफलाभ्यां सकाशात्करणज्ञानस्य सर्वथा भेदः कथंचिद्वा । न तावत् सर्वथा । मतान्तरप्रसक्तेः । न खलु धर्मधर्मिणोर्भवन्मतेऽपि सर्वथा भेदोऽभ्युपेयते । अथ कथञ्चिद्भेदः । तर्हि न करणज्ञानस्यैकान्तेनाप्रत्यक्षत्वम् । प्रत्यक्षस्वभावाभ्यामात्मप्रमाणफलाभ्यामभिन्नस्य तस्यैकान्ततोऽप्रत्यक्षत्ववि-

रोधात् । अपि च समस्तप्रमाणापेक्षया ज्ञानस्य कर्मत्वेनाप्रतीयमानत्वं हेतुत्वेनाभिमतं स्वरूपापेक्षया वा । यदि समस्तप्रमाणापेक्षया, तदा सत्त्वमपि ज्ञानस्य दुःप्रापं स्यात् । तथाहि यत् समस्तप्रमाणापेक्षया कर्म न भवति न तत्सद्व्यवहारसरणिमनुसरति यथा तुरङ्गशृङ्गं समस्तप्रमाणापेक्षया न भवति च कर्म ज्ञानमिति । एवं ज्ञेयेऽपि कः समाश्वासः स्यात् ज्ञाननिबन्धनत्वात् ज्ञेयव्यवस्थितेरित्यनभिलषतोऽपि निखिलशून्यतावादः समायात इति साधुसाधितं बुद्धेः पारोक्ष्यं श्रोत्रियेण । अथ शून्यतापक्षो न क्षोदं क्षमेत् । तर्हि ज्ञानस्याप्रत्यक्षत्वेऽपि प्रमाणान्तरात् प्रतीतिरवश्यमूरीकर्त्तव्येति समस्तप्रमाणापेक्षया कर्मत्वेनाप्रतीयमानत्वादित्यस्य हेतोरसिद्धत्वम् । अथ स्वरूपापेक्षया कर्मत्वेनाप्रतीयमानत्वम् । तदप्यनुभवेन प्रतिहन्यमानत्वादनुचितम् । सकलजगत्प्रतीतौ हि स्तम्भग्राहिज्ञानं ततोऽहमनुभवामीत्यनुभवस्तस्माच्च प्रसिद्धं ज्ञाने स्वरूपापेक्षया कर्मत्वं कथं नामापह्नोतु शक्यते । ततश्च स्वरूपापेक्षया कर्मत्वेनाप्रतीयमानत्वादित्यत्रापि पक्षे हेतोरसिद्धत्वमेव दोषः । एतेन प्रतिभासने वा करणात्मनोर्ज्ञानान्तरस्येत्यादिना याऽनवस्थोक्ता सापि प्रत्युक्ता । स्वरूपापेक्षयैव ज्ञाने कर्मत्वप्रतिभासस्य समर्थितत्वात् । किं च प्रतीतिसिद्धमपि ज्ञाने प्रत्यक्षत्वं कर्मत्व च यद्यपलप्यते तथार्थेऽपि प्रत्यक्षत्वकर्मत्वयोः कः समाश्वास इति कथमर्थस्य व्यतिरेकदृष्टान्तत्वेनोपादानं स्यात् । प्रसङ्गविपर्ययाभ्यां च ज्ञानस्य प्रत्यक्षत्वं प्रतीयते । तथाहि यत्परोक्षं न तत्स्वोपधानेनाप्युपलम्भयति यथेन्द्रियम् । परोक्षं च भवद्भिः परिकल्पित ज्ञानमिति प्रसङ्गः । विपर्ययस्तु यत्स्वाकारोपहितमाकारान्तरमुपलम्भयति तत्परोक्षं न भवति प्रत्यक्षं वा भवति यथा प्रदीपाद्यालोकः । उपलम्भयति च ज्ञान स्वाकारोपहितं नीलादिकमिति । एवं च ।

---

१ 'उररीकर्त्तव्या' इति प. पुस्तके पाठः । २ 'तदा' इति प. म. पुस्तकयोः पाठः । ३ 'प्रत्यक्ष वा भवति' इति प. पुस्तके नास्ति ।

आत्मप्रतीतिं परिमुच्य जातु वस्तुप्रतीतिर्न समस्ति बुद्धया ॥
त्यजन्निदं वल्गु विचारतत्त्वं नाम्नैव **मीमांसक**[1] एष वादी ॥ २२९ ॥

अपि च ज्ञानस्य स्वसंवेदनप्रत्यक्षाविषयत्वे कुतस्तत्सत्ता प्रतीयेत । प्रत्यक्षान्तरादनुमानादर्थापत्तेर्वा । न तावत्प्रत्यक्षान्तरात्, **कणभक्षाक्षपादपक्षकक्षीकारानुषङ्गात्**। नाप्यनुमानात्, यतस्तत्र लिङ्गं चक्षुरादीन्द्रियमर्थस्तदतिशयस्तत्सम्बन्धस्तत्र प्रवृत्तिर्वा स्यात् । यदि चक्षुरादीन्द्रियम्, तर्हि तदपि निर्विशिष्टं विशिष्टं वा ज्ञानस्य गमकं भवेत् । यदि निर्विशिष्टम्, तदा सुप्तमत्तमूर्च्छितान्यत्रगतचित्तावस्थास्वपि ज्ञानं वद्गमयेत्तत्सत्तायास्तत्राप्यविशेषात् । अथ विशिष्टम्, ननु केन विशेषणेन विशिष्टत्वमिन्द्रियस्य, किमनावरणत्वेन प्रगुणमनःसहकृतत्वेन वा । न तावदनावरणत्वेन, तस्य प्रत्यक्षतः प्रत्येतुमशक्यत्वादप्रतीतस्य च हेतुविशेषणत्वे विशेषणासिद्धो हेतुः स्यात् । अथ विषयपरिच्छित्त्याऽनावरणेन्द्रियसिद्धिः । तर्हि परस्पराश्रयः । तथाहि विषयपरिच्छित्तिर्ज्ञानं तत्सिद्धावनावरणत्वविशेषणविशिष्टमिन्द्रियं सिद्धयति तथाभूतेन्द्रियसिद्धौ च विषयपरिच्छित्तिः सिद्धयतीति । एतेन च प्रगुणमनःसहकृतत्वमपीन्द्रियविशेषणं दूषितम् । मनसोऽतीन्द्रियस्य प्रगुणत्वधर्मोपेतस्य विषयपरिच्छित्तिं परित्यज्यान्यतः प्रत्येतुमशक्यत्वाविशेषात्तत्र च परस्पराश्रयदोषप्रसङ्गात् । अथार्थो बुद्धेर्लिङ्गम् । सोऽपि सत्तामात्रेण तत्स्याज्ज्ञातत्वविशेषणविशिष्टो वा । न तावदाद्यः पक्षः । तथाभूतस्यार्थस्य बुद्धयव्यभिचारित्वाभावात् । न वै यत्र यदा सत्तामात्रसमर्थस्य तत्र तस्माद्बुद्धिरनुमातुं शक्यते । तां विनाप्यर्थस्य सम्भवतस्तया सहान्यथानुपपत्तेरभावात् । यदि च सत्तामात्रेणार्थस्यानुमापकत्वमिष्यते । तदा सर्वार्थसत्तायाः सर्वपुरुषान्प्रत्यविशिष्टत्वात्सर्वबुद्धयनुमानं स्यात् । अथ ज्ञानत्वविशेषणविशिष्ट इति द्वितीयः पक्षः, न[2] तत्रापि ज्ञानत्वेन[3] ज्ञातो-

---

१ मीमांसकपदेन पूज्यविचारकारित्वं बोध्यते । अत्र तु पूज्यविचारकारित्वाभावात् अपवार्य मीमांसक इति नाम । २ ' तदा ' इत्यधिकं प. म. पुस्तकयोः पाठः । ३ ' ज्ञातत्वेन ' इति प. म. पुस्तकयोः पाठः ।

ऽज्ञातो वाऽर्थो बुद्धेर्गमकः स्यात् । अज्ञातस्य तद्गमकत्वे सर्वं सर्वस्य गमकं स्यादविशेषात् । अथ ज्ञातः, किं तत एव [1]गम्यज्ञानात् ज्ञानान्तराद्वा । तत एव चेत्, तर्हि परस्पराश्रयः । सिद्धे हि ज्ञातत्वविशिष्टेऽर्थे ततो ज्ञानसिद्धिस्तत्सिद्धौ चार्थस्य ज्ञातत्वसिद्धिरिति । अथ ज्ञानान्तराज्ज्ञातत्वज्ञप्तिः तर्ह्यनवस्था । अथार्थातिशयो लिङ्गम् । ननु कोऽयमर्थस्यातिशयो नाम । प्राकट्यमिति चेत् ।

अहो चिराय प्रकटीचकार **मीमांसकः** स्वीयरहस्यमेतत् ॥
विचारचूलामवलम्बमानं विलोकयन्त्वेतदपीह सन्तः ॥ २३० ॥

प्राकट्यं हि ज्ञानं प्रकाशतामात्रं वा स्यात् । यदि ज्ञानम्, तदा तस्यासिद्धत्वात् कथं लिङ्गत्वम् । न च स्वरूपासिद्धौ स्वरूपस्यैव लिङ्गत्वं क्वापि प्रतिपन्नं येनात्रापि तथा कल्प्येत । अथ प्रकाशतामात्रं प्राकट्यम्, तत्किं सर्वप्रमातॄणां साधारणमसाधारणं वा । यदि साधारणं, तदा सर्वदा सर्वान्प्रत्ययमविशेषेणैवार्थः प्रतिभासेत न तु कदाचित्कंचन प्रति । प्रकाशतामात्रस्य सर्वान्प्रत्यविशिष्टत्वात् । अथासाधारणम्, ततश्चायमर्थः सम्पन्नो यस्येन्द्रियेणोपकृतोऽसाधारणप्रकाशताख्यातिशयवानर्थः सम्पन्नस्तस्यैव प्रतिभासते नापरेषामिति । तदप्ययुक्तम् । न हि नीलपीताद्यर्थधर्म्मो येनैव जन्यते तस्यैव तद्विशिष्टोऽर्थः प्रतिभासत इति नियमो दृश्यते । अपि चेयं प्रकाशताऽर्थादव्यतिरिक्ता व्यतिरिक्ता वा भवेत् । यद्यव्यतिरिक्ता, तदार्थ एव सा । अर्थस्य च सदा सत्त्वात्प्रकाशतया अपि सदा सत्त्वापत्तेः समस्तं विश्वं सदा सर्वज्ञमकिंचिज्ज्ञं वा भवेत् । अथ व्यतिरिक्ता, तदेवमर्थेन सम्बद्धा वा स्यादसम्बद्धा वा । यद्यसम्बद्धा, कथमर्थस्येयमिति व्यपदिश्येत । अथ सम्बद्धा, किं तादात्म्येन तदुत्पत्त्या संयोगेन वा । न तावत्तादात्म्येन, व्यतिरेकविकल्पस्वीकृतत्वात् । नापि तदुत्पत्त्या, यतोऽर्थात्किं प्रकाशतोत्पद्यते ततो वाऽर्थः । न तावदर्थात्प्रकाशतोत्पद्यते ।

---

१ 'प्रकाशताया' इति म. पुस्तके पाठः ।

ज्ञानात्तदुत्पत्तिप्रतिज्ञानात्। नापि प्रकाशतायाः सकाशादर्थः समुत्पद्यते स्वसामग्रीतः प्रकाशतायाः पूर्वमप्यर्थस्योत्पन्नत्वात्। नापि संयोगेन प्रकाशताऽर्थेन सम्बद्धा। तस्य द्रव्यवृत्तित्वेनाद्रव्यरूपायां प्रकाशतायां सम्भवाभावात्। भवतु वा केनचित्सम्बन्धेन सम्बद्धाऽसौ, तथाप्यर्थमात्रेणैषा सम्बद्धाऽर्थविशेषेण वा। अर्थमात्रेण सम्बन्धे स एवाशेषस्य जगतोऽशेषज्ञत्वस्याकिंचिज्ज्ञत्वस्य वा प्रसङ्गः। घटस्यासीदत्र प्रकाशता इदानीं तु पटस्येति नियतदेशकालविशिष्टे प्रतिनियतेऽर्थे तद्व्यपदेशाभावश्च स्यात्। अथार्थविशेषेण, ननु कोऽयमर्थस्य विशेषो ज्ञानं प्रति जनकत्वं, आलम्बनत्वं वा। तत्रापि आद्यविकल्पोऽनुपपन्नः, ज्ञानजनकत्वादर्थेन सह प्रकाशतायाः सम्बन्धे चक्षुरादिनापि सह सम्बन्धप्रसङ्गात्। द्वितीयविकल्पे परस्पराश्रयः, अर्थस्यालम्बनत्वसिद्धौ हि प्रकाशताया अर्थविशेषेण सम्बन्धसिद्धिस्तत्सिद्धौ चार्थस्यालम्बनत्वसिद्धिरिति। तन्नार्थातिशयोऽपि ज्ञानस्य लिङ्गम्। नाप्यर्थसम्बन्धः। तस्य सम्बन्धिज्ञानपूर्वकत्वात्सम्बन्धिनौ चात्रेन्द्रियार्थौ ज्ञानार्थवतिशयार्थौ वा न ज्ञातुं शक्येते। यथा चैषां ज्ञातुमशक्तिस्तथाऽनन्तरमेवोक्तम्। अथ प्रवृत्त्या ज्ञानमनुमीयते, तर्हि निवर्त्तकस्य ज्ञानस्य कथं प्रतिपत्तिः स्यात्। प्रवृत्त्या हि प्रवर्त्तकमेव ज्ञानमनुमीयते न निवर्त्तकम्। अथ प्रवृत्तिनिवृत्तिभ्यां ज्ञानमुपकल्प्यते तर्हि तयोरभावे उदासीनस्योपेक्षणीयार्थविज्ञानं कथं कल्प्येत। तदित्थं ज्ञानेन सहान्यथानुपपन्नस्य कस्यचिल्लिङ्गस्यासम्भवान्नानुमानादपि तत्सत्ताप्रतीतिः। अथार्थापत्तेः। तथाहि। अर्थप्राकट्याख्यफलमन्यथानुपपद्यमानं आत्मन्यहंप्रत्ययग्राह्ये नित्यपरोक्षं क्रियारूपं ज्ञानमुपकल्पयति। प्रवृत्तिरप्यन्यथानुपपद्यमाना तत्परिकल्पयति। अज्ञाते प्रवृत्तिविषये प्रवृत्त्यनुपपत्तेः। न हीष्टसाधनोऽप्यर्थः स्वविषयं ज्ञानं विना स्वरूपेणैव प्रवृत्तिहेतुः। सर्वदा तत्प्रसक्तेः। न चैवमतः कादाचित्कत्वात्

1 'प्रतिनियत' इति प॰ पुस्तके पाठः।

प्रवृत्तेरर्थातिरिक्तं किंचित्कारणमस्तीत्यवसीयते । यस्मिन् सत्यर्थः प्रवृत्तियोग्यतामापद्यते तज्ज्ञानमिति । तदुक्तं शबरस्वामिना । "**अप्रत्यक्षा नो बुद्धिः प्रत्यक्षोऽर्थः स हि बहिर्देशसम्बद्धः प्रत्यक्षमनुभूयते ज्ञानं त्वनुमानादवगच्छति**" इति । अनुमानादिति अर्थापत्तेरित्यर्थः । नैतदपि न्याय्यम् । अनुमानात्पृथग्भूताया अर्थापत्तेरसम्भवादनुमानस्य चार्थप्राकट्यादेः प्रतिहतत्वात् । अपि च ज्ञानमुपजायमानं स्वानुभवेऽननुभवाद्व्यावृत्तं संवेद्यते अर्थश्चास्य विषयभावमापन्न एव संवेद्यते । अर्थमहं वेद्मीति प्रतीतेः । नित्यानुमेयत्वे च ज्ञानस्य द्वयमप्येतद्दुरुपपादम् । अर्थो हि प्रकाशमानः सर्वान्प्रति साधारण इति ज्ञानस्य परोक्षत्वे मम प्रकाशत इति निर्निमित्ता व्यवस्थितिरिति ।

तन्मीमांसक युक्तियुक्तमधुना स्वस्यावसायं धियः
किं न स्वीकुरुषे न मुञ्चसि किमित्यद्यापि पक्षं निजम् ॥
यस्मान्न्यायपथानुगस्य भवतः स्वान्तं निशान्तं मते
दुःपक्षप्रभवानुरागतमसा क्षुद्रेण किं बाध्यते ॥ २३१ ॥

इत्थं निराकुर्महि जैमिनीयान्परोक्षविज्ञानकथावलितान् ॥
ज्ञानान्तराध्यक्षमुशन्ति येऽथ संवेदनं तन्मतमुत्क्षिपामः ॥२३२॥

नैयायिकमतस्योपपादनपूर्वकं खण्डनम् ।

एवं हि **यौगाः** संगिरन्ते । ज्ञानं ज्ञानान्तरवेद्यं वेद्यत्वाद्यद्वेद्यं तज्ज्ञानान्तरवेद्यं यथा घटो वेद्यं च ज्ञानं तस्मात् ज्ञानान्तरवेद्यमिति न तावदत्र हेतुरसिद्धः । साध्यधर्मिणि विद्यमानत्वात् । नापि विरुद्धः । सपक्षे वर्त्तमानत्वात् । नाप्यनैकान्तिको, विपक्षादत्यन्तं व्यावृत्तत्वात् । न च स्वसंविदिततया विपक्षीभूतेऽपि त्रिलोचनज्ञाने वर्तमानत्वादनैकान्तिकत्वम् । अस्मदादिज्ञानापेक्षया ज्ञानस्य ज्ञानान्तर-

---

१ एतदर्थकं मीमांसासू. शा भाष्ये. पृ ७ प. १९ ।

वेद्यत्वप्रतिज्ञानात्। त्रिलोचनज्ञानस्य चास्मदादिज्ञानादतिशयोपेतत्वात्। न चातिशयोपेते प्रतीतं धर्ममतिशयापेतेऽपि प्रेरयन् परीक्षकतामास्कन्दति। समस्तार्थग्राहित्वस्यापि सकलज्ञानानां त्रिलोचनवत्प्रसक्तेः। नापि कालात्ययापदिष्टः, प्रत्यक्षागमाभ्यामनिराकृतगोचरत्वात्। ननु स्वव्यवसायिस्वरूपमर्थज्ञानं स्वसंवेदनप्रत्यक्षेणैवानुभूयते अतः प्रत्यक्षविक्षिप्तपक्षनिर्देशानन्तरोपन्यस्तत्वेन कालात्ययापदिष्टतालिङ्गित एवायं हेतुरिति चेत्, तदनुचितम्। ज्ञानस्य स्वव्यवसायिस्वरूपत्वानुपपत्तेः। अर्थव्यवसायिस्वरूपत्वेनैव तस्यावस्थानात्। "अर्थग्रहणं बुद्धिश्चेतना" इत्यभिधानात्, ग्रहणं पुनरस्य तद्गोचरत्वोत्पन्नैकात्मसमवेतानन्तरज्ञानेन मानसाध्यक्षरूपेण। नन्वेवमर्थज्ञानतद्गोचरानन्तरज्ञानयोः क्रमेणोत्पन्नयोस्तथैवानुभवः किं न भवतीति चेत्। नैतद्वचनीयम्। अनयोः क्रमसमुत्पादेऽप्याशुवृत्तेः शतपत्रपत्रशतव्यतिभेदवद्यौगपद्याभिमानतः पार्थक्याननुभूतिसम्भवात्। अथार्थज्ञानस्य ज्ञानान्तरप्रत्यक्षतायां ज्ञानान्तरस्याप्यपरज्ञानप्रत्यक्षताप्रसक्तेर्दुर्निवारास्यानवस्थेति चेत्, एतदप्यप्रातीतिकम्। अर्थज्ञानस्य द्वितीयेन ज्ञानेन ग्रहणादर्थसिद्धेरपरज्ञानकल्पनानर्थक्येनानवस्थित्यभावात्। अर्थजिज्ञासायां ह्यर्थज्ञानमुपजायते ज्ञानजिज्ञासायां तु ज्ञाने। सा च ज्ञानजिज्ञासार्थज्ञानं यावद्भवतीति द्वितीयज्ञानोत्पत्त्यैव कृतार्थयति प्रमातारमित्यलं तृतीयादिज्ञानकल्पनया। तन्न कालात्ययापदिष्टताश्लिष्टताश्लिष्टमूर्त्तिरसौ हेतुः। नापि प्रकरणसमः। असम्भवत्परिपन्थिसाधनत्वात्। यस्य हि संशयबीजभूतं पक्षान्तरचिन्ताप्रवर्त्तकं साधनान्तरं सम्भवति स एव हेतुः प्रकरणसमः। न चात्र तदस्ति। अथ ज्ञानं स्वप्रकाशात्मकमर्थप्रकाशात्मकत्वात्प्रदीपवदित्येवंविधे परिपन्थिनि साधने जागरूके सति कथमिदमभिधीयतेऽसम्भवत्परिपन्थिसाधनत्वान्न प्रकरणसम इति चेत्। मैवम्। विचारभारासहत्वेनास्य साधनाभास-

---

१ 'वयम्' इति प. पुस्तके पाठः। २ 'श्लिष्टता' इति नास्ति प. पुस्तके

स्यात् । तथा हि स्वप्रकाशात्मकमित्यत्र किं स्वेनात्मनैव स्वस्य प्रकाशः स्वप्रकाशः स्वकीयेन वा । प्रथमपक्षे पक्षस्य प्रत्यक्षबाधितत्वं दोषः । अर्थग्रहणस्वभावस्यैव संवेदनस्य मानसप्रत्यक्षेण प्रतीतेः । हेतोश्च कालात्ययापदिष्टता प्रत्यक्षबाधितपक्षत्वात् । स्वात्मनि क्रियाविरोधाच्च नायं पक्षः सम्भवी । न हि सुतीक्ष्णोऽपि कौक्षेयकः[1] कदाचिदात्मानं विदारयति । न च विचित्रचारीसंचारचतुरापि नर्त्तकी निजस्कन्धमधिरोढुं प्रभवति । द्वितीयपक्षे पुनः सिद्धसाध्यता । स्वकीयेनानन्तरोत्तरज्ञानेन प्राचीनज्ञानस्य प्रकाशस्वीकरणात् । किं च प्रकाशात्मकत्वं बोधरूपत्वं भासुररूपसम्बन्धित्वं वा भवेत् । आद्यपक्षे साध्यविकलत्वमुदाहरणस्याद्दृष्टान्ततयोपदिष्टे प्रदीपे बोधरूपत्वस्याभावात् । द्वितीयपक्षे तु पक्षस्य पुनरपि प्रत्यक्षबाधा । बोधात्मकत्वेन भासुररूपरहितस्यैव ज्ञानस्य प्रत्यक्षतः प्रतीतेः । तदेवं स्वप्रकाशात्मकत्वसाधनस्य विचार्यमाणस्यानुपपत्तेर्नानेन प्रकरणसमत्वम् ।

एवं समस्तदूषणकण्टकनिकरेण मुक्तमुक्तमिदम् ।
विदुषां सदस्सु नूनं साधनमुपनयति निजसाध्यम् ॥ २३३ ॥

अपि च स्वप्रकाशात्मकज्ञानवादिनः पर्यनुयुज्यन्ते । किं येनैव स्वभावेन ज्ञानं स्वरूपं प्रकाशयति तेनैवार्थमपि स्वभावान्तरेण वा । यदि तेनैव, तर्हि कथं ज्ञानार्थयोः पार्थक्यं स्यादभिन्नस्वभावज्ञानग्राह्यत्वात्तयोरेकान्यतरस्वरूपवत् । अथ स्वभावान्तरेण, तदा तौ स्वभावौ ज्ञानादभिन्नौ भिन्नौ वा । यद्यभिन्नौ, तदा ज्ञानमेव स्यान्न स्वभावौ । तयोरत्रैवानुप्रवेशात् । तथा च कथं ज्ञानं स्वार्थयोः प्रकाशकं स्यात् । अथ भिन्नौ, तत्रापि किं तौ स्वप्रकाशौ स्वाश्रयभूतज्ञानप्रकाश्यौ वा । प्रथमपक्षे स्वप्रकाशज्ञानत्रितयापत्तिः । तथा च ज्ञानवत्तत्स्वभावयोरपि प्रत्येकं स्वपरप्रकाशत्वे स एव पर्यनुयोगोऽनवस्था च । अथ स्वाश्रयभूतज्ञानप्रकाश्यौ तौ तर्हि स्वाश्रयभूतस्य ज्ञानस्य स्वपरप्रकाशे कर्तव्ये

१ कौक्षेयकः खड्गः ।

हेतुभूतयोस्तयोर्यदि ज्ञानं तथाविधेनापरस्वभावद्वयेन प्रकाशकं तदानवस्था । स्वपरप्रकाशहेतुभूतस्वभावद्वयाप्रकाशत्वे वा ज्ञानस्य प्रमाणत्वायोगः । स्वस्वभावाप्रकाशकस्य कुम्भादिवत् अप्रमाणत्वेन भवद्भिरभ्युपगमात् । एवं च ।

एकप्रमातृसमवेतधियाधिगम्यं
सिद्धं समस्तमपि वेदनमुक्तयुक्त्या ।
ये तु स्वसंविदितमेतदुदाहरन्ति
क्रामन्ति ते किमिति नांसतटीं स्वकीयाम् ॥ २३४ ॥

अहो गदित्वा परिफल्गु किञ्चित्प्रगल्भसे मुग्ध किमेवमत्र ।
इतः स्वसंवेदनसिद्धियुक्तीः शृणु स्वपक्षेऽपि च दोषपंक्तीः॥ २३५ ॥

तथाहि यत्तावज्ज्ञानं ज्ञानान्तरवेद्यमित्याद्यनुमानमगादि तत्र वेद्यत्वादिति हेतोस्त्रिलोचनज्ञानेन व्यभिचारः । तस्य वेद्यत्वेऽपि स्वसंविदितत्वेन भवद्भिरभ्युपगमात् । यत्पुनरत्रोक्तमस्मदादिज्ञानापेक्षयेत्यादि । तदवद्यमस्मदाद्रीति विशेषणस्यात्राश्रूयमाणत्वात् । हृदयनिविष्टं तदस्तीति चेत् । कथं शपथमन्तरेणायमर्थः प्रतीयते । अस्तु वा, तथापि पक्षस्य हेतोर्वा तत्स्यात् । यदि पक्षस्य, तदा विरूपाक्षज्ञानमपक्षोऽस्तु हेतुस्तु तत्र प्रवर्त्तमानः केन प्रतिहन्यते । येन स व्यभिचारो न भवेत् । अथ हेतोस्तद्विशेषणमस्मदादिज्ञानत्वे सति वेद्यत्वादिति तर्हि साधनविकल्पो दृष्टान्तः । तथाभूतस्य हेतोर्घटदृष्टान्तेऽसम्भवात् । अपि च विरूपाक्षज्ञानं स्वज्ञानं स्वसंविदितत्वादस्मदादीति विशेषणेनात्रव्यवच्छिद्यते । स्वसंविदितत्वं च कुतस्तस्य सिद्धम् । अर्थग्रहणात्मकत्वाच्चेत्तदस्मदादिज्ञानेऽप्यस्त्येवेत्युभयत्र स्वसंविदितत्वं सिध्येन्न वा क्वचिदपि विशेषादर्शनात् । अथ विरूपाक्षज्ञानस्यास्मदादिज्ञानाद्विशिष्टत्वात्तत्रैव स्वसंविदितत्वं न्याय्यं नान्यत्र नहि विशिष्टे दृष्टं धर्म्ममविशिष्टेऽपि योजयन् प्रज्ञावत्तां लभत इति चेत् , तदप्यनवदातम् । एवं हि शम्भुज्ञाने विशिष्टे दृष्टस्यार्थग्रहणात्मकत्वस्याप्यस्मदादिज्ञाने प्रतिषेधप्रसङ्गः । अथ तस्याभावे तज्ज्ञानमेव न स्यात्तस्य तत्स्वभावत्वा-

दिति चेत् । तदिदं स्वसंविदितत्वेऽपि समानम् । नहि स्वसंविदितत्वस्वभावस्याप्यभावे ज्ञानस्य ज्ञानता युक्ता । तस्यापि ज्ञानस्वभावत्वाविशेषात् । न खलु शम्भुज्ञानेऽर्थग्रहणात्मकत्वेनेव स्वसविदितत्वेनापि विज्ञानस्वभावता[1] दृष्टान्ततश्चास्मदादिज्ञानेऽपि स्वसंविदितत्वं कथं न स्यात् । न च स्वभावः प्रादेशिको युक्तः । आलोकस्य स्वपरप्रकाशकता मिहिरमण्डलालोकस्यैव स्वभावो न पुनः प्रदीपाद्यालोकस्येति कश्चिद्विपश्चिद्वक्ति । उभयत्राप्यविशेषतस्तत्प्रतीतेः । नन्वस्मदादिज्ञानस्य शङ्करज्ञानवत्स्वपरव्यवसायिस्वभावत्वे तद्वन्निःशेषार्थप्रकाशकत्वमपि स्यादित्यपि बालप्रलपितम् । स्वयोग्यतानुसारितयैव ज्ञानेनार्थस्य प्रकाशनात्प्रदीपवत् । न खलु प्रदीपस्य दिनेश्वरवत्स्वपरप्रकाशस्वभावत्वेऽपि तद्वन्निःशेषार्थप्रकाशकत्वमुपलब्धम् । स्वयोग्यतानुसारितयैवार्थस्यानेनापि प्रकाशनात् । योग्यता च सकलज्ञानानां स्वावरकादृष्टक्षयोपशमतारतम्यस्वरूपा प्रतिपत्तव्या । न हि तस्या अभावे विषयग्रहणतारतम्य ज्ञानाना युज्यते इति सविस्तरं पुरस्तादुपपादयिष्यते । साध्यविकलता चात्रानुमाने दृष्टान्तस्य स्पष्टैव । तथाहि न घटो ज्ञानान्तरवेद्योऽपि तु ज्ञानवेद्य उत्तरशब्दस्य सजातीयापेक्षयैव भेदवाचकत्वात् । तत्कथमत्र ज्ञानान्तरवेद्यत्वं साध्यं सम्भवति । अथैकेन ज्ञानेनानुभूते ज्ञानान्तरं यदा प्रवर्त्तते तदा ज्ञानान्तरवेद्यत्वं कुम्भे सम्भवतीति चेत् , तर्हि स्वसंविदितेऽपि ज्ञाने योगिप्रत्यक्षरूपज्ञानान्तरं प्रवर्त्तत एव ततः सिद्धसाध्यता । अथास्मदादिज्ञानान्तरवेद्यत्वं साध्यते तदास्मदादीति विशेषणं साध्यस्याभिधानीयम् । भवतु वा ज्ञानमस्मदादिज्ञानान्तरवेद्यमिति सविशेषणं साध्यं, तथापि सिद्धसाध्यता । चैत्रशरीरवर्त्तिसंवेदनस्यानुरूपेणास्मदादिज्ञानान्तरेण वेद्यत्वाभ्युपगमात् । एकशरीवर्त्त्यस्मदादिज्ञानान्तरवेद्यत्वं साध्यमिति चेत्, तर्ह्येकशरीरवर्त्तीति विशेषणान्तरं साध्यस्य वाच्यम् ।

१ 'स्वभावतेति तद्दृष्टान्तः' इति भ. म. पुस्तकयो पाठः ।

एतदपि दृश्यमिति चेत्, तथापि सिद्धसाध्यता। स्मृतिरूपेणैकशरीरवर्त्तिनास्मदादिज्ञानान्तरेण अतीतज्ञानस्य वेदत्वाभ्युपगमात्। वर्तमानस्य ज्ञानस्यैकशरीरवर्त्यस्मदादिज्ञानान्तरवेद्यत्वं साध्यत इति चेत्। तन्न, वर्त्तमाने ज्ञाने ज्ञानान्तरस्यासम्भवात्। युगपज्ज्ञानानुत्पत्तेर्म्मनसो लिङ्गत्वेनाङ्गीकरणात्। विवक्षितज्ञानोत्पत्त्यनन्तरभाव्येकशरीरवर्त्यस्मदादिज्ञानान्तरेण विवक्षितज्ञानस्य विनश्यदवस्थस्य वेद्यत्वं साध्यत इति चेत्, तर्ह्यनैकान्तिकत्वं हेतोः सर्वेषां विद्यानां नियमेनोत्पत्त्यनन्तरभाव्येकशरीरवर्त्यस्मदादिज्ञानान्तरवेद्यत्वाभावात्। अथ किमेताभिः कल्पनाभिर्ज्ञानं ज्ञानान्तरेणैव वेद्यमित्यवधारणगर्भं साध्यमभिप्रेयते ततो न सिद्धसाध्यताद्यवतार इति चेत्। मैवम्। एवमपि दृष्टान्ते साध्यवैकल्यकलङ्कस्याप्रतिहतप्रसरत्वात्। न खलु कलशो ज्ञानान्तरेणैव वेद्यः। प्रथमज्ञानेनापि तस्य वेद्यत्वात्। न च तदपि कलशस्वरूपात्पार्थक्येन ज्ञानान्तरमिति वाच्यम्। अन्तरशब्दस्य सजातीयापेक्षयैव[1] भेदवाचकत्वादित्युक्तत्वात्। यदप्यवादि अर्थग्रहणबुद्धिश्चेतनेति। तदप्यविचारितरमणीयम्। स्वसंविदितत्वाभावे ज्ञानेऽर्थग्रहणस्यैवासम्भवात्। अर्थग्रहणत्वं हि ज्ञानेऽर्थादुत्पत्तेश्चेतनास्वरूपत्वतो वा भवेत्। यत्र यद्यर्थादुत्पत्तेर्ज्ञाने तदनुमन्यते, तर्हि घटेऽप्यनुमन्यतां मृद्दण्डचक्रचीवराद्यर्थादुत्पत्तेरविशेषात्। अथ चेतनास्वरूपत्वतः, ननु कुतो ज्ञानस्य चेतनात्वसिद्धिरर्थग्रहणाच्चेतनात्मप्रभवत्वाद्वा। अर्थग्रहणाच्चेत्, परस्पराश्रयः। सिद्धे ह्यर्थग्रहणे चेतनात्वसिद्धिस्तत्सिद्धेश्चार्थग्रहणसिद्धिरिति। अथ चेतनात्मप्रभवत्वात्, नन्वात्मनोऽपि कुतश्चेतनत्वं सिद्ध्येत्, चेतनासमवायात्स्वतो वा। यदि स्वतः, तदापसिद्धान्तप्रसङ्गः। स्वरूपेण तस्य भवद्भिर्जडत्वेन स्वीकरणात्। अथ चेतनासमवायात्, तर्हि चक्रकापत्तिः। तथाहि चेतनासमवायादात्मनश्चेतनत्वसिद्धिस्तत्सिद्धौ च तत्प्रभवत्वेन ज्ञानस्य चेतनात्वसिद्धिस्त-

१ ' तत्र ' इति म. पुस्तके पाठ.।

त्सिद्धौ चात्मनश्चेतनासमवाय इति । यावन्नात्मनश्चेतनासमवायस्तावन्न चेतनत्वसिद्धिर्यावन्नासौ तावन्न तत्प्रभवत्वेन ज्ञानस्य चेतनात्वसिद्धिर्यावच्च नेयं तावन्नात्मनश्चेतनासमवाय इति । तस्मान्न स्वसंविदितत्वं विहाय बुद्धेरर्थग्रहणं घटते । किञ्चार्थबुद्धिरित्यत्र किमर्थस्यैव ग्रहणं बुद्धिरिति व्याख्यायते किंवार्थस्यापीति । तत्र प्रथमपक्षः प्रत्यक्षविरुद्धः। नीलमहमात्मना जानामीत्यत्र नीलमित्युल्लेखेनार्थग्रहणवदात्मनेत्युल्लेखेन ज्ञानग्रहणस्याप्यनुभवात् । न हि नीलसंवेदनाद्भिन्नकालं तदात्मसंवेदनं वेद्यते । तत्संवेदनसमकालमेवान्तःपरिस्फुटरूपस्यास्यानुभवात् । अतोऽर्थसंवेदनात्तदात्मसंवेदनस्याभिन्नस्वभावत्वात्तत्संवेदने तदपि संविदितमिति स्वसंवेदनसिद्धिः यद्यस्मादभिन्नस्वभावं तस्मिन् गृह्यमाणे तद्गृहीतमेव । यथा नीले गृह्यमाणे तस्यैव स्वरूपसन्निवेशादिकम् । अर्थसंवेदनादभिन्नस्वभावं च तदात्मसंवेदनमिति । अथार्थस्यापि ग्रहणमिति व्याख्यायते । तर्हि सिद्धं नः समीहितं स्वसंवेदनाप्रतिक्षेपात् । एवं च स्वसंवेदनप्रत्यक्षेणैव ज्ञानस्य स्वव्यवसायिस्वरूपत्वसिद्धेः प्रत्यक्षबाधितकर्म्मानन्तरोपदिष्टत्वेन वेद्यत्वादिति हेतोः कालात्ययापादिष्टत्वं तदवस्थमेवेति स्थितम् । यच्चोक्तं ग्रहणं पुनरस्येत्यादि । तदप्ययुक्तम् । विच्छिन्नप्रतिभासाभावात् । न खलु प्रागर्थज्ञानं पश्चात्तज्ज्ञानज्ञानमिति नान्तरा प्रतीतिरनुभूयते । यत्पुनरुक्तमनयोः क्रमसमुत्पादेऽप्याशुवृत्तेरित्यादि । तदतीवानुपपन्नम् । एवं हि समस्तार्थाना कथं क्षणभङ्गुरता न स्यात् सत्यामप्यस्यामाशुवृत्तेरेकत्वानध्यवसाय इति सौगतेनापि वक्तुं शक्यत्वात् । अपि च । उत्तरकालीनस्वग्राहकज्ञानकाले प्राचीनमर्थज्ञानमनुवर्त्तते न वा । यद्यनुवर्त्तते, तदा युक्तिप्रतीतिविरोधी ज्ञानयौगपद्यप्रसङ्गः । सिद्धान्तविरोधी चायं भवतः । त्वया ज्ञानद्वयस्य युगपदनभ्युपगमात् । अथ युगपज्ज्ञानद्वयस्योत्पत्तिरेव विरुध्यते । तथा च "[1]युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्"

---

१ गौतमसू. १-१-१६.

इत्यक्षपादः। विनश्यदवस्थस्य त्वविनश्यता सहावस्थानं न विरुद्धमिति चेत्। ननु तस्यामवस्थायां विज्ञानं विनाशक्रिया केनचिदंशेन समाविशति न वा। न चेत्कथं विनश्यदवस्थेति वर्तमानकालतानिर्देशः स्याद्द्वितीयक्षणभावित्वाद्विनाशक्रियायाः। अथ कुशूलाद्यवस्थायामेकान्तेनासत्यपि कुम्भे कुम्भोऽयमुत्पद्यत इति वर्त्तमानकालतानिर्देशो दृष्टः। मैवम्। अत एव निर्देशात्तदानीं कथंचित् कुम्भस्योत्पत्तिप्रसिद्धेरन्यथा तदघटनात्। एवं च ब्रुवते लौकिकाः अद्याप्यर्द्धनिष्पन्नः कुम्भः किमित्येनं परिपूर्णं न करोषीति केनचिदंशेन तद्विनश्यत् सोंऽशोऽस्य द्वितीयज्ञानेन नाज्ञायतेति न कदाचित्परिपूर्णस्यास्य संवित्तिः स्यात्। न चैव नीलमहं विलोकयामीति सकलस्यास्य संवित्तेः। किञ्च त्वन्मतेऽस्यांशतो विनाश एव न युज्यते। तस्य निरंशत्वेन स्वीकारात्। अथ नानुवर्त्तते तर्हि कस्योत्तरसमयभाविज्ञानं ग्राहकं स्यात्। ग्राह्यप्राक्तनज्ञानस्य प्रागेव क्षीणत्वात्। किञ्चेन्द्रियजं प्रत्यक्षं सन्निकृष्टे विषये प्रवर्त्ततेऽतीतक्षणवर्तिनश्च ज्ञानस्य मनोलक्षणेन्द्रियसन्निकर्षो न युज्यते। ततः कथं प्राचीनज्ञाने मानसप्रत्यक्षवार्तापि स्यात्। यद्यप्युक्तमर्थजिज्ञासायां तु ज्ञान इति। एतदप्यघटमानम्। ज्ञानस्य जिज्ञासाप्रभवत्वासम्भवात्। नष्टतुरङ्गमस्य पुंसः सत्यामपि तुरङ्गमदिदृक्षायां तुरङ्गमदर्शनानुत्पादादसत्यामपि च स्तम्बेरम[1]दिदृक्षायां स्तम्बेरमदर्शनोत्पादात्। किञ्च ज्ञानस्य ज्ञानान्तरवेद्यतायामर्थज्ञानं नैव भवेत्। प्रकाशस्य प्रकाशापेक्षायामप्रकाशतावत्। न हि स्वपरज्ञाने परमुखप्रेक्षित्वं परित्यज्यापरं जडस्य लक्षणम्। यदपि ज्ञानं स्वप्रकाशात्मकमित्याद्यनुमाने[2] स्वप्रकाशात्मकत्वं साध्यं विकल्प्य दूषितं किं स्वेनात्मनैव स्वस्य प्रकाशः स्वकीयेन वेत्यादिना। तत्र द्वैतीयिकविकल्पोऽनङ्गीकारेणैव निरस्तः। स्वेनात्मनैव स्वस्य प्रकाश इत्ययं तु प्रथमपक्षः कक्षीक्रियत एव। तत्र च यदुक्तं

१ स्तम्बेरमः—हस्ती। २ 'अनुमान' इति म० पुस्तके पाठः

पक्षस्य प्रत्यक्षबाधितत्वं दोष इति। तन्न समीचीनम्। स्वपरव्यवसायात्मकस्य ज्ञानस्य सर्वैरनुभूतेः। एवं चार्थप्रकाशात्मकत्वादिति हेतोः कालात्ययापदिष्टतापि प्रत्यादिष्टा। पक्षस्य प्रत्यक्षेण बोधनात्। यत्पुनरुक्तं स्वात्मनि क्रियाविरोधान्नायं पक्षः संभवीति। तत्र स्वदर्शनप्रसिद्धमपि त्रिनयनसंवेदनं सकलजनप्रतीतमपि वा प्रदीपाद्यालोकं स्वपरप्रकाशकं किन्नावधारयत्यायुष्मान् येनैवमात्मानमायासयति। न हि त्रिनयनज्ञानं स्वप्रकाशे ज्ञानान्तरमपेक्षते स्वपरावभासकमेकं नित्यज्ञानं जगत्कर्त्तुरित्यभ्युपगमात्। नापि प्रदीपाद्यालोकः स्वरूपप्रकाशने प्रकाशान्तरमपेक्षते प्रतीतिविरोधात्।

अथ कथमपि मुक्त्वा मूलनैयायिकानां
मतमभिमतमेतद्दूषणैर्दूयमानम्॥
गुरुतममतिदर्प्पात्कल्पयित्वात्र कश्चित्
निजमतमिदमाह न्यायवादी नवीनः॥ २३६॥

नव्यनैयायिकमतखण्डनम्।

चन्द्रचूलज्ञानमपि ज्ञानान्तरप्रत्यक्षं न स्वसंविदितमिति। न चैवं तज्ज्ञानग्राहिणो ज्ञानान्तरस्यापि ज्ञानान्तरप्रत्यक्षत्वेनानवस्थितिरित्यभिधातव्यम्। ज्ञानद्वयेनैव साध्यसिद्धेरपरज्ञानकल्पनायाः कपालिनि निरुपयोगत्वात्। तथाहि—

एकस्माज्ज्ञानतोऽयं कलयति भुवनं साकमन्येन तेन
द्वैतीयीकात्तु[1] तस्मात्कलयति यतस्तस्य च ग्राहकं तत्।
एवं च ज्ञानयुग्मे त्रिपुराजिति सति क्वानवस्थाव्यवस्था
यौष्माकीणः क्व चाऽयं कथयत भवति स्वप्रकाशप्रसङ्गः॥२३७॥

ततश्च—

ज्ञप्तिरूपक्रियाया यो विरोधः स्वात्मनीरितः।
जैनैर्धूर्जटिबुद्धौ नः स तेषां तदवस्थितः॥ २३८॥

१ 'द्वैतीयीकात्' इति पदे यकारोत्तरवर्तिन इकारस्य दीर्घत्वं छन्दोऽनुरोधात्।

अत्रोच्यते—

विक्रीय मातरं मोहात्क्रीत्वा दासीममङ्गलम् ।
प्रशंसत्ययमात्मानं धृष्टः स्वमतिकौशले ॥ २३९ ॥

तथाहि समानकालयावद्द्रव्यभाविसजातीयगुणद्वयस्यान्यत्रानुपलब्धेस्त्र्यम्बकेऽपि तत्कल्पनाया असम्भवः । तथा च प्रयोगः । ईश्वरः समानकालयावद्द्रव्यभाविसजातीयगुणद्वयस्याधारो न भवति द्रव्यत्वात् यदित्थं तदित्थं यथा घटस्तथा चायं तस्मात् तथा । किं चानयोर्ज्ञानयोः पिनाकपाणेः सर्वथा भेदे कथं तदीयत्वसिद्धिः । तत्र समवायादिति चेत् , तन्न समवायस्य पदार्थपरीक्षायां प्रतिक्षेप्स्यमानत्वात् । ततश्च ।

अलीकवाचालतयाऽतिचापलं यदत्र विद्वन्ननु शीलितं त्वया ॥
नवीननैयायिक वक्ति केवलं त्वदीयबुद्धेस्तदतीव कुण्ठताम् ॥२४०॥

किञ्च का नाम क्रिया स्वात्मनि विरुध्यते । परिस्पन्दात्मिका धात्वर्थस्वभावा वा । न तावत्परिस्पन्दात्मिका । तस्या द्रव्यवृत्तित्वेनाद्रव्यरूपे ज्ञाने सत्त्वस्यैवासम्भवात् । अथ धात्वर्थरूपा । साप्यकर्मिका सकर्म्मिका वा । न तावदकर्म्मिका । यदि वृक्षस्तिष्ठतीत्यादौ तस्याः स्वात्मन्येव वृक्षादिस्वरूपे प्रतीतितोऽस्यास्तत्राविरोधः तर्हि ज्ञानं प्रकाशत इत्यादेरप्यकर्म्मकक्रियाया ज्ञानस्वरूपेऽविरोधोऽस्तु । प्रतीतेरुभयत्राप्यविशिष्टत्वात् । अथ ज्ञानमात्मानं जानातीति सकर्म्मिका क्रिया स्वात्मनि विरुद्धा । स्वरूपादपरत्रैव कर्मत्वप्रतीतेरित्युच्यते । तदपि कल्पनामात्रम् । आत्मात्मानं हन्ति प्रदीपः स्वात्मानं प्रकाशयतीत्यादिकाया अपि क्रियाया विरोधापत्तेः । कर्तृस्वरूपस्य कर्मत्वेनोपचारात् नात्र परमार्थिकं कर्म्मेति चेत् । समानमन्यत्र । ज्ञाने कर्तरि स्वरूपस्यैव ज्ञानक्रियायाः कर्मत्वेनोपचारात् । तात्त्विकमेव ज्ञाने कर्मत्वं प्रमेयत्वात् तस्येति चेत् । तद्यदि सर्वथा कर्तुर्ज्ञानादभिन्नं तदा विरोधः । यदि ज्ञानं कर्तृ कथं कर्म्म तच्चेत्कथं कर्त्रिति । अथ सर्वथा

भिन्नं कर्मत्वम् । तर्हि कथं तत्र ज्ञानस्य जानातीति क्रिया स्वात्मनि स्याद्येन विरुद्ध्यते । कथमन्यथा कटं करोतीति क्रियाऽपि कटकारस्य स्वात्मनि न स्यात् यतो न विरुध्यते । कर्त्तुः कर्मत्वं कथञ्चिद्भिन्नमित्येतस्मिंस्तु दर्शने ज्ञानस्यात्मनो वा सर्वथा स्वात्मनि क्रिया दूरोत्सारितैवेति न विरुद्धतामधिवसतीति । कश्च क्रियायाः स्वात्मा यत्र विरोधः स्यात् । किं क्रियास्वरूपं क्रियावदात्मा वा । यदि क्रियास्वरूपम्, तदा कथं तत्र तद्विरोधः सर्वस्य वस्तुनः स्वरूपेण विरोधानुपपत्तेर्निस्स्वरूपत्वप्रसङ्गात् । क्रियावदात्मा चेत्तत्र विरोधे क्रियाया निराश्रयत्वं सर्वद्रव्यस्य वा निष्क्रियत्वमुपढौकेत । न चैवम् । कर्मस्थायाः क्रियायाः कर्मणि कर्तृस्थायाः कर्त्तरि प्रतीयमानत्वात् । यदि पुनर्ज्ञानक्रियायाः कर्तृसमवायिन्याः स्वात्मनि कर्मतया विरोधस्ततोऽन्यत्रैव कर्मत्वदर्शनादिति मतम्, तदा ज्ञानेनार्थमहं जानामीत्यत्र ज्ञानस्य करणतयाऽपि विरोधः स्यात् । क्रियातोऽन्यस्य करणत्वदर्शनात् । ज्ञानक्रियायाः करणज्ञानस्य चान्यत्वादविरोध इति चेत् । किं पुनः करणज्ञानं का वा ज्ञानकिया । विशेषणज्ञानं करणं विशेष्यज्ञानं तत्फलत्वात् ज्ञानक्रियेति चेत्, स्यादेवं यदि विशेषणज्ञानेन विशेष्यं जानामीति प्रतीतिरुत्पद्यते । न च कस्यचिदुत्पद्यते । विशेषणज्ञानेन विशेषणं विशेष्यज्ञानेन च विशेष्यं जानामीत्यनुभवात् नन्वेवं कथं दण्डिनं वेद्मीति दण्डविशिष्टपुरुषप्रतिपत्तिः । पूर्वं दण्डाग्रहे हि पुरुषमात्रप्रतीतिरेव स्यादन्यथा दण्डरहितपुरुषेऽपि तत्प्रतीतिप्रसङ्गः । न खलु विशेषणं सत्तामात्रेण स्वानुरक्तां धियमुत्पादयत्यपि तु गृहीतमिति । तन्न वाच्यम् । यतो दण्डविशिष्टे पुंसि प्रवर्त्तमाना बुद्धिः सकृदेव तथाभूतं पुमांसं प्रत्येति न पूर्वं दण्डग्रहणमपेक्षते । दण्डरहिते च पुसि दण्डविशेषणवैशिष्ट्यमेव पुंसो नास्तीति कुतस्तत्र तथाविधबुद्धिप्रादुर्भावप्रसङ्गः स्यात् । न खलु वयमसद्वस्तुव्यवसायिनीं बुद्धि-

१ 'अभिमतम्' इति म. पुस्तके पाठः ।

मभ्युपगच्छामः किन्तु वस्तुव्यवसायिनीम् । न चात्र विषयभेदाज्ज्ञानभेदकल्पनोपपत्तिमती । समानेन्द्रियग्राह्ये योग्यदेशावस्थितेऽर्थे घटपटादिवदेकस्यादि ज्ञानस्य व्यापारविरोधात् । न च घटादावपि ज्ञानभेद इति वाच्यम् । ज्ञानानां युगपद्भावानभ्युपगमात् । क्रमभावे च प्रतीतिविरोधः । युगपद्भावाभ्युपगमे च विशेषणविशेष्यज्ञानयोः सव्येतरविषाणवत्कार्यकारणभावाभावः । ततो विशेष्यज्ञानं विशेषणविशेष्योभयालम्बनमेव नतु विशेषणज्ञानेन जन्यमानत्वात् केवलविशेष्यालम्बनमिति । अपि च यदि विशेषणज्ञानं करणं विशेष्यज्ञानं तु ज्ञानक्रियोच्यते । तदापि विशेषणज्ञाने कस्य करणता वक्ष्यसि । नहि तत्रापरं विशेषणज्ञानं करणमस्ति । अथास्त्येव दण्डादिज्ञाने दण्डत्वादिजातिज्ञानम्, दण्डत्वादिजातिज्ञाने तर्हि कतरत्कथयति।ततो न विशेषणविशेष्यज्ञानयोः करणक्रियात्वे वक्तव्ये किन्त्वेकज्ञानस्वरूप एव । अस्थास्त्वेवम्, न च विरोधस्तथाप्रतीतेः। कर्मत्वेनाप्यत एवाविरोधोऽस्तु । विशेषाभावात् । चक्षुरादिकरणं ज्ञानक्रियातो भिन्नमेवेति चेत्, न ज्ञानेनार्थं जानामीत्यपि प्रतीतेः । ज्ञायतेऽनेनेति ज्ञानं चक्षुराद्येव ज्ञानक्रियायाः साधकतमं करणमिति चेत्, न तस्य साधकतमत्वनिराकरणात्तत्रज्ञानस्यैव साधकतमत्वोपपत्तेः । ननु यदेवार्थस्य ज्ञानक्रियायां ज्ञानं करणं सैव ज्ञानक्रिया तत्र कथं क्रियाकरणव्यवहारः प्रातीतिकः स्यात् । विरोधादिति चेत्, न कथञ्चिद्भेदात् । प्रमातुरात्मनो हि वस्तुपरिच्छित्तौ साधकतमत्वेन व्यापृतं रूपं करणम् । निर्व्यापारं तु क्रियोच्यते स्वातन्त्र्येण पुनर्व्याप्रियमाणः कर्त्तात्मेति । तेन ज्ञानात्मक एवात्मा ज्ञानात्मनार्थं जानामीति कर्तृकरणक्रियाविकल्पः प्रतीतिसिद्ध एव । तद्वत्तत्र कर्म्मव्यवहारोऽपि ज्ञानात्मात्मनात्मानं जानातीति घटते । सर्वथा कर्तृकरणकर्मक्रियाणामभेदानभ्युपगमात् । तासां कर्तृत्वादिशक्तिनिमित्तत्वात् कथञ्चिद्भेदसिद्धेः । ततो ज्ञानं येनात्मनार्थं जानाति

---

१ 'हि कतमत्कथयसि' इति भ. म. पुस्तकयोः पाठः। २ 'तत्र' इति नास्ति म. म. पुस्तकयोः पाठः। ३ 'क्रियाकरणत्व' इति म. पुस्तके पाठः।

तेनैव स्वमिति वदतां स्वात्मनि क्रियाविरोध एव । परिच्छेद्यस्य रूपस्य सर्वथा परिच्छेदकस्वरूपादभिन्नस्योपगतेः । कथंचिद्भेदवादिनां तु नायं दोषः । अथ क्रियाकरणं निष्पादनं तच्च स्वात्मनि विरुद्धमित्यभिमतम् । मैवम् । न खलु ज्ञानमात्मान निष्पादयतीति वयमभ्युपेमः स्वकारणादेव तस्योत्पत्तेः। अपि तु प्रदीप[1]वज्ज्ञानमात्मानं प्रकाशयतीति । न च स्वरूपप्रकाशकत्वं प्रदीपस्यासिद्धम् । यथैव हि रूपज्ञानोत्पत्तौ प्रदीपः सहकारि[2]त्वाच्चक्षुषा रूपप्रकाशकः कथ्यते तथा स्वरूपज्ञानोत्पत्तौ तस्य सहकारित्वात् स्वरूपप्रकाशकोऽपीति । अथार्थवज्ज्ञाने ज्ञानस्वरूपस्याप्रतीतेर्न स्वसंविदितत्वमित्युच्यते । एतदप्ययुक्तम् । अर्थवदिति हि कोऽर्थः । किं यथार्थो बहिर्देशसम्बद्धः प्रतीयते न तथा ज्ञानं, किं वा यथार्थोन्मुख ज्ञानं न तथा स्वोन्मुखमिति । आद्यपक्षे सिद्धसाधनम् । घटाद्यर्थज्ञानयोर्बहिरन्तर्देशसम्बद्धतयाऽवभासनात् । यदि तु घटाद्यर्थदेशसम्बद्धतया ज्ञानस्याप्रतिभासनादप्रत्यक्षत्वमित्यङ्गीक्रियते । तर्हि घटाद्यर्थस्यापि ज्ञानदेशसम्बद्धतयाऽप्रतिभासादप्रत्यक्षता स्यात् । द्वितीयपक्षोऽप्यनुपपन्नः, घटमहमात्मना वेद्मीत्यत्रार्थस्येव ज्ञानस्यापि प्रतिभासविलोपेऽर्थप्रतिभासेऽपि कः समाश्वासः । यदपि जल्पितं प्रकाशात्मकत्वं बोधरूपत्वं भासुररूपसम्बन्धित्वं वेत्यादि । तदपि परिफल्गु । यतः प्रकाशात्मकत्वं स्वपररूपोद्योतनसमर्थस्वरूपत्वमुच्यते तच्च क्वचिद्बोधरूपतया क्वचिद्भासुररूपसम्बन्धितया वा सम्भवन्न विरोधमध्यास्ते । ततो न प्रदीपदृष्टान्तस्य साध्यविकलत्वम् । नापि पक्षस्य प्रत्यक्षबाधितत्वम् । यदि चैवं साध्यं विकल्प्य दूष्यते । तर्हि समस्तानुमानमुद्राभङ्गप्रसङ्गः । तथाहि । सकलजनप्रतीते धूमाद्धूमध्वजविशिष्टपर्वतानुमानेऽप्येवं वक्तुं शक्यत एव । किमत्र धूमवत्त्वादिति हेतोः पर्वतवह्निना वह्निमत्त्व साध्यते महानसवह्निना वा । आद्यकल्पे[3] साध्यविकलत्वं दृष्टान्तस्य पर्वतवह्निना

---

१ ‘ प्रदीप एव ’ इति प. पुस्तके पाठ. । २ ‘ चक्षुषो ’ इति भ. मं. पुस्तकयो. पाठः । ३ ‘आद्यविकल्पे’ इति भ. म. पुस्तकयोः पाठः ।

वह्निमत्त्वस्य साध्यस्य दृष्टान्तीकृते महानसे सर्वथाऽप्यसम्भवात् । द्वितीयविकल्पोऽपि न पेशलः महानसवह्नेर्महीधरकन्धरायामसम्भवात् । सम्भवे वा महानसवह्निरेवासौ न भवेत् । तस्मादप्रतिहतामनुमानसरणिमनुसरता सामान्येनैव साध्यमनुमाने स्वीकर्त्तव्यम् । न पुनर्विशेषविकल्पकल्पनया विलोपनीयमिति । तदेवं सकलदोषकलङ्कविकलतया स्वप्रकाशात्मकत्वसाधनस्य सम्यग्रूपत्वात् तेन प्रकरणसमत्वं वेद्यत्वादिति हेतोः तदवस्थमेव । तथा ज्ञानं स्वप्रकाशात्मकं ज्ञानत्वात् यत्पुनः स्वप्रकाशात्मकं न भवति न तज्ज्ञानं यथा चक्षुरादीत्यनेनापि प्रकरणसमत्वमनिवार्यम् । यश्चायमुपालम्भः, किं येनैव स्वभावेन ज्ञानं स्वरूपं प्रकाशयति तेनैवार्थमपीत्यादि । स भेदाभेदैकान्तवादिन एवानुबाधते न स्याद्वादिनः । तैर्यथाप्रतीति भेदाभेदाभ्युपगमात् । स्वपरप्रकाशकस्वभावद्वयात् कथञ्चिदभिन्नस्यैकस्य ज्ञानस्य प्रतिपत्तेः । सर्वथा ततस्तस्य भेदाभेदयोरसम्भवात् । तत्पक्षभाविदूषणस्य निर्विषयत्वात् दूषणाभासतोपपत्तेः । परिकल्पितयोस्तु भेदाभेदैकान्तयोर्दूषणस्य प्रवृत्तौ सर्वत्र प्रवृत्तिप्रसङ्गात् कस्यचिदिष्टतत्त्वव्यवस्थानुपपत्तेः स्वपरप्रकाशकौ च स्वभावौ ज्ञानस्य स्वपरप्रकाशनशक्ती कथ्येते । तद्रूपतया चास्य परोक्षता तत्प्रकाशनलक्षणकार्यानुमेयत्वात्तयोरिति । किं तौ स्वप्रकाशौ स्वाश्रयभूतज्ञानप्रकाश्यौ वेत्यादिप्राक्प्रकाशितदोषराशेरनवकाश एवेति सर्वं पुष्कलम् ।

इत्येवं ज्ञानमेतत्समसिधदखिलं स्वेन संवेदनीयं
प्रौढोपन्यस्तयुक्तिव्यतिकरवशतः पश्यतां प्राश्निकानाम् ॥
यौगानामेष तस्मान्निखिलशिथिलितन्यायमूलप्रबन्धः
स्वाग्राहिज्ञानपक्षः सपदि निपतितश्छिन्नवृक्षो यथात्र ॥२४१॥

ज्ञानान्तरज्ञेयमिति प्रतिज्ञां यौगीमवज्ञाय समर्थयुक्त्या ॥
सङ्ख्यावितामत्युपहासपात्रं साङ्ख्याशयं सम्प्रति कीर्त्तयामः ॥२४२ ॥

तथाहि ज्ञानं स्वव्यवसायात्मकं न भवत्यचेतनत्वात् कलशवत् । न चात्र हेतुरसिद्धः, अचेतनं ज्ञानं प्रधानपरिणामत्वात् कुम्भवत् यत्पुनश्चेतनं तन्न प्रधानपरिणामो यथात्मेत्यतस्तत्सिद्धेः । प्रधानपरिणामत्वमपि नासिद्धम् । प्रकृतेर्महानित्याद्यभिधानात् । प्रकृतेर्हि प्रधानापरनामिकायाः सकलजगत्प्रपञ्चरचनायां प्रवर्तमानायाः प्रथमतो महान् बुद्ध्यपरपर्याय एको व्यापको विषयाध्यवसायस्वरूप आसर्गप्रलयस्थायी प्रादुर्भवति । आसर्गप्रलयादेका बुद्धिरित्यभिधानात् । स च महानस्मादृशां संवेद्यस्वभावः । ततस्तया प्रतिप्राणिविभिन्ना इन्द्रियमनोवृत्तिद्वारेण बुद्धिवृत्तयो निःसरन्ति । ताः प्रमाणान्तरेण संवेद्यस्वभावाः । प्रतिपुरुषं हीन्द्रियवृत्तिः प्रथमतो विषयाकारेण परिणमति । ततो मनोवृत्तिद्वारेण बुद्धिवृत्तिरेकतः संक्रान्तविषयाकाराऽन्यतश्च संक्रान्तचिच्छाया सती विषयव्यवस्थापिका भवति । बुद्धौ च दर्पणप्रतिमायां विषयाकारसंक्रमे पुरुषेणार्थश्चेतयितुं शक्यते । बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते इत्यभिधानात् । बुद्ध्यध्यवसितं बुद्धिप्रतिबिम्बितमित्यर्थः । ननु बुद्धिव्यतिरिक्तस्य चैतन्यस्य स्वप्नावस्थायामप्यप्रतीतेरभेद एवेति कथं तत्र तच्छायासंक्रान्तिरिति चेत् , तदसाधीयः । सतोऽप्यनयोर्विवेकस्य संसर्गविशेषवशाद्विप्रलब्धेन प्रमात्रा प्रत्येतुमशक्तेरयोगोलकज्वलनविवेकवत् । न चायोगोलकपावकयोरप्यभेद एवेत्यभिधातव्यम् । अनयोरन्योन्यासम्भविरूपस्पर्शविशेषप्रतीतितः परस्परं भेदप्रतीतेः । ययोरन्योन्यासम्भवी रूपस्पर्शविशेषः प्रतीयते तयोरन्योन्यं भेदो यथा स्तम्भकुम्भयोरन्योन्यासम्भवी रूपस्पर्शविशेषश्च लोहगोलकज्वलनयोरिति । न चायमसिद्धः । कालायसगोलकगताभ्याममभासुररूपानुष्णस्पर्शाभ्यां सकाशाद्वैश्वानरभासुररूपोष्णस्पर्शयोः प्रत्यक्षेणैव विशेषदर्शनात् । अतो यथाऽत्र परस्परप्रदेशानुप्रवेशलक्षणसंसर्गाद्विप्रलब्धः प्रमाता भेदं नावधारयत्येवं बुद्धिचैतन्ययोरपि । यथोक्तमीश्वरकृष्णेन-

सांख्यमतखण्डनम् ।

" तस्मात् तत्संसर्गादचेतनं चेतनावदिव लिङ्गम् " इति । लिङ्गं बुद्धिरिहोच्यते प्रलयकाले प्रकृतौ लयं गच्छतीति कृत्वा । ततश्च—

बुद्धेर्धर्म्मं ज्ञानमत्र प्रसिद्धं बुद्धिर्जाता जाड्यरूपात् प्रधानात् ॥
निश्चैतन्याज्जायमानं बतास्याः स्वस्याभासि ज्ञानमास्तां कथं नु॥२४३॥
संवेदनं साङ्ख्यसखे न जातु स्वस्य प्रकाशे पटुतां बिभर्ति ॥
केनेदृशं ते श्रवणे न्यवेशि श्रद्धानमानीतमिदं कथं वा ॥ २४४ ॥

तथाहि यत्तावदिदमगादि ज्ञानं स्वव्यवसायात्मकं न भवत्यचेतनत्वादिति । तत्र किमिदमचेतनत्वं नाम, किमस्वसंविदितमुतार्थाकारधारित्वं जडपरिणामत्वं वा । यद्यस्वसंविदितत्वम्, तदा प्रतिवादिनोऽसिद्धो हेतुः । साध्याविशिष्टत्वात् । यदेव हि ज्ञानस्यास्वव्यवसायात्मकत्वं साध्यं तदेव पर्यायान्तरेणास्वसंविदितत्वादिति हेतुत्वेनोपन्यस्तमिति । अथार्थाकारधारित्वम् । तदा दृष्टान्तस्य साधनविकलत्वम् । न खलु कलशस्यादर्शादेरिवार्थाकारधारित्वं केनचित्प्रतीयते । स्वरूपासिद्धं त्वेवंभूतमचेतनत्वम् । अमूर्त्तस्य ज्ञानस्य विषयाकारधारित्वायोगात् । तथाहि यदमूर्त्तं तद्विषयाकारधारि न भवति यथा गगनममूर्त्तं च ज्ञानमिति । विषयाकारधारित्वे वा तस्यामूर्त्तत्वं न स्यात् । तथाहि यद्विषयाकारधारि तन्मूर्त्तं यथा दर्पणमुखमिति । विषयाकारधारित्वं च ज्ञानस्य निराकरिष्याम इत्यलमिहातिविस्तरेण । अथ जडपरिणामत्वमचेतनत्वम् । तदपि प्रतिवादिनं प्रत्यसिद्धमेव । आत्मपरिणामत्वात् ज्ञानस्य । तथापरिणामवानात्मा दृष्टत्वात् यस्तु ज्ञानपरिणामवान्न भवति नासौ द्रष्टा यथा लोष्टादिः द्रष्टा चात्मा तस्माज्ज्ञानपरिणामवानिति । चेतनोऽहमित्यनुभवाच्चैतन्यस्वभावतावच्चात्मनो ज्ञाताहमित्यनुभवाज्ज्ञानस्वभावताप्यस्तु । विशेषाभावात् । ननु ज्ञानसंसर्गाज्ज्ञाताहमित्यात्मनि प्रतिभासो न पुनर्ज्ञानस्वभावत्वादिति चेत् । तदपि न्यायबाह्यम् । चैतन्यादिस्वभावस्याप्येवमभावप्रसक्तेः ।

1 सांख्यकारिका २०. २ ' भवेदचेतनत्वात् ' इति भ. म. पुस्तकयोः पाठः ।

चैतन्यसंसर्गाद्धि चेतनो भोक्तृत्वसंसर्गाद्भोक्ता औदासीन्यसंसर्गादुदासीनः शुद्धिसंसर्गाच्छुद्धो न तु तत्स्वभावादित्यपि वक्तुं शक्यत एव । अनुभवबाधाश्चोभयत्रापि तुल्यः । न खलु ज्ञानस्वभावविकलोऽयं कदाचनाप्यनुभूयते । चैतन्यादिस्वभावस्येव ज्ञानस्वभावस्यापि तत्र संवेद्यमानत्वात् । तथा च ज्ञानस्याचेतनत्वसमर्थनार्थं प्रधानपरिणामत्वादिति साधनं यदुक्तं तदप्यसिद्धमेव । आत्मपरिणामत्वेन ज्ञानस्य समर्थितत्वात्[1]। न चात्मनोऽनित्यज्ञानपरिणामात्मकतायामनित्यत्वं प्रसज्यत इति वाच्यम् । अव्यक्तस्याप्यनित्यव्यक्तात्मकतायामनित्यत्वप्रसक्तेः । अथ व्यक्ताव्यक्तयोरव्यतिरेकेऽपि व्यक्तमेवानित्यं परिणामत्वान्न पुनरव्यक्तं परिणामित्वादित्युच्यते । तर्हि ज्ञानात्मनोरव्यतिरेकेऽपि परिणामपरिणामिभावाज्ज्ञानमेवानित्यमस्तु नत्वात्मा । आत्मनोऽपरिणामित्वे तु प्रधानेऽपि तदस्तु । व्यक्त्यपेक्षया परिणामि प्रधानं न शक्त्यपेक्षया सर्वदा स्थास्नुत्वादित्यभिधाने त्वात्मा[2]ऽपि तथाऽस्तु विशेषाभावात् । यदि चात्मनः परिणामित्वं नाभ्युपगम्यते । तदार्थक्रियाकारित्वाभावतस्तुरङ्गमशृङ्गवदसत्त्वापत्तिः । किं चायं प्रथमो बुद्धिरूपः परिणामः प्रकृतेः कुतः स्यात् । स्वभावतः पुरुषार्थकर्त्तव्यतातोऽदृष्टाद्वा । यदि स्वभावतः तर्हि सदाऽस्य सत्त्वप्रसङ्गः स्वभावस्य सदा सत्त्वसम्भवात् । यत्स्वाभाविकं न तत्कादाचित्कं यथा त्रिगुणात्मकत्वं स्वभाविकश्च प्रकृतेराद्यो बुद्धिपरिणाम इति । अथ पुरुषार्थकर्त्तव्यतातः आत्मनो विभागो मया सम्पादनीय इत्यनुसन्धाय प्रकृतिर्महदादिभावेन परिणमतीति । तदपि भाग्यहीनराज्यमनोरथस्थानीयम् । प्रथमसृष्टिकालेऽनुत्पन्नबुद्धिवृत्तेस्तस्याः पुरुषार्थो मया सम्पादनीय इत्यनुसन्धानानुपपत्तेः । तथाहि यदाऽसावनुत्पन्नबुद्धिवृत्तिस्तदाऽनुसन्धानशून्या यथा संहतसृष्ट्यवस्थायाम् । अनु-

---

१ 'समर्पितत्वात्' इति म. पुस्तके पाठः । २ 'वात्मापि' इति म. पुस्तके पाठः ।

त्पन्नबुद्धिवृत्तिश्च प्रकृतिः प्रथमसृष्टिकाल इति । अथोऽदृष्टात्प्रथमो बुद्धिरूपः परिणामः प्रकृतेः । तदप्ययुक्तम् । यतस्तस्मात् परिणामाभ्युपगमे दुर्वारश्चक्रकावतारः । सिद्धे हि चिच्छायाछुरितबुद्धिवृत्तिसद्भावे सुखसाधनप्रतिपत्तिपूर्वकमदृष्टसाधनानुष्ठानं तदनुष्ठानाददृष्टस्योत्पत्तौ च प्रथमसृष्टिकाले तथाविधबुद्धिवृत्तिसद्भावसिद्धिरिति । यदप्युक्तमेकतः संक्रान्तविषयाकारान्यतश्च संक्रान्तचिच्छाया सतीति । तत्र संक्रान्तविषयाकारत्वं बुद्धेर्बुद्धिरेवावगच्छत्यात्मा वा । न तावद्बुद्धिरेव । स्वयं स्वरूपस्याप्रतिपत्तावहं संक्रान्तविषयाकारेति प्रतिपत्तेरनुपपत्तेः । तथा तत्प्रतिपत्तौ पुनः सिद्धं बुद्धेः स्वव्यवसायत्वम् । आत्माऽपि बुद्ध्यर्थावप्रतिपद्य संक्रान्तविषयाकारत्वं बुद्धौ प्रतिपद्यते प्रतिपद्य वा । नाद्यः पक्षः । अर्थस्य बुद्धेश्चाप्रतिपत्तौ तत्प्रतिपत्तेरघटनात् । द्वयोर्हि प्रतिपत्तावयमत्र संक्रान्त इति प्रतिपत्तिर्युक्ता । इदं वदनमत्र दर्पणे संक्रान्तमिति प्रतिपत्तिवत् । अथ प्रतिपद्येति पक्षः, तर्हि बुद्ध्यर्थावात्मा किं स्वतः प्रतिपद्यते बुद्ध्यन्तरेण वा । स्वतश्चेत्, तर्हि बुद्धिकल्पनावैयर्थ्यम् । क्रियायाः करणमन्तरेणायोगात्तत्कल्पनायाः सार्थकत्वमिति चेत्, तर्हि कथमात्माबुद्ध्यर्थौ स्वतः प्रतिपद्यत इति प्रतिजानीषे । बुद्ध्यन्तरेण तत्प्रतिपत्तौ वाऽनवस्था । न च प्राक्तनबुद्धिकाले बुद्ध्यन्तरमस्ति । ज्ञानयौगपद्यानभ्युपगमात् । अतः कथं बुद्ध्यन्तरेणापि प्राक्तनबुद्धिकाले स्वयमसता बुद्ध्यर्थप्रतिपत्तिरात्मनः स्यात् । चिच्छायासंक्रान्तिरपि बुद्धौ पुरुषस्य प्रतिबिम्बनमुच्यते यथा वदनसंक्रान्तिर्दर्पणे वदनस्य । न च व्यापिनः पुरुषस्य क्वचित्प्रतिबिम्बनं युज्यते । तथा हि यद् व्यापकं न तत् क्वचित्प्रतिबिम्बति यथा व्योम, व्यापकश्चात्मेति । प्रतिबिम्बने वात्मनो भवदभिप्रायेणास्मादृशामसंवेद्यपर्वणि स्थितत्वान्न प्रतिबिम्बप्रतिपत्तिः स्यात् । तथाहि यदसंवेद्यपर्वणि स्थितं न तस्य क्वचित् प्रतिबिम्बग्रहणं यथोभयसम्प्रतिपन्नस्य कस्यचिदत्यन्तसूक्ष्मस्य पदार्थस्य असंवेद्यपर्वणि स्थितस्य

भवदभिप्रायेणस्मादृशामात्मेति । तद्ग्रहणे वा मुखदर्प्पणयोरिव प्रकृतिपुरुषयोर्विवेकेनावधारणात् तन्निमित्तः सर्वस्य सर्वदा मोक्षः स्यात् । ततो न कश्चिच्छास्त्रश्रवणमननादिषु प्रयतेत । यच्चोक्तं सतोऽप्यनयोर्विवेकस्य संसर्गविशेषवशाद्विप्रलब्धेन प्रमात्रा प्रत्येतुमशक्तेरयोगोलकज्वलनविशेषवदित्यादि । तदप्युक्तिमात्रम् । अयोगोलकज्वलनयोरपि परस्परं भेदाभावात् । अयोगोलकद्रव्यं हि पूर्वाकारपरिहारेण वह्निसन्निधानाद्विशिष्टरूपस्पर्शपर्यायाधिकरणमेकमेवोत्पन्नमनुभूयते । आमाकारपरिहारेण पाकाकाराधिकरणकुम्भद्रव्यवत् । एवं च ययोरित्याद्यनुमाने प्रतीयमानोऽन्योन्यासम्भविरूपस्पर्शविशेषत्वाख्यो हेतुरसिद्धः । अयोगोलकज्वलनाख्यद्रव्यद्वयस्यैव तदानीमभावात् । तस्मात् तप्तायोगोलकवदेकत्वेनानुभूयमानं स्वपरप्रकाशकं बुद्ध्युपलब्धिज्ञानमिति पर्यायं चैतन्यतत्त्वमेवाभ्युपेयं न पुनस्तद्व्यतिरिक्ता तेन संसृष्टा जडस्वभावप्रधानकर्म्मा बुद्धिरिति । यदप्यभिहितं तस्मात् तत्संसर्गादचेतनं चेतनावदिव लिङ्गमिति । तत्र कोऽयं संसर्गशब्दार्थः प्रतिबिम्बनं भोग्यभोक्तृभावो वा । न तावत्प्रतिबिम्बनम् । तस्यानन्तरमेव निरस्तत्वात् । नापि भोग्यभोक्तृभावः । पुरुषस्य निरभिलाषत्वेन सुखदुःखसंविल्लक्षणभोगाभावो तस्य भोक्तृतायां प्रकृतेश्च भोग्यताया अनुपपत्तेः । चेतनावदिवेत्यस्य च कोऽर्थः । किमचेतनं चेतनं सम्पद्यत इति तच्छायाच्छुरितं वा । तत्र नाद्यः पक्षः श्रेयान् । अन्यसन्निधानेऽन्यस्यान्यधर्मस्वीकारासम्भवात् । अन्यथाऽकर्तृत्वादिधर्म्मोपेतात्मसन्निधानात् प्रकृतेरप्यकर्तृत्वादिधर्मस्वीकारः स्यात् । तथा च प्रकृतेर्महानित्यादिजगत्प्रपञ्चप्ररूपणा प्रलयमाप्नुयात् । अत्रैवार्थे प्रयोगः । चेतना बुद्धौ तद्व्यपदेशहेतुर्न भवत्यात्मधर्म्मत्वाद्यो य आत्मधर्मः स सोऽन्यत्र तद्व्यपदेशहेतुर्न भवति यथा प्रकृतावकर्तृत्वादिरात्मधर्म्मश्च चेतनेति । अथ तच्छायाच्छुरितमिति द्वितीयपक्षः चेतनासन्निधाने हि बुद्धिस्तया छुरिता भवतीति ।

सोऽप्यनुपपन्नः । चैतन्यसन्निधानस्य सदैव सद्भावेन बुद्धेरासर्गप्रलयस्थायिन्याः सदैव छायाङ्कुरितत्वापत्त्या सदा विषयव्यवस्थापकत्वप्रसक्तेः । न च बुद्धेः पारमार्थिकचैतन्याभावे विषयव्यवस्थापनशक्तिर्युक्ता न खलु माणवकस्य पावकोपचाराद्दाहादिजननशक्तिर्दृष्टा । ततः परमार्थतो बुद्धिश्चिद्रूपा सिद्धा । तथा च प्रयोगः । बुद्धिः परमार्थतश्चिद्रूपा मुख्यतोऽर्थस्य व्यवस्थापकत्वात् यत्पुनः परमार्थतश्चिद्रूपं न भवति न तन्मुख्यतोऽर्थव्यवस्थापकं यथा प्रतिपन्न तथा चेयं तस्मात्तथा । न चात्र प्रत्यक्षबाधा । एकमेव ह्यनुभवसिद्धं संविद्रूपं हर्षविषादाद्यनेकाकारं विषयव्यवस्थापकमनुभूयते । तस्यैवैते चैतन्यं बुद्धिरध्यवसायो ज्ञानं संवित्तिरिति पर्यायाः । अत एव चेदमपि प्राप्तावसरमनुमानम् । चैतन्यं ज्ञानमेव तद्वाचकैः प्रतिपाद्यमानत्वात् । प्रसिद्धो हि लोके चेतयते जानीते बुद्ध्यतेऽध्यवस्यति पश्यतीत्येकार्थे प्रयोगः । न च शब्दभेदमात्राद्वास्तवोऽर्थभेदोऽतिप्रसङ्गात् । सिद्धे चैवं बुद्धेश्चिद्रूपत्वे स्वसंविदितत्वमपि मूर्द्धाभिषिक्तमस्याः स्थितम् । तथा हि बुद्धिः स्वसंविदिता चिद्रूपत्वात् यत्तु नैवं तन्नैवं यथा घट इति ।

संवेदने ये कथयन्ति जाड्यं स्वस्यैव जाड्यं प्रथयन्ति तेऽत्र ॥
तस्मात्स्वनिश्चायकमभ्युपेतुं युक्तं तदेतत्कपिलस्य शिष्याः॥२४५॥

एतेन चार्वाकविटोऽपि तुल्ययुक्तित्वतः क्षिप्त इहावसेयः ॥
निरस्य जीवं वसुधादिधर्म्ममचेतनज्ञानमुपैति योऽत्र ॥ २४६ ॥

तथाहि सोऽपि ज्ञानस्य ज्ञानान्तरवेद्यत्वं यदि ब्रूयात् तदस्यापि योगसाङ्ख्यपक्षसमुपन्यस्तसमस्तदोषप्रसक्तिः । अथैवमसावनुमानयेत् । ज्ञानं न स्वसंविदितं भूतपरिणामत्वात् पटादिवदिति तदा तत्र हेतोरसिद्धत्वमुद्ग्राहणीयम् । आत्मपरिणामत्वेन ज्ञानस्य प्रतिवादिनाऽभ्युपगमात् । आत्मसिद्धिश्च प्रबन्धेन सप्तमपरिच्छेदे करिष्यते इति । एवं च ।

---

१ 'तत्' इत्यधिकं म. पुस्तके ।

बुद्धेः पारोक्ष्यपक्षः क्षयमुपगमितो जैमिनीयाभ्युपेतः
पूर्वं तस्यापि पश्चात् प्रलयवसुमतीं योगपक्षोऽत्र नीतः ॥
ज्ञाने जाड्याभिमानस्तदनु शिथिलतः सर्वथा कापिलानां
पक्षो लोकायतानां पुनरयमधुनाऽक्षेपि सङ्क्षेपवृत्त्या ॥ २४७॥

ततश्च—

प्रक्षीणनिःशेषविपक्षपक्षो ज्ञानं स्वसंवेदनवाद एषः ।
प्राप्तः प्रतिष्ठां परमामिदानीं जितं च जैनैर्जयकेलिलोलैः ॥२४८॥
प्रकाशकं स्वस्य परस्य चेत्थं सिद्धं समारोपविमुक्तरूपम् ।
ज्ञानं प्रमाणं निखिलाऽपि यस्मान्निष्पद्यते संव्यवहारवीथी॥२४९॥१८॥

अथ किं तज्ज्ञानस्य प्रामाण्यं यत्सम्पर्कादिदं प्रमाणमिति व्यपदिश्यत इत्याह—

## ज्ञानस्य प्रमेयाव्यभिचारित्वं प्रामाण्यमिति ॥१९॥

यदि पुनरर्थाव्यभिचारित्वमित्युच्येत तदा सत्यं वाचस्पतेर्दूषणकणिकाकणमुपजीव्यता तावदर्थाव्यभिचारः प्रामाण्यं, "[1] सत्यपि वह्निनियतत्वे धूमस्य कुतश्चिन्निमित्तादनुत्पादिताग्निज्ञानस्य प्रामाण्याभावात् नीलपीतादिषु प्रत्येकं व्यभिचारेऽपि चक्षुषो यथार्थज्ञानजनकत्वेनैव प्रामाण्यात् " इत्यभिदधानः श्रीधरो दुर्धर एव भवेत् । न च प्रमेयाव्यभिचारित्वाभिधानेऽपि समानमेतदिति मन्तव्यम् । वह्नेरतदानीं प्रमेयत्वाभावात् । नीलपीतादीनां च प्रमेयत्वात् प्रमाणापेक्षयैव हि भावानां प्रमेयत्वं धूमध्वजज्ञानमजनयति च धूमे न प्रामाण्यस्यावसर इति कस्य प्रामाण्यमन्विष्यताम् । नीलपीतादीनां च स्वविषयं ज्ञानं जनयतां यदि न प्रमेयत्वम् । तदा दत्तो जलाञ्जलिः प्रमेयस्य । यतो नीलादिप्रमेयाव्यभिचारित्वाज्ज्ञानस्यैव तत्र प्रामाण्यं संगच्छते न चक्षुषः । यच्चावोचद्वाचस्पतिः । न च तेषां "न प्रामाण्यमिति साम्प्रतम् । प्रमितिक्रियां प्रति साधकतमत्वसम्भवात् ।

---

१ न्यायकन्दल्या पृ. २१७ प. २६

अन्यथा काष्ठादीनामपि पाकादावसाधकतमत्वप्रसङ्गादिति " ।तत्र भवेदयं प्रसङ्गः सङ्गतो यद्युपपद्येत चक्षुरादीनां प्रमितिं प्रति साधकतमत्वम् । न चैवम् । ज्ञानस्यैव तत्र साधकतमत्वेन सविस्तरं प्रसाधितत्वात् ॥१९॥

अथ प्रसङ्गादायातमप्रामाण्यमपि प्रकाशयन्नाह—

## तदितरत्त्वप्रमाण्यमिति ॥ २० ॥

तस्मात् प्रमेयाव्यभिचारित्वात् । इतरत् प्रमेयव्यभिचा[१]रित्वम् । अप्रामाण्यं प्रत्येयम् । प्रमेयव्यभिचारित्वं च ज्ञानस्य स्वव्यतिरिक्तग्राह्यापेक्षयैव लक्षणीयम् । स्वस्मिन् व्यभिचारित्वासम्भवात् । तेन सर्वं ज्ञानं स्वापेक्षया प्रमाणमेव न प्रमाणाभासः । बहिरर्थापेक्षया तु किञ्चित् प्रमाणं किञ्चित्पुनस्तदाभासम् । तदुक्तम्, "[२]भावप्रमेयापेक्षायां प्रमाणाभासनिह्नवः । बहिः प्रमेयापेक्षायां प्रमाणं तन्निभं च " ॥ भावेति सामान्यशब्दोऽपि बहिरित्यभिधानाज्ज्ञानस्वरूपे वर्त्तत इति । तच्चार्हतो नान्यस्यास्वसंविदितज्ञानवादिनः ।

प्रामाण्यं स्वत एव युक्तिपदवीमायाति निःसंशयं
ज्ञानानां घटनामुपैति परतोऽप्रामाण्यमेकान्ततः ॥
उत्पत्तौ स्वविनिश्चये च तदिदं यज्जैमिनीया जगुः
तन्न्यक्कारपरायणं निजमतं ब्रूतेऽधुना सूत्रकृत्॥२४८॥२०॥

## तदुभयमुत्पत्तौ परत एव ज्ञप्तौ तु स्वतः परतश्चेति ॥ २१ ॥

अत्र ल्यब्लोपे पञ्चमी परं स्वं चापेक्ष्य । ज्ञानस्य हि प्रामाण्यमप्रामाण्यं च द्वितयमपि ज्ञानकारणगतगुणदोषरूपं परमपेक्ष्योत्पद्यते । निश्चीयते त्वभ्यासदशायां स्वतोऽनभ्यासदशायां तु परत इति । तत्र ज्ञानस्याभ्यासदशायां प्रमेयाव्यभिचारित्वादितरस्माच्च प्रामाण्या-

१ 'चरितत्वम्' इति म. पुस्तके पाठः । २ आप्तमीमांसायां श्लो. ८३.

प्रामाण्यनिश्चयः । संवादकबाधकज्ञानमनपेक्ष्य प्रादुर्भवन् स्वतो भवतीत्यभिधीयते । अनभ्यासदशायां तु तदपेक्षया जायमानोऽसौ परत इति । उत्पत्तौ परतः प्रामाण्ये किं प्रमाणमिति चेत्, उच्यते । प्रामाण्यं ज्ञानहेत्वतिरिक्तहेत्वधीनं ज्ञानत्वे सति कार्यत्वादप्रामाण्यवत् । यदि पुनः प्रामाण्यं ज्ञानहेतुमात्राधीनं भवेत् । तदा निर्विवादाप्रामाण्यं पार्वणेन्दुद्वयसंवेदनमपि प्रमाणता प्रतिपद्येत । न खलु तत्र ज्ञानहेतुर्न विद्यते । तदनुत्पत्तिप्रसङ्गादसंवेदनत्वप्रसङ्गाच्च ।

ज्ञानसामान्यकारणव्यतिरिक्तो दोषाभाव एव प्रामाण्ये हेतुर्न तु भावरूपः कश्चित् गुण इति पराभिमतस्य खण्डनम् ।

अथ तत्र ज्ञानहेतुसम्भवेऽप्यतिरिक्तदोषानुप्रवेशादप्रामाण्यमिति चेत् । एवं तर्हि दोषाभावमधिकमासाद्य प्रामाण्यमुपजायते[1], नियमेन तदपेक्षणात् । अस्तु दोषाभावोऽधिको भावस्तु नेष्यत इति चेत्, भवेदप्येवं यदि नियमेन दोषैर्भावैरेव भवितव्यम् । न त्वेवम् । विशेषादर्शनादेरभावस्यापि दोषत्वात् । तस्य ह्यदोषत्वे कथं ततः संशयविपर्ययौ स्याताम् । ततो विशेषादर्शनाभावो भावस्वभाव एवेति स कथं नेष्यते । तथाऽनित्यः शब्दः प्रमेयत्वादित्येवमादौ प्रमेयत्वादिलिङ्गगतानां विपर्यासादिदोषाणां भावस्वभावानामप्यभावे प्रामाण्यानुपपत्तेः । न खलु प्रमेयत्वं स्वरूपमात्रेण निश्चितमिति विपर्यासादिदोषाभावसम्भवाच्छब्दस्यानित्यत्वमनुमापयितुमलम् । अथानैकान्तिकत्वाद्दोषाभावस्तत्रासिद्ध इति चेत्, ननु कुतोऽनैकान्तिकत्वम्, नियमाभावादिति चेत्, अयत्नसम्पन्नसमीहितार्थास्तर्हि संवृत्ताः स्मः । दोषाभावातिरिक्तस्य भावस्वभावस्य नियमस्य प्रामाण्यहेतोस्त्वयैवैवं प्रसाधनात् । अथान्यत्र यथा तथाऽस्तु शब्दे तु विप्रलिप्सादिदोषाभावे वक्तृगुणापेक्षा प्रमाण्यस्य नास्तीति चेत्, तदननुगुणम् । वक्तृगुणाभावे तत्राप्रामाण्यस्य वक्तृदोषापेक्षा नास्तीति विपर्ययस्यापि सुवचत्वात् । अप्रामाण्यं प्रति दोषाणामन्वयव्यतिरेकौ

१ ' उपजायेत ' इति भ. म पुस्तकयोः पाठः ।

स्त इति चेत्, न । प्रमाण्य प्रति गुणानामपि तयोस्तुल्यत्वात् । पौरुषेयविषयेयमस्तु व्यवस्था अपौरुषेये तु दोषनिवृत्त्यैव प्रामाण्यमिति चेत्, न । गुणनिवृत्त्याऽप्रामाण्यस्यापि सम्भवात् । तस्या अप्रामाण्यं प्रति सामर्थ्यं नोपलब्धमिति चेत्, दोषनिवृत्तेः प्रामाण्यं प्रति क्व सामर्थ्यमुपलब्धम् । लोकवशादिति चेत् । तदितरत्रापि तुल्यम् । लोकवचसामप्रामाण्ये दोषा एव कारणं गुणनिवृत्तिस्त्ववर्जनीयसन्निधिरिति चेत् । प्रामाण्यं प्रति गुणेष्वपि तुल्यमेतत् । गुणानां दोषोत्सारणप्रयुक्तोऽसाविति चेत्, दोषाणामपि गुणोत्सारणप्रयुक्तोऽसावित्यस्तु । अथैवं वेदानामपौरुषेयतया गुणदोषयोरुभयोरप्यभावे तद्धेतुकयोः प्रामाण्याप्रामाण्ययोरभावात्तृतीयस्य च राशेरसम्भवान्निःस्वभावत्वं भवेदिति चेत् । किं न खलु भोः खलस्वभावमात्मानं त्वमुपालभसे । यः किलामीषामकर्तृकत्वं पूत्करोषि । तस्माद्यथा यथाक्रमं द्वेषाभावस्य रागाभावस्य वाऽविनाभावेऽपि प्रवृत्तिनिवृत्तिप्रयत्नयो रागं द्वेषं च नियमेनानुविद्धतो रागद्वेषकारणकत्वं न तु निवृत्तिप्रयत्नो द्वेषरूपभावहेतुकः । प्रवृत्तिप्रयत्नस्तु सत्यपि रागानुविधाने द्वेषाभावमात्रनिबन्धन इति विभागो युज्यते ।सत्यपि द्वेषानुविधाने निवृत्तियत्नस्य रागाभावमात्रहेतुकत्वापत्तेः । तथा गुणाभावस्य दोषाभावस्य वाऽविनाभावेऽप्यप्रामाण्यप्रामाण्ययोर्दोषान् गुणांश्च नियमेनानुविद्धतोर्दोषगुणकारणत्वमनुसरणीयम् । न त्वप्रामाण्यं दोषहेतुकं प्रामाण्यं सत्यपि गुणानुविधाने दोषाभावमात्रहेतुकम् । दोषान्नियमेनानुविद्धतोऽप्यप्रामाण्यस्य गुणाभावमात्रहेतुकत्वप्रसक्तेरिति । अथ वेदानामपौरुषेयत्वेनापेतवक्तृदोषत्वं तथा च तद्धेतुकस्याप्रामाण्यस्याप्यभावात्ततः प्रविशति स्वत एव तेषु प्रामाण्यम् । एवं च गुणाभावेऽपि सम्भवत्प्रामाण्यं न गुणहेतुकमेवेति वक्तुं युज्यत एवेति चेत् । व्याहतमेतत् । तत एवैतेषाम[1]पेतवक्तृगुणत्वं तथा च तद्धेतुकस्य प्रामाण्यस्याप्यभावस्ततश्चाप्रयत्नो-

१ 'एवैनत्' इति प. म. पुस्तकयोः पाठः ।

पनतमप्रामाण्यमिति दोषाभावेऽपि तत्सम्भवन्न दोषहेतुकमेवेति वक्तुं युक्तमित्येवं विपर्ययस्यापि कल्पयितुं शक्यत्वादिति । तथा प्रामाण्यं विज्ञानमात्रोत्पादककारणकलापातिरिक्तकारकोत्पाद्यं विज्ञानमात्रानुवृत्तावपि व्यावर्त्तमानत्वाद्यदित्थं तदित्थं सम्यग्ज्ञानेऽपि विज्ञानमात्रानुवृत्तावपि व्यावर्त्तमानमप्रामाण्यम् । तथा चेदं तस्मात्तथा। न चात्रासिद्धो हेतुः । मिथ्याज्ञाने विज्ञानमात्रानुवृत्तावपि प्रामाण्यव्यावृत्तेर्वादिप्रतिवादिनोः प्रतीतत्वात् । नापि विरुद्धः । सपक्षे सद्भावात् । [1]पदार्थसिद्धिस्ततश्च ते[2] वाजिविषाणकल्पा । ननु यथार्थोपलब्धिलक्षणलिङ्गसमुत्थमनुमानं तन्निश्चायकमस्त्येवेति चेत् । तन्न युक्तम् । यतो यथार्थोपलब्धिलक्षणलिङ्गसमुत्थानुमानान्निर्दोषाणामेव कारणाना निश्चयो नतु सगुणानाम् । यदि हि यथार्थत्वायथार्थत्वरूपद्वयरहितमेव किञ्चिदुपलब्ध्याख्यं कार्यं भवेत्तदा कार्यत्रैविध्यमध्यवसीयेत यदुत यथार्थोपलब्धेर्गुणवन्ति कारकाणि अयथार्थोपलब्धेर्दोषकलुषितानि । उभयरूपरहितायाः पुनरुपलब्धेः स्वरूपावस्थितान्येवेति । न त्वेवमस्ति । द्वेधा हीयमुपलब्धिरनुभूयते, यथार्था चायथार्था च । तत्रायथार्थोपलब्धिस्तावत् दुष्टकारणजन्यैव संवेद्यते । यथाहि दुष्टकारणकलापाद्दुःशिक्षितकुलालादेः कुटिलकलशादिकार्यमवलोक्यते । तथा तिमिरादिदोषदुष्टान्नयनादिकारणकदम्बकात् कुमुदबान्धवद्वितयप्रत्ययादिका अयथार्थोपलब्धिरपि । अत एवोत्पत्तौ दोषापेक्षत्वादप्रामाण्यं परत एवेति कथ्यते । तदित्थमयथार्थोपलब्धौ दुष्टकारणजन्यत्वेन प्रसिद्धायामिदानीं तृतीयकार्याभावाद्यथार्थोपलब्धिः स्वरूपावस्थितेभ्य एव कारणेभ्योऽवकल्पते इति न गुणकल्पनायै सा प्रभवति । न च स्वरूपावस्थितानि कारणानि कार्यजन्मन्युदासत एव येन यथार्थोपलब्धिजननेऽमीषां गुणसहकारिता परिकल्प्यत इति ।

---

१ अत्र स्वमतप्रतिपादकोऽनन्तरश्च मीमासकाक्षेपोद्वलको वाक्यसन्दर्भः आसादितादर्शेषु पतित इति विज्ञायते । २ 'तव ' इति प. म. पुस्तकयोः पाठः ।

तस्मान्न सन्ति केचन कारणगुणाः । न चेन्द्रियनैर्मल्यादिरेव गुण इति वाच्यम् । नैर्मल्यादिकं हि नयनादीन्द्रियाणां स्वरूपं न पुनः स्वरूपातिरिक्तो गुणः । नैर्मल्यव्यपदेशस्तु लोचनादेर्दोषाभावनिबन्धनः । तथाहि काचकामलादिदोषाणामसत्त्वान्निर्मलमिन्द्रियं तेषां सत्त्वे पुनः सदोषमिति व्यपदिश्यते । अतस्तिमिरादीनामभावः स्वरूपमेवेन्द्रियस्य तत्सद्भावस्तु दोषः । मनसोऽपि निद्राद्यभावः स्वरूपं तत्सद्भावस्तु दोषः । विषयस्यापि निश्चलत्वादिकं स्वरूपं चञ्चलत्वादिकस्तु दोषः । प्रमातुरपि बुभुक्षाद्यभावः स्वरूपं तत्सद्भावस्तु दोषः । न चैतद्वाच्यं विज्ञानजनकानां स्वरूपमयथार्थोपलब्ध्या समधिगतम् । यथार्थत्वं तु पूर्वस्मात्कारणकलापादनुपजायमानं गुणाख्यं सामग्र्यन्तरं परिकल्पयतीति । यतोऽत्र लोकः प्रमाणम् । न चासौ मिथ्याज्ञानात्कारणस्वरूपमनुमिनोति किन्तु सम्यग्ज्ञानात् । एवं च गुणानामसम्भवात्कथं तेभ्यः समुत्पद्यमानं प्रामाण्यं परतः समुत्पद्यत इति ।

मुग्धधिया गदिता भवताऽमी शुश्रुविरे सकलाः कुविकल्पाः ।
जैनमतामृतपूतमतीनामुत्तरकेलिमतः शृणु सम्यक् ॥ २४९ ॥

तथाहि । यत्तावदुक्तम् अव्यक्षमक्षादिनिमित्तसंगतान् गुणान् ग्रहीतुं पटुतापुरःसरान् इत्यादि । तत्र किमिन्द्रिये परोक्षशक्तिरूपे गुणानां प्रत्यक्षेणानुपलम्भादभावः साध्यते, आहोस्वित्प्रत्यक्षे चक्षुर्गोलकादौ बाह्यरूपे । प्रथमपक्षे गुणवद्दोषाणामप्यभावः प्रसज्यते । परोक्षशक्तिरूपे इन्द्रिये अनुपलम्भस्य तुल्यत्वात् । द्वितीयपक्षेऽपि किमात्मप्रत्यक्षेण चक्षुर्गोलकादौ गुणानामनुपलम्भः परप्रत्यक्षेण वा । यद्यात्मप्रत्यक्षेण, तर्हि तेन दोषाणामप्यनुपलम्भात्तत्र सत्त्वं न स्यात् । स्पार्शनप्रत्यक्षेणात्मीयेन स्वचक्षुर्गोलकादिमात्रस्यैवावसायात् । अपरप्रत्यक्षेण चेदनुपलम्भः । नन्वसिद्धमेतत्, यथैव हि काचकामलादयो दोषाः परचक्षुर्गोलकादौ प्रत्यक्षतः परेण प्रतीयन्ते तथा नैर्मल्यादयो गुणा अपि । जातमात्रस्यापि नैर्मल्यादिनेन्द्रियप्रतीतेर्नैर्मल्यादीनां

गुणरूपत्वाभाव इत्युच्यते । तर्हि जातितैमिरिकस्य[1] जातमात्रस्यापि तिमिरादिपरिकरितेन्द्रियप्रतीतेरिन्द्रियस्वरूपातिरिक्ततिमिरादिदोषाणामप्यभावः कथं न स्यात् । कथं चैवं रूपादीनामपि कुम्भादिगुणस्वभावता । उत्पत्तेरारभ्य कुम्भे तेषां प्रतीयमानत्वाविशेषात् । ततः परचक्षुर्गोलकादौ प्रत्यक्षतः परेण प्रतीयमानत्वात् काचकामलादिदोषाणां यथा सत्त्वमङ्गीक्रियते नैर्मल्यादिगुणानामप्यङ्गीकर्त्तव्यम् । अन्यथा तु—

सुव्यक्तं गुणमात्सर्यमकारणमिदं तव ॥
दोषैकपक्षपातित्वं किं ब्रूमस्तत्सखेऽधुना ॥ २५० ॥

अपि च ।

प्रत्यक्षानुपलम्भ्यत्वाद्गुणाभावो यदीष्यते ॥
बुद्ध्यभावस्तथा प्राप्तस्तत एव तव ध्रुवम् ॥ २५१ ॥
बुद्ध्यभावेऽथ सर्वस्य प्रमाणस्याप्यभावतः ।
कथं स्वपक्षसिद्धिस्ते निःसन्देहविपर्यया ॥ २५२ ॥
परपक्षप्रतिक्षेपः कथं वा निष्प्रमाणकः ॥
सिद्धिक्षेपौ च कर्त्तव्यौ स्वपक्षपरपक्षयोः ॥ २५३ ॥
प्रमाणमन्तरेणापि क्रियते यदि तौ त्वया ।
सुष्ठु प्रामाणिकत्वं स्यादात्मनो व्यञ्जितं तदा ॥ २५४ ॥

तन्न प्रत्यक्षानुपलम्भमात्रेण गुणानामभावः कर्त्तुं युक्तः । यदप्यवादि, न शेमुषीलिङ्गकृतापीत्यादि । तदप्यसिद्धम् । गुणग्रहणप्रवणस्यानुमानस्य सद्भावात् । तथाहि । विवादाध्यासितेषु ज्ञानहेतुषु गुणाः सन्ति सम्यग्ज्ञानजनकत्वान्यथानुपपत्तेः । द्विविधमेव हि कार्यं सम्यगसम्यग् न तु तृतीयम् । तस्योपलब्धिलक्षणप्राप्तस्यानुपलब्धेर्निर्विशेषस्य सामान्यस्य शशविषाणकल्पत्वाच्च । तत्राद्यं गुणवत्कारणात् । द्वितीयं तु दोषवत्कारणादुपजायते । उक्तकारणातिरिक्तं तु कार्यवत्कारणमपि नोपलभामह इति सम्यग्ज्ञानलक्षणं कार्यं गुणवत्कारणादेवोपजायत इति सिद्धम् ।

---

१ आजन्मनः तिमिररोगग्रस्तस्य ।

यच्चेन्द्रियगुणैः सह लिङ्गस्य प्रतिबन्धप्रतिषेधार्थं प्रत्यक्षतोऽनुमानाद्वा सम्भाव्येतास्य निश्चय इत्यादि न्यगादि । तदपि परसमयरहस्यानभिज्ञस्य प्रलापमात्रम् । न खलु क्वचिदपि लिङ्गे प्रत्यक्षानुमानाभ्यां साध्येन सार्द्धं प्रतिबन्धावधारणमभिदधति स्याद्वादिनः । किं तूहापरपर्यायात्तर्काख्यात्प्रमाणान्तरात् । तस्माच्च पूर्वोपन्यस्तगुणानुमाने प्रतिबन्धः प्रतीयत एव । ततश्च ।

एवं प्रमाणं सुदृढं गुणेषु प्रवर्त्तते सत्त्वविनिश्चयाय ।
प्रमाणमूला च पदार्थसिद्धिस्ततश्च ते नाश्वविषाणकल्पाः ॥२५५॥

इति सिद्धम् । यदि चैवं सुदृढप्रमाणप्रतिपन्नेष्वपि गुणेषु कुविकल्पैर्विप्लवः क्रियते तर्ह्यप्रामाण्योत्पादकेषु दोषेष्वपि कः समाश्वासः । यथोक्तगुणविप्लवैककुविकल्पजालस्य तत्रापि तुल्यत्वात् । तथाहि ।

अध्यक्षमक्षादिनिमित्तसङ्गतान् दोषान् ग्रहीतुं तिमिरादिकान् स्फुटम् ।
क्षमं न तावद्यदनेन वस्तुनि ज्ञाने न कश्चित्कलहायते सुधीः ॥२५६॥

इत्यादि ।

एवं न दोषेषु तव प्रमाणं प्रवर्त्तते सत्त्वविनिश्चयार्थम् ।
न चाप्रमाणे हि पदार्थसिद्धिस्ततश्च ते वाजिविषाणकल्पाः ॥२५७॥

इति पर्यवसानः पद्योपन्यासः समग्रोऽपि गुणदूषणे वा दोषदूषणेऽपि कर्त्तुं शक्यत एवेति । यदप्युक्तम्, यथार्थोपलब्धिलक्षणलिङ्गसमुत्थानुमानान्निर्दोषाणामेव कारणानां निश्चयो न तु सगुणानामिति । तदप्ययुक्तम् । उक्तन्यायेन गुणजन्यत्वेन तस्याः प्रसिद्धत्वात् । यत्पुनरुक्तम्, द्वेधा हीयमुपलब्धिरनुभूयते यथार्था चायथार्था चेति । तत्र न विप्रतिपद्यामहे । न हि यथार्थत्वायथार्थत्वे विहाय निर्विशेषमुपलब्धिसामान्यमुपपद्यते विशेषनिष्ठत्वात्सामान्यस्य । न खलु शाबलेयबाहुलेयादिविशेषविकलं गोत्वादिसामान्यं प्रतीयते । येनेदमुपलब्धिसामान्यं यथार्थत्वायथार्थत्वविशेषविरहितं प्रतीयेत । यत्तु प्रतिपादितम्,

१ पृष्ठं निर्देष्टुं न शक्यते ग्रन्थस्य त्रुटितत्वात् ।

इदानीं तृतीयकार्योभावाद्यथार्थोपलब्धिः स्वरूपावस्थितेभ्य एव कारणेभ्योऽवकल्पत इति न गुणकल्पनायै सा प्रभवतीति । तदनुपपन्नम् । उक्तन्यायेन गुणदोषविरहितस्य तृतीयकारणस्यासम्भवात् ।

नैर्मल्यादिकं नयनादीनां स्वरूप न ततोऽतिरिक्तो गुण इति मीमांसकमतस्य खण्डनम् ।

यदपि प्रत्यपादि । नैर्म्मल्यादिकं हि नयनादीन्द्रियाणां स्वरूपं न पुनः स्वरूपातिरिक्तो गुण इति । तत्रेदं पर्यनुयुज्यते । कुतो नैर्म्मल्यादेर्नयनादीन्द्रियस्वरूपतासिद्धिः । नयनादिभ्यो भेदेन तस्यानुपलभ्यमानत्वादिति चेत् । तदप्यसमीचीनम् । काचकामलादिदोषाणामपि लोचनादिभ्यः पार्थक्येनानवलोक्यमानानां तत्स्वरूपत्वप्रसक्तेः । किं च नैर्म्मल्यादिकं नयनादीन्द्रियाणां स्वरूपमित्यत्र स्वरूपशब्दस्य कः सम्मतोऽर्थः । तादात्म्यं तन्मात्रत्वं वा । तत्राद्यविकल्पे नैर्म्मल्यादेर्गुणत्वानिषेधस्तादात्म्यस्य गुणत्वाविरोधित्वात् । इतरथा रूपादेरपि गुणत्वाभावः स्यात् । द्वितीयविकल्पस्त्वयुक्तः । चक्षुरादावनुवर्त्तमानेऽपि नैर्म्मल्यादेर्निवर्त्तमानतया तन्मात्रत्वानुपपत्तेः । प्रयोगश्चात्र यस्मिन्ननुवर्त्तमानेऽपि यन्निवर्त्तते न तत्तन्मात्रं यथानुवर्त्तमानेऽपि पटे नील्यादिद्रव्यसंयोगान्निवर्त्तमानः शुक्लादिर्गुणः । अनुवर्त्तमानेऽपि चक्षुरादौ निवर्त्तते काचकामलिनः कुपितादेर्वा नैर्म्मल्यादिकमिति । किंच कथं गुणानभ्युपगमे तस्माद्गुणेभ्यो दोषाणामभाव इत्यादि पदे पदे गुणसद्भावावेदको वार्तिककारोद्गारः शोभेत । यदप्यभाणि नैर्म्मल्यव्यपदेशस्तु लोचनादेर्दोषाभावनिबन्धन इत्यादि । तदपि मनःपीडाकरम् । दोषाभावस्य प्रतियोगिपदार्थस्वभावत्वात् । तुच्छस्वभावत्वे ह्यस्य तुरङ्गशृङ्गस्येव कार्यत्वधर्माधारत्वाविरोधः । न चाऽसिद्धमस्य कार्यत्वलक्षणधर्म्माधिकरणत्वम् । अञ्जनादेश्चक्षुरादौ क्रियमाणत्वप्रतीतेः । ततो दोषाणा प्रतियोगिनो ये गुणास्तत्स्वरूप एव दोषाभावः । लोकप्रती-

१ ' नयेन ' इति प. पुस्तके पाठः । २ 'वा' इति प म. पुस्तकयोः पाठः ।

तिरप्यत्र साक्षिणी । तथाहि । कश्चित्काचकामलादिदोषकलुषितलोचनस्तथाविधौषधप्रयोगसामर्थ्यसमासादितेन्द्रियगुणः केनचित् परमवयस्येन कीदृशौ दृशौ भवतः सम्प्रतिपन्ने इति सस्नेहं सम्भाषितः सन्नभिधत्ते । पुरा सदोषे समभूतामधुना तु लब्धिसम्पन्ने इति । न तु विस्मृत्यापीदमभिदधाति यदुत प्राक्सदोषे मे दृशौ समभूतामिदानीं पुनस्तयोस्तिमिरादिदोषाभावमात्रं तुच्छं सम्पन्नमिति । ततश्च गुणस्वरूपस्य कार्यत्वं सुस्पष्टं प्रतीयत एवेति नासिद्धं कार्यत्वधर्माधारत्वमस्य । तथा च कथं निःस्वभावत्वं तस्येति । यदि च दोषाभावो निःस्वभाव. स्वीक्रियते । तर्हि " **भावान्तरविनिर्मुक्तो भावोऽत्रानुपलम्भवत् । अभावः सम्मतस्तस्य हेतोः किन्न समुद्भवः ॥** " इत्यत्र भावान्तरविनिर्मुक्तो भावोऽभावः सम्मत इत्यस्य विरोधः । एवं च गुणदोषयोः परस्परविरुद्धत्वेनैकप्रतिषेधस्येतरविधिस्वरूपत्वाद्दोषाभावो गुणसद्भावात्मक एवाभ्युपगन्तव्यो यथा वस्त्वभावाभावो वस्तुसद्भावात्मकः । यदि चैवं नाभ्युपगम्यते तर्हि कथं लिङ्गे नियमलक्षणसम्बन्धाभावोऽपि दोषात्मकः स्यात् अभावस्य गुणस्वरूपत्वाभावाद्दोषरूपत्वस्याप्ययोगात् । तथा च काचकामलादिदोषाभावव्यतिरिक्तगुणरहिताच्चक्षुरादेरुपजायमानं प्रामाण्यं यथा स्वतोऽभिधीयते । तथा नियमलक्षणसम्बन्धाभावव्यतिरिक्तदोषरहिताल्लिङ्गादप्रामाण्यमप्युपजायमानमनुमाने स्वतोऽभिधीयताम् । विशेषाभावात् ।

एव च ' **अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः । वस्तुत्वाद्द्विविधस्यात्र सम्भवो दुष्टकारणात् ॥** ' इत्यस्य विरोधः । द्विविधस्येति मिथ्यात्वसंशयस्वरूपस्य । ततो द्वितीयलिङ्गे नियमलक्षणसम्बन्धाभावस्य दोषरूपत्ववदिन्द्रिये दोषाभावस्य गुणरूपता स्यात् । यदपि न चैतद्वाच्यमित्याद्याशंक्य यतोऽत्र लोकः प्रमाणं न चासौ मिथ्याज्ञानात् कारणस्वरूपमात्रमनुमिनोति किन्तु सम्यग्ज्ञानादिति समाहितम् ।

---

१ मीमांसाश्लोकवार्तिके सू. २ चोदनासूत्रे श्लो. ५४.

तदपि लोकव्यवहारव्याहतम् । लोको हि यथा मिथ्याज्ञानात्कारणस्वरूपमेवानुमिनोति तथा सम्यग्ज्ञानादपि । यथा च मिथ्याज्ञानाद्दोषवन्ति कारणानि परिकल्पयति । तथा सम्यग्ज्ञानाद्गुणवन्ति तानीति ।

तत्प्रामाण्यं गुणापेक्षमुत्पत्तिं प्रतिमानतः ॥
सिद्धिसौधमुपारूढमित्यलं बहुजल्पितैः ॥ २५८ ॥

अनभ्यासदशायां प्रामाण्यस्य परतस्त्वसाधकमनुमानम् ।

अनभ्यासदशायां प्रामाण्यं परतः प्रतिपद्यत इति । कुतः प्रतीयत इति चेत् । अनभ्यासदशायां प्रामाण्यं परतो ज्ञायते संशयास्पदत्वादित्यत इति ब्रूमः । यदि हि ज्ञानेन स्वप्रामाण्यं स्वयमेव ज्ञायेत यथार्थपरिच्छेदकमहमस्मीति, तदा प्रमाणमप्रमाणं वेदं ज्ञानमिति प्रामाण्यसंशयः कदाचिदपि नोत्पद्यते ज्ञानत्वसंशयवत् । निश्चिते तदनवकाशात् । अथ प्रमाणवदप्रमाणेऽपि ज्ञानमिति प्रत्ययरूपसमानधर्म्मदर्शनाद्विशेषस्य कस्यचिदप्यदर्शनादुत्पद्यत एव । निश्चितेऽपि प्रामाण्ये संशय इति चेत । नैतत्संशयकारणानुगुणम् । न खलु साधकबाधकप्रमाणाभावमवधूय समानधर्मदर्शनादेवासौ भवितुमर्हति । तथा सति तदनुच्छेदप्रसङ्गात् । न चेह तद साधकबाधकप्रमाणाभावःसम्भवी । स्वतः प्रामाण्यज्ञप्तिरूपस्य प्रामाण्यसाधकस्याप्रामाण्यबाधकस्य च प्रमाणस्य विजृम्भमाणत्वात् । भवति चानभ्यासदशाया प्रामाण्ये सन्देहस्तस्मान्नात्र स्वतो ज्ञप्तिः । अथ झटिति प्रचुरा च तथाविधा प्रवृत्तिरन्यथानुपपद्यमाना स्वतः प्रामाण्यज्ञप्तिमाक्षिपतीति चेत् , नैतत् । अन्यथैवोपपत्तेः । करणं तत्कारणमभीष्टाभ्युपायताज्ञानं तदपि तज्जातीयत्वलिङ्गानुभवादिप्रभवमिति न प्रामाण्यग्रहस्य कश्चिदप्युपयोगः । उपयोगे वा स्वत इति कुत एतत् ।

अथ यदि स्वतः प्रामाण्यज्ञप्तिर्न स्यान्न स्यादेवैषा । परतो ज्ञप्ति-

प्रामाण्यज्ञप्तिः परत इति मीमांसकस्य पूर्वपक्ष विस्तरश उत्पाद्य संवादकज्ञानात्प्रामाण्यग्रह इति व्यवस्थापनेन तत्खण्डनम्।

पक्षस्यानुपपद्यमानत्वात् । तथाहि । प्रामाण्यं स्वज्ञप्तौ कारणगुणज्ञानं बाधकाभावज्ञानं वा संवादकज्ञानं वा परमपेक्षेत । न तावत्कारणगुणज्ञानम् । तद्धि नेन्द्रियजं सम्भवति । अतीन्द्रियेन्द्रियादिकारणाधिकरणत्वेन परोक्षत्वाद्गुणानाम् । नापि लिङ्गजम् । नापि लिङ्गस्यैवाभावात् । उपलब्ध्याख्यकार्यपरिशुद्धिलिङ्गमस्तीति चेत्, मैवम् । अप्रतिपन्नायास्तस्यास्तद्गमकत्वानुपपत्तेः । उपलब्ध्याख्यकार्यपरिशुद्धिग्रहणं प्रामाण्यज्ञप्तिश्चेति खल्वनर्थान्तरम् प्रामाण्यज्ञप्तिश्च कारणगुणज्ञानाद्भवतीति प्रस्तुतं तथा चेतरेतराश्रयम् । उपलब्ध्याख्यकार्यपरिशुद्धिग्रहणात्कारणगुणज्ञानं तज्ज्ञानाच्च तद्ग्रहणमिति । तन्न कारणगुणज्ञानं स्वज्ञप्तौ प्रामाण्यमपेक्षते । नापि बाधकाभावज्ञानम् । यतस्तदपि प्रमाणमप्रमाणं वा भवेत् । प्रथमपक्षे कुतस्तत्प्रामाण्यज्ञप्तिः । परस्माद्बाधका[1]भावज्ञानाच्चेत् तर्हि तस्यापि तज्ज्ञप्तिरपरस्मात्तस्मादित्येवमनवस्था । द्वितीये तु स्वयमप्रमाणं बाधकाभावज्ञानं कथं प्रामाण्यं ज्ञापयेत् । ततो न बाधकाभावज्ञानादपि तज्ज्ञप्तिः । नापि संवादकज्ञानात् । संवादकज्ञानं हि समानजातीयं भिन्नजातीयं वा भवेत् । यदि समानजातीयम् । तदपि किमेकसन्तानप्रभवं भिन्नसन्तानप्रभवं वा । न तावद्भिन्नसन्तानप्रभवम् । देवदत्तघटज्ञाने यज्ञदत्तघटस्यापि संवादकत्वप्रसक्तेः । एकसन्तानप्रभवमप्यभिन्नविषयं भिन्नविषयं वा । प्रथमपक्षे संवाद्यसंवादकभावाभावः । विशेषाभावात् । अभिन्नविषयत्वे हि यथोत्तरज्ञानं पूर्वज्ञानस्य संवादकं तथा पूर्वमप्युत्तरस्य संवादकं किन्न भवेत् । कथं चोत्तरस्यापि संवादकत्वेनाभिमतस्य ज्ञानस्य प्रामाण्यनिश्चयः । तदुत्तरकालभाविनोऽन्यस्मात्तथाविधादेवेति चेत् । तर्हि तस्याप्यन्यस्मात्तथाविधादेव प्रामाण्यनिश्चय इत्यनवस्था । प्रथम-

---

१ ' बाधकभाव ' इति प. म पुस्तकयोः पाठः ।

प्रमाणादुत्तरस्य प्रामाण्यनिश्चये परस्पराश्रयः । अथ भिन्नविषयमिति द्वितीयः पक्षः । सोऽपि न श्रेयान् । एकस्तम्भज्ञानं प्रति स्तम्भान्तरज्ञानस्य प्रामाण्यव्यवस्थापकत्वापत्तेः । तन्न समानजातीयं संवादकज्ञानमुपपद्यते । नापि भिन्नजातीयम् । तद्धि किमर्थक्रियाज्ञानमुतान्यत् । न तावदन्यत्, घटज्ञानात्पटज्ञाने प्रामाण्यनिश्चयप्रसङ्गात् । नाप्यर्थक्रियाज्ञानम् । प्रथमस्य प्रवर्त्तकज्ञानस्य प्रामाण्यनिश्चयाभावे प्रवृत्त्याद्यभावेनार्थक्रियाज्ञानस्यैवाघटनात । निश्चितप्रामाण्यात्तु प्रवर्त्तकज्ञानात्प्रवृत्तौ दुर्निवारश्चक्रकावतारः । तथाहि प्रवर्त्तकज्ञानप्रामाण्यनिश्चयात्प्रवृत्तिः, प्रवृत्तेरर्थक्रियाज्ञानं, अर्थक्रियाज्ञानाच्च प्रवर्त्तकज्ञानप्रामाण्यनिश्चय इति । कथं चार्थक्रियाज्ञानस्यापि प्रामाण्यनिश्चयः, अन्यस्मादर्थक्रियाज्ञानादिति चेत्, तर्हि अनवस्था । प्रवर्त्तकज्ञानाच्चेत्, अन्योन्याश्रयः । अर्थक्रियाज्ञानस्य स्वतः प्रामाण्यनिश्चयाभ्युपगमे च प्रवर्त्तकज्ञानस्य तथाभावे किंकृतः प्रद्वेषः । यदाह भट्टः, “ **यथैव प्रथमं ज्ञानं तत्संवादमपेक्षते । संवादेनापि संवादः परो मृग्यस्तथैव हि ॥ १ ॥ संवादस्याथ पूर्वेण संवादित्वात्प्रमाणता । अन्योन्याश्रयभावेन प्रामाण्यं न प्रकल्प्यते ॥ २ ॥ कस्यचित्तु यदीष्येत स्वत एव प्रमाणता । प्रथमस्य तथाभावे प्रद्वेषः केन हेतुना ॥ ३ ॥** ” इति । तदेवं परतः पक्षस्यानुपपद्यमानत्वात्स्वत एव प्रामाण्यग्रहणमुपपद्यत इति । तदेतदखिलमलीकम् । तथाहि यत्तावदुक्तं प्रामाण्यं स्वज्ञप्तौ कारणगुणज्ञानं बाधकाभावज्ञानं वा संवादकज्ञानं वा परमपेक्षेतेत्यादि । तत्र संवादकज्ञानमपेक्षत इत्याचक्ष्महे । कारणगुणज्ञानबाधकाभावज्ञानयोरपि च संवादकज्ञानरूपत्वं प्रतिपद्यामहे । यादृशोऽर्थः पूर्वस्मिन् विज्ञाने प्रथापथमवतीर्णस्तादृश एवासौ येन विज्ञानेन व्यवस्थाप्यते तत्संवादकमित्येतावन्मात्रं हि तल्लक्षणमाचचक्षिरे धीराः । यत्तु कारणगुणज्ञाननिराकरणाय न्यगादि । तद्धि नेन्द्रियजं सम्भवतीत्यादि । तत्तावदेवमेव । यत्पुन-

र्नापि लिङ्गजं लिङ्गस्यैवाभावादित्यादि । तदसंगतम् । उपलब्ध्याख्यकार्यपरिशुद्धिलक्षणस्य गुणग्रहणप्रवणस्य लिङ्गस्य सम्भवात् । यत्पुनस्तत्प्रतिक्षेपाय प्रतिपादितम् । अप्रतिपन्नायास्तस्यास्तद्गमकत्वानुपपत्तेरित्यादि । तदपेशलम् । न खलु कारणगुणज्ञानादेवोपलब्ध्याख्यकार्यपरिशुद्धिवुद्धिर्भवतीति नः पक्षः । अभ्यासदशायां स्वतोऽनभ्यासदशायां तु कारणगुणज्ञानवज्ज्ञानान्तरादपि संवादकात्तदुपपत्तेः । एतेन वाधकाभावज्ञानपक्षप्रतिक्षेपोऽपि प्रतिक्षिप्तः । यत्तु विकल्पितं संवादकज्ञानं हि समानजातीयं भिन्नजातीय वा भवेदिति । तत्रोभयमपि स्वीक्रियत एव । क्वचित्खलु समानजातीयं संवादकज्ञानं भवति । यथा देवदत्तस्य प्रथमं घटज्ञाने प्रवृत्ते यज्ञदत्तस्यापि तस्मिन्नेव घटे घटज्ञानम् । एतेन देवदत्तघटज्ञाने यज्ञदत्तघटज्ञानस्यापि संवादकत्वप्रसक्तेरिति प्रत्युक्तम् । इष्टस्यैवापादनात् । क्वचित्तु भिन्नजातीयमपि संवादकज्ञानं भवति । यथा प्रथमस्य प्रवर्त्तकजलज्ञानस्योत्तरकालभाविस्नानपानावगाहनाद्यर्थक्रियाज्ञानम् । यत्तु समानजातीयमपि किमेकसन्तानप्रभवं भिन्नसन्तानप्रभवं वेत्युक्तम् । तत्रोभयमप्यभ्युपगम्यत एव । भवति ह्येकसन्तानप्रभवमन्धकारकलुषितालोकप्रभवस्य कुम्भज्ञानस्योत्तरकालभाविनस्तिमिरालोकप्रभवं तस्मिन्नेव कुम्भे कुम्भज्ञानम् । भिन्नसन्तानप्रभवं तु समानजातीयं संवादकज्ञानं यदिदानीमेव प्रथममुपदर्शितम् । यत्पुनरेकसन्तानप्रभवपक्षे समाख्यातम् एकसन्तानप्रभवमप्यभिन्नविषयं भिन्नविषयं वेति । तत्राप्युभयमस्माकमभिमतमेव । तत्राभिन्नविषयमेकसन्तानप्रभवं दर्शितमेव । यच्चात्र पक्षे दूषणं प्रथमपक्षे संवाद्यसंवादकभावाभावो विशेषाभावादिति । तदवद्यम् । विशेषाभावस्यासिद्धेः । संवाद्यं हि पूर्वसंवेदनं मन्दसामग्रीसमुत्पाद्यम्, संवादकं पुनरुत्तरकालभावि प्रवलसामग्रीजन्यमिति कथमनयोर्विशेषाभावः सिद्ध्येत् । अभ्यस्तसद्विषयत्वेन च संवादकस्य संवादकान्तरानपेक्षत्वादनवस्थापि पूर्वोक्तात्र न सम्भवति । भिन्नविषयं

त्वेकसन्तानप्रभवं संवादकं यथा रथाङ्गमिथुनादेकतरदर्शनस्यान्यतरदर्शनम् । यत्तूक्तमत्र पक्षे एकस्तम्भज्ञानं प्रतिस्तम्भान्तरज्ञानस्य प्रामाण्यव्यवस्थापकत्वापत्तेरिति । तत्रापि यदि तद्विषययोरविनाभावस्तदा भवत्येव सवादकत्वम् । न खलु निखिलं भिन्नविषयं संवेदनं संवादकमिति ब्रूमः । किं तर्हि यत्र पूर्वोत्तरज्ञानगोचरयोरविनाभावस्तत्रैव भिन्नविषयत्वेऽपि ज्ञानयोः संवाद्यसंवादकभाव इति । यच्च भिन्नजातीयसंवादकज्ञानपक्षे विकल्पितम्, तद्धि किमर्थक्रियाज्ञानमुतान्यदिति । तत्रापि नः पक्षद्वयमपि सम्मतमेव । तत्रार्थक्रियाज्ञानं प्रथमस्य प्रवर्त्तकजलज्ञानस्येत्यादिना प्रागभिहितम् । अर्थक्रियाज्ञानादन्यत्तु भिन्नजातीयं संवादकं यथा एकसहकारफलादिवर्त्तिना रूपादीनामविष्वग्भावलक्षणसम्बन्धिनां परस्परं व्यभिचाराभावाद्रसादिज्ञानमाशंकितविषयाभावस्य प्रामाण्यनिश्चायकम् । यत्पुनरत्र पक्षे घटज्ञानात्पटज्ञाने प्रामाण्यनिश्चयप्रसंगादिति जल्पितम् । तत्केवलं वाचालताचापलम् । अविनाभावो हि संवाद्यसंवादकभावनिबन्धनं नान्यदित्युक्तत्वात् । यत्त्वर्थक्रियाज्ञानपक्षे प्रथमस्य प्रवर्त्तकज्ञानस्य प्रामाण्यनिश्चयाभावे प्रवृत्त्याद्यभावेनार्थक्रियाज्ञानस्यैवाघटनादित्युद्घोषितम् । तदपि ज्ञानन्यायनिराकृतम् । न खलु सर्वत्र प्रवर्त्तकज्ञानस्य प्रामाण्यनिश्चये सति प्रवृत्तिरिति नः पक्षः । किं तर्ह्यनभ्यासदशायां प्रामाण्यसन्देहादपि प्रवृत्तिरिति । न चात्रेद प्रतिपादनीयम् । यदि संशयादपि प्रवृत्तिसम्पन्ना । तर्ह्यर्थक्रियाज्ञानात्प्रामाण्यनिश्चयेन किं प्रयोजनम् । प्रवृत्त्यर्थं हि प्रामाण्यनिश्चयः प्रार्थ्यते सा च सन्देहादपि जातेति । यतस्तत्र प्रामाण्यनिश्चयस्य तद्विषयसंशयापगम एव प्रयोजनं सुप्रतीतमिति किं प्रयोजनान्तरनिरूपणप्रयासेन । ननु प्रामाण्यगोचरसंशयापगमस्यापि किं प्रयोजनमिति चेत् । स्थाने प्रश्नः, किन्तु संशयापगमस्याभ्यासलक्षणमेव प्रयोजनं किं न परामृशसि । यदा ह्येकदाऽर्थक्रियाज्ञानात्प्रामाण्य

१ 'ज्ञान' इति नास्ति भ. पुस्तके ।

निश्चितं भवति । तदा सुखेनैवान्यदाभ्यासात्स्वत एव प्रामाण्यनिश्चयपूर्विका प्रवृत्तिः सिद्ध्यति प्रतिपत्तृणामिति । एतेन निश्चितप्रामाण्यात्प्रवर्त्तकज्ञानात्प्रवृत्तावित्यादिना यच्चक्रकमकीर्त्ति । तदपि परास्तम् । यदि ह्यर्थक्रियाज्ञानादेकान्तेन प्रवर्त्तकज्ञानस्य प्रामाण्यनिश्चये सति प्रवृत्तिः प्रतिज्ञायेत । तदा स्याच्चक्रकदूषणावतारः । ननु प्रामाण्यसन्देहादपि प्रवर्त्तमानः कथं प्रेक्षावान् स्यादिति चेत्, न कथंचिदिति ब्रूमः । सन्देहात्प्रवर्त्तमानस्याप्रेक्षावत्त्वं कक्षीक्रियत एव । न खलु जात्या कश्चित्प्रेक्षावान्नाम समस्ति तदितरो वा । प्रेक्षावरणक्षयोपशमविशेषस्य हि सर्वत्र सर्वदा सर्वेषामसम्भवात् क्वचित्कदाचित्कश्चिदेव प्रेक्षावान् व्यवह्रियतेऽन्यत्र प्रक्षीणाशेषावरणादशेषवेदिनः । एकदा हि कश्चित्प्रेक्षावरणक्षयोपशयविशेषादवाप्तप्रेक्षावद्व्यपदेशः सुनिश्चितप्रामाण्यात् प्रमाणात् क्वचित्प्रवर्त्तते सोऽप्यन्यदा तथाविधक्षयोपशमानवाप्त्या समासादिताप्रेक्षावद्व्यपदेशः संशयादेरपि क्वचित्प्रवर्त्तत इति न कश्चित्प्रतिनियतः प्रेक्षापूर्वकारी तदितरो वा । तथा चोक्तम् ॥ " **प्रेक्षावत्ता पुनर्ज्ञेया कदाचित्कस्यचित् क्वचित् । अप्रेक्षाकारिताप्येवमन्यत्राशेषवेदिनः ॥ १ ॥** " इति ।

सन्देहात्प्रवृत्तावपि प्रामाण्यज्ञप्तेः सोपयोगत्वम् ।

न च सन्देहात्प्रवृत्तिस्वीकारे प्रमाणमनोरथो व्यर्थः । प्रेक्षावत्प्रवृत्तौ तस्य सोपयोगत्वात् । प्रमाणं हि विना प्रेक्षावन्त. कथं कथं क्वचित्कदाचित्प्रवर्त्तन्तामिति । यत्रापि क्वचित्प्रवर्त्तकज्ञानस्य प्रामाण्यनिश्चये सति प्रवृत्तिस्तत्रापि नार्थक्रियाज्ञानात्तस्य प्रामाण्यनिश्चयो येन चक्रकमवतरेत् । किं तर्ह्यभ्यासदशायां स्वत एवानभ्यासावस्थायां तु परत एवानुमानादेः प्रमाणात् । तत्राभ्यासदशायां स्नानभोजनादिसाधनगोचरप्रमाणानां स्वत एव प्रामाण्यनिश्चयः सुप्रतीत एव । अनभ्यासदशायां त्वनुमानादित्थं प्रवर्त्तकज्ञानस्य प्रामाण्यनिश्चयः । यथा कश्चिदविदितवह्निस्वरूपः प्रमाता हेमन्ते हिमानीनिपातावबाधाविधुरितशरीरः तिरस्कृतस-

मस्तशीतावकाशं कमपि साग्निप्रदेशविशेषमुपसर्पन्नन्तराले ज्वलज्ज्वलनाभ्यासे सति तस्योष्णस्पर्शमसाधारणमवधार्य तद्रूपस्पर्शयोरविनाभावं विभाव्य च कालान्तरे दूरात्पुनः पावकरूपविलोकने सति समानोऽयं रूपप्रतिभासोऽभिमतार्थक्रियासाधन एवंविधरूपप्रतिभासत्वात् पूर्वोत्पन्नैवंविधरूपप्रतिभासवदित्यनुमानात्प्रवर्त्तकस्य साधननिर्भासिज्ञानस्य प्रामाण्यं निश्चित्य प्रवर्त्तेत्य इति । कृषीवलादयोऽपि हि अनभ्यस्ते बीजादिगोचरे प्रथमं निहितमधुरनीरावसिक्तसुकुमारमृदि शरावादौ कतिपयशाल्यादिबीजकणगणवपनादिना बीजाबीजे निर्द्धार्य पश्चाद्दृष्टसाधर्म्येणानुमानात्परिशिष्टस्य बीजाबीजतया निश्चितस्योपादानाय हानाय च यतन्ते । तदनन्तरं पुनरभ्यस्ते बीजादिगोचरे परिदृष्टसाधर्म्यादिलिङ्गनिरपेक्षा एव निःशङ्कं कीनाशाः[1] केदारेषु बीजावपनाय प्रवर्त्तन्ते । यत्तु कथं चार्थक्रियाज्ञानस्यापि प्रामाण्यनिश्चय इत्यादिनाऽर्थक्रियाज्ञानलक्षणसंवादकज्ञानपक्षेऽनवस्थाऽन्योन्याश्रयदूषणमभाणि । तदप्युक्तिमात्रम् । अभ्यासदशाया संवादकस्य स्वत एवानभ्यासदशायां तु संवादकान्तरादेव प्रामाण्यप्रसिद्धेः । न च संवादकान्तरापेक्षायामनवस्था । संवादकान्तरैरनभ्यासदशापन्नैरेव भवितव्यमिति नियमाभावात् ।

स्वत एव प्रामाण्यज्ञप्तिरिति ऐकान्तिकमतस्य खण्डनम् ।

ये त्वमी स्वत एव प्रमाणज्ञप्तिं प्राजिज्ञपयँस्तेषामात्मनिबन्धना वा आत्मीयनिबन्धना वा प्रामाण्यज्ञप्तिरभिप्रेता भवेत् । स्वशब्देऽत्रार्थद्वयस्यैव सम्भावनाभूमित्वात् । नाद्यः पक्षः श्रेयान् । बुद्धेरस्वसंविदितत्वेन तद्धर्मस्य प्रामाण्यस्याप्यस्वसंविदितत्वात् । अथ द्वितीयपक्षाङ्गीकारेण येनैव प्रमाणेन प्रमाणत्वसम्मतं ज्ञानं निश्चीयते तेनैव तदाश्रितं प्रामाण्यमपीत्युच्यते । ननु किं प्रमाण प्रमाणत्वसम्मतज्ञानस्य निश्चायकमिति । अर्थापत्तिरिति चेत् । मैवम् । तदुपस्थापकस्यार्थस्याभावात् । अर्थप्राकट्यमर्थापत्त्युपस्थापकोऽर्थोऽस्तीति चेत् । तत्किं यथार्थ-

१ कीनाशाः—कृषीवलाः ।

त्वविशेषणविशिष्टं निर्विशेषणं वा । आद्यपक्षे तस्य यथार्थत्वविशेषणग्रहणं प्रथमप्रमाणादन्यस्माद्वा । प्रथमपक्षे परस्पराश्रयप्रसङ्गः । निश्चितप्रामाण्याद्धि प्रथमप्रमाणाद्यथार्थत्वविशिष्टार्थप्राकट्यग्रहणं तस्माच्च प्रथमप्रमाणप्रामाण्यनिश्चय इति । द्वितीयविकल्पे त्वनवस्था । अन्यस्मिन्नपि हि प्रमाणे प्रामाण्यनिश्चायकार्थापत्त्युपस्थापकस्यार्थप्राकट्यस्य यथार्थत्वविशेषग्रहणमन्यस्मात्प्रमाणादिति। निर्विशेषणं चेदर्थप्राकट्यमर्थापत्त्युपस्थापकम् । तर्ह्यप्रमाणेऽपि प्रामाण्यनिश्चायकार्थापत्त्युपस्थापनापत्तिः अर्थप्राकट्यमात्रस्य तत्रापि सद्भावात् । ततो न स्वत एव प्रामाण्यनिश्चयः ॥

तदित्थं ज्ञप्तिमाश्रित्यानभ्यस्ते विषये स्फुटम् ।
प्रामाण्यं परतः सिद्धमभ्यस्ते स्वत एव तु ॥ २५९ ॥

कारणानि स्वकार्याणि यथाकथंचित्कुर्वन्ति सन्ति स्वतो वा कुर्युः परतो वेति विचारस्य चतुरैरनाश्रयणान्नेह प्रामाण्यस्य कार्ये परिच्छेदम्[1] यथार्थे स्वतः परतो वा प्रवृत्तिरिति निरूप्यते । न खलु पिण्डः कुम्भं स्वतः परतो वा कुर्यादित्यार्यैः[2] कश्चित् पर्यालोचयति । ततश्च—

प्रामाण्यं स्वत एव नित्यमपरं तस्मात्परस्मादिति
प्रोक्तं यत्किल युक्तितस्तदधुना नीतं कथाशेषताम् ॥
एवं चाप्रतिपक्षमत्र जयति प्रौढिं परामाश्रित
स्याद्वादत्रिदशद्रुमामरगिरिर्जैनेश्वरं शासनम् ॥ २६० ॥

पूर्वाचार्यपरम्परापरिचितग्रन्थानुसारादिदं
सर्वैरप्यनुभूयमानमनिशं दोषैरदत्तास्पदम् ॥
मानानामुदितं स्वरूपमिह तद्येनाखिलोऽपि क्षितौ
लोकस्य व्यवहार एव वटते निःशङ्कितः संततम् ॥२६१॥

---

१ 'परिच्छेद' इति प म पुस्तकयो पाठ । २ 'आचार्यः' इति म मः पुस्तकयोः पाठ । ३ 'वा' इति म पुस्तके पाठ ।

विश्वारामाभिरामः सुचरितकुसुमच्छन्नशाखप्रशाखः
केषाञ्चित्प्राणभाजां सरणिमनुसरन्नेत्रयोः पुण्ययोगात् ॥
स्निग्धच्छायाकलापः कुशलशतमणीमञ्जरीजालमञ्जु-
र्जीयात्सेव्यः सुराणा जगति सुरतरु सुव्रतः श्रीजिनेन्द्रः ॥२६२॥

सम्प्राप्ताः स्मृतिगोचरं सुमनसामद्यापि येषां गुणाः
सर्वाङ्गीणमपि क्षणेन पुलकालङ्कारमातन्वते ॥
येऽस्मिञ्जङ्गमधर्म्मसूर्त्तय इव क्षोणीतले रेजिरे
श्रीमन्तो मुनिचन्द्रसूरिगुरवस्ते सन्तु विघ्नापहाः ॥ २६३ ॥

किं दुष्करं भवतु तत्र मम प्रबन्धे
यत्रातिनिर्मलमतिः सततामियुक्तः ॥
भद्रेश्वरः प्रवरयुक्तिसुधाप्रवाहो
रत्नप्रभश्च भजते सहकारिभावम् ॥ २६४ ॥ २१ ॥

इति सकलतार्किकवैयाकरणसैद्धान्तिकसहृदयकविचक्रचक्रवर्त्तिचारित्रचूडामणिसुगृहीतनामधेयश्वेताम्बराधिपश्रीमन्मुनिचन्द्रसूरिचरणसरसीरुहोपजीविना श्रीदेवाचार्येण विरचिते स्याद्वादरत्नाकरे प्रमाणनयतत्त्वालोकालङ्कारे प्रमाणस्वरूपनिर्णयो नाम प्रथमः परिच्छेदः ॥ १ ॥

---

आर्हतमतप्रभाकरस्य

चतुर्थो मयूखः

श्रीमद्वादिदेवसूरिविरचितः

# प्रमाणनयतत्त्वालोकालङ्कारः

तद्व्याख्या च

# स्याद्वादरत्नाकरः



श्रीः

# प्रास्ताविकं किंचित्।

वीरः सर्वसुरासुरेन्द्रमहितो वीरं बुधाः संश्रिताः।
वीरेणाभिहतः स्वकर्मनिचयो वीराय नित्यं नमः॥
वीरात्तीर्थमिदं प्रवृत्तमतुलं वीरस्य घोरं तपो।
वीरे श्रीधृतिकीर्तिकान्तिनिचयः श्रीवीर! भद्रं दिश॥ १॥

आर्हतमतप्रभाकरसंस्थायाश्चतुर्थो मयूखः स्याद्वादरत्नाकराभिधः शासनदेवकृपया प्रकाश्यते। सोऽयं ग्रन्थः (८४०००) चतुरशीतिसहस्रग्रन्थसंख्यात्मको निरमायि श्रीवादिदेवसूरिभिरिति कर्णपरम्परातः समागता प्रथितिः। बहुशः प्रयतमानैरस्माभिस्तत्तज्जैनाचार्याणां सूरीणां च कृपयालम्भि सप्तपरिच्छेदात्मको भागो ग्रन्थराजस्यास्य। अस्मन्मुद्रापितग्रन्थान्तरक्रमेण संमुद्र्यते चेदयं तर्हि व्याप्नुयाद् द्वादशशतीं पृष्ठानामिति संभावयामः। संपूर्णो ग्रन्थ एकस्मिन् विभागे संग्रथ्यते चेद्भवेद् वैरस्याय पिपठिषूणामतो विभागशः संमुद्र्य प्रकाशयितुमारब्ध एषः। तत्र प्रथमो भागः प्रथमपरिच्छेदात्मको मुद्रितः। अयं च द्वितीयो विभागः। प्राय इयतैव प्रमाणेन भागान्तराणां प्रत्येकं प्रतिमासं मुद्रणं स्यादिति समीहामहे। ग्रन्थराजोऽयं बौद्धयौगादिमतानां परामर्शकोऽतोऽवश्यमध्ययनार्हो न केवलं स्याद्वादमतानुयायिनां किंतु भिन्नमतस्थानामपि स्याद्वादमताजिज्ञासूनाम्। अतः पूर्वमयूखवदस्यापि मूल्यालपत्वपरिशिष्टविस्तारग्रन्थान्तर्बहिःपरिचयादिकं सविस्तरमादृतम्। सन्ति चास्य ग्रन्थस्य द्वादशपरिशिष्टानि। किंतु परिशिष्टादिकमन्तिमे विभाग एव मुद्रयितुमर्हम्। अग्रेतनपत्राणां मुद्रयिष्यमाणां निर्देशस्य पूर्वं कर्तुमशक्यत्वात्। केवलं टिप्पन्यादिकमर्थावसायोपयोगि तत्तत्स्थलेऽधोभागे निरदेशि। प्रतिपत्रं पङ्क्त्यङ्का निर्दिष्टा येषामुपयोगः परिशिष्टदर्शनसौकर्याय। अन्यच्च पुस्तकानां वस्त्रात्मकं बन्धनमस्तु न पत्रात्मकमिति सूचयन्ति केचिन्महाभागाः परं तद्व्यक्तिशो ग्राहकैः स्वयमनुष्ठेयम्। अस्माभिस्तथा संपादने यैर्नाभिमतस्तदर्थं द्रव्याधिक्यव्ययस्ते मुधैव पीडितचेतसो भवेयुरिति यथापूर्वं सरणिरादृता। इतिविनिवेदकः।

आर्हतमतप्रभाकरकार्यालयः, पुण्यपत्तनम्।
वी. स. २४५३ दीपावलीपर्व।

विद्वद्वशंवदः—
मोतीलाल लाधाजी

# ॥ अथ द्वितीयः परिच्छेदः ॥

## ॥ नमः श्रीगुरुपाद[1]पङ्कजेभ्यः ॥

प्रत्यक्षेण यदेकतानमनसः साक्षात्पुरोवर्त्तिनं
नासावंशनिवेशनिश्चलदृशः पश्यन्ति यं योगिनः ॥
यं चाद्यापि परोक्षमानवशतो निश्चिन्वते मादृशा-
स्तं सर्वज्ञमुपास्महे प्रति[2]कलं कल्याणसम्पत्तये ॥ २६५ ॥

प्रतिपादितं प्रमाणस्य स्वरूपमथ तत्संख्यामाह—

**तत् द्विभेदं प्रत्यक्षं च परोक्षं चेति ॥ १ ॥**

यत् स्वपरव्यवसायीत्यादि लक्षणतः स्वरूपेण प्रतिपन्नं प्रमाणं तद्विभेदं द्विप्रकारम् । तद्विभेदं प्रत्यक्षानुमानप्रकारेणापि माबोधीत्य-भिमतं समग्रप्रमाणभेदसङ्ग्रहपरं संख्याप्रकारं स्पष्टयन्नाह प्रत्यक्षं च परोक्ष चेति ॥ अक्षमिन्द्रियं प्रति गतं कार्यत्वेनाश्रितं प्रत्यक्षं "**कु[3]गतिप्रादयः**" इति तत्पु[4]रुषः । ततश्च "**द्विगुप्राप्ता[5]पन्नालं पूर्वगतिसमासेषु**" परवल्लिङ्गताप्रतिषेधादभिधेयवल्लिङ्गतायां त्रिलिङ्गः प्रत्यक्षशब्दः सिद्धः । एवं च प्रत्यक्षं ज्ञानं प्रत्यक्षो बोधः प्रत्यक्षा बुद्धिरित्यादयो व्यपदेशाः प्रवर्त्तन्ते । अक्षमक्षं प्रति वर्त्तत इति प्रत्यक्ष-मिति त्वव्ययीभावे "**अव्ययीभावश्च[6]**" इत्यनेन सदा नपुंसकत्वं स्यात् ।

---

१ 'गुरुपादुकाभ्यः' इति भ. प. पुस्तकयोः पाठः । २ 'अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ता कलाः' इत्यमरः १-४-११, 'कला स्यात्कालशिल्पयोः' इत्यनेकार्थः २-४६५. ३ पाणिनिसू. २-२-१८. ४. 'अक्षि प्रति प्रत्यक्ष इति अव्ययीभाव.' इति पाणिनि. ५-४-१०७. ५ 'द्विगुप्राप्तापन्नाल पूर्वगतिसमासेषु प्रतिषेधो वाच्यः' इति कात्यायनवार्तिकम् २-४-२६. ६ पा. सू. २ । ४ । १८.

मानसप्रत्यक्षे प्रवृत्तिनिमित्तद्वारा प्रत्यक्षव्यपदेशोपपादनम् ।

नन्वेवं प्रत्यक्षशब्दस्य व्युत्पत्तौ कथमिन्द्रियानाश्रितस्य मानसस्यावधेश्च[1] प्रत्यक्षव्यपदेशः स्यादिति चेत् । उच्यते । प्रवृत्तिनिमित्तस्य तत्रापि सद्भावात् । अक्षाश्रितत्वं हि प्रत्यक्षशब्दस्य व्युत्पत्तिनिमित्तं गतिक्रियेव गोशब्दस्य । प्रवृत्तिनिमित्तं त्वेकार्थसमवायिनाऽक्षाश्रितत्वेनोपलक्षितमर्थसाक्षात्कारत्वं गतिक्रिययोपलक्षितं गोत्वमिव गोशब्दस्य । अन्यद्धि शब्दस्य व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम् । इतरथा गच्छन्नेव गौर्गौरिति व्यपदिश्येत नापरो व्युत्पत्तिनिमित्ताभावात् । जात्यन्तरविशिष्टं च तुरगादिकं गतिक्रियापरिणतं व्युत्पत्तिनिमित्तसद्भावाद्गोशब्दाभिधेयं स्यात् ।

परोक्षशब्दस्य व्युत्पत्तिः ।

तथाऽक्षेभ्यः परतो वर्त्तत इति परोक्षमिति निपातनात्[2] सिद्धिः । अक्षव्यापारनिरपेक्षं मनोव्यापारेणासाक्षादर्थपरिच्छेदकं यज्ज्ञानं तत्परोक्षमित्यर्थः । चशब्दौ प्रत्यक्षपरोक्षयोस्तुल्यकक्षतां लक्षयतः । द्वयोरपि तयोः स्वपरव्यवसायिज्ञानत्वेन प्रामाण्यं प्रति विशेषाभावात् । तेन यदेकं व्याकुर्वन्ति प्रत्यक्षं सकलप्रमाणज्येष्ठमिति । तत्प्रत्यादिष्टं भवति ।

प्रत्यक्षं सकलप्रमाणज्येष्ठमिति मतस्य खण्डनम् ।

अथोच्यते प्रत्यक्षं ज्येष्ठं प्रमाणं स्वार्थनिर्णीतावन्यानपेक्षत्वादिति । तर्ह्यनुमानमपि ज्येष्ठमस्तु तत एव । न हि तदपि तस्यामन्यापेक्षम् । स्वोत्पत्तौ तदन्यापेक्षमिति चेत् । प्रत्यक्षमपि स्वोत्पत्तावन्यापेक्षमेव । तत्स्वनिमित्तमक्षादिकं तत्रापेक्षते न पुनः प्रमाणमन्यदिति चेत् । अनुमानमपि तथैव । न हि तदपि निश्चितं लिङ्गं हेतुमपेक्ष्य जायमानमन्यत्प्रमाणमपेक्षते । यत्तु लिङ्गस्वरूपग्राहिप्रमाणं तदनुमानोत्पत्तिकारणमेव न भवति । लिङ्गपरिच्छित्तावेव चरितार्थत्वात् । अथ

---

१ अवधिमनःपर्यवकेवलानि मानसज्ञानानि । लक्षणानि अग्रे २१–२२–२३ सूत्रेषु द्रष्टव्यानि । २ 'परोक्षे लिट्' पा. सू. ३-२-११५ इति निपातनात् ।

प्रत्यक्षपूर्वकं प्रमाणान्तरं प्रवर्त्तन इति प्रत्यक्षं ज्येष्ठम् । मैवम् । कस्यचित्प्रत्यक्षस्यापि प्रमाणान्तरपूर्वकत्वात् । तथा हि । वयस्य विलोकय भयादतितरलतारकः कुरङ्गपोतकोऽयं तरसा धरित्रीतलमाक्रामतीत्याद्याप्तशब्दात् कुरङ्गपोतकगोचरं तथा स्मृत्यादेः कुतूहलाकुलितस्य प्रतिपत्तुर्वनदेवकुलादिपदार्थविषयं प्रत्यक्षं शब्दपूर्वकं स्मृत्यादिपूर्वकं च प्रवर्त्तमानं दृष्टमिति । अथ प्रत्यक्षपूर्वकमेव प्रमाणान्तरं प्रवर्त्तते । प्रत्यक्षं तु प्रमाणान्तरपूर्वकमन्यथापीति तदेव ज्येष्ठम् । नैतदपि साधिष्ठम् । अवधारणस्यासिद्धेः । अनुमानस्य तर्कपूर्वकत्वेन व्यवस्थिते । अथ तर्कस्यापि प्रत्यक्षपूर्वकत्वात्तत्पूर्वकस्यानुमानस्यापि परम्परया प्रत्यक्षपूर्वकत्वमिति चेत् । मैवम् । अनुमाने तर्कस्य प्रत्यक्षपूर्वकत्वासम्भवात् । अथ विशब्दावभासित्वात् प्रत्यक्षं ज्येष्ठम् । तर्हि द्विचन्द्राद्यवभासिसंवेदनस्यापि ज्येष्ठत्वापत्तिरिति ।

प्रत्यक्षमेवैक प्रमाणमिति चार्वाकमतस्योपपादनपूर्वक खण्डनम् ।

चार्वाकचर्चाचतुरोऽथ कश्चि-
देवं ब्रवीति स्फुरिताभिमानः ॥
प्रत्यक्षमेक घटते प्रमाणं
निरूप्यमाण न पुन. परोक्षम् ॥२६६॥

तथाहि नानुमानं तावत्प्रमाण गौणत्वात् । पक्षधर्मत्वं हि तज्जनकस्य हेतोः स्वरूपम् । पक्षश्च धर्म्मधर्म्मिसमुदायात्मा । तदनिश्चये कथं तद्धर्मताया हेतौ निश्चयः । तन्निश्चये वानुमानवैफल्यम् । ततोऽवश्यं पक्षधर्मव्यवहारसिद्धये धर्मधर्मिसमुदाये रूढोऽपि पक्षशब्दस्तदेकदेशे धर्मिण्युपचरणीयः । तस्मादित्थं पक्षस्य गौणत्वम् । तद्गौणत्वे च हेतोरपि गौणता । तद्धर्मत्वलक्षणत्वात्तस्य । तस्माद्गौणकारणजन्यत्वेन गौणमनुमानम् । गौणत्वाच्च न प्रमाणम् । अपि चार्थव्यवसायहेतुः प्रमाण भवतीति सकलहृदयप्रतीतम् । अनुमानाच्चार्थव्यवसायो दु.शकः । तथा हि प्रतीयमानादर्थादर्थान्तरप्रतीतिरनुमानम् । प्रतीयमानश्चार्थोऽर्थान्तरेण सम्बद्ध-

१ व्यवसायो-निश्चय ।

स्तस्य गमको भवेदसम्बद्धो वा । न तावदसंबद्धः । अतिप्रसक्तेः । अथ सम्बद्धः । ननु कुतस्तस्य तेन सम्बन्धसिद्धिः प्रत्यक्षादनुमानाद्वा । न तावत्प्रत्यक्षात् । अस्य प्रतिनियतदेशकालाकारगोचरचारितया सार्वत्रिकतत्सम्बन्धग्रहणशक्तेरभावात् । नाप्यनुमानात् । अनवस्थाप्रसक्तेः । तदपि संबन्धग्रहणे सति यतः प्रवर्त्तते सम्बन्धग्रहश्च तत्राप्यनुमानान्तरादिति । किं चावस्थादेशकालभेदाद्भिन्नशक्तित्वेन भिन्नार्थक्रियाकारिणां भावानां सामस्त्येन स्वभावप्रतिबन्धः केनापि न निश्चेतुं शक्यः । शतशोऽप्यामलक्यादिफलानां कषायरसे स्वाद्यमाने क्षीरादेरवसेकेन माधुर्योपलम्भात् । तदुक्तम् । "**अवस्थादेशकालानां भेदाद्भिन्नासु शक्तिषु । भावानामनुमानेन प्रतीतिरतिदुर्लभा ॥ १ ॥**" इति । न च साध्ये सत्येव साधनस्योपलम्भादसति चानुपलम्भादेव साध्यसाधनसंबन्धसिद्धिरिति वाच्यम् । साधनानुपलम्भस्य साधनसद्भावे साधनाभावे च सम्भवात् । यत्र ह्यनग्नौ धूमो न दृश्यते तत्र प्रमातुः शक्त्यभावः करणस्य सामर्थ्यविरहो धूमस्याभावो वानुपलम्भे कारणमिति । अपि चानुमानस्य धर्मी धर्मस्तत्समुदायो वा साध्यः स्यात् । तत्राद्यपक्षोऽनुपपन्नः । धर्म्मिणः प्रसिद्धत्वेन साधनवैफल्यसंसक्तेः । हेतोरनन्वयत्वानुषङ्गाच्च । न खलु यत्र यत्र धूमस्तत्र तत्र पर्वतनितम्ब इत्यन्वयः सम्भवति । द्वितीयपक्षेऽपि धर्मः सामान्यरूपो विशेषरूपो वा साध्यः स्यात् । तत्र सामान्यरूपे सिद्धसाधनम् । न च तन्मात्रप्रतीतौ किञ्चित्फलमुपलभामहे । न हि वह्नित्वं दाहपाकादावुपयुज्यमानं प्रतीतम् । किं च सामान्यात्प्रतीतात्प्रवर्त्तमानः प्रतिपत्ता कथं नियतदिगभिमुखमेव प्रवर्त्तते । न हि सामान्यं नियतदिक्कम् । सकलव्यक्तिव्यापित्वाभावप्रसक्तेः । अथ सामान्यस्य व्यक्तिं विनानुपपत्तेः प्रतीते तस्मिन्नन्यथानुपपत्त्या व्यक्तिप्रतीतेर्नियमेन प्रवृत्तिरित्युच्यते । ननु सामा-

---

१ ' स नियतः ' इति प. पुस्तके पाठः । २ वा. प. कां. १०.

न्यमभिमतया व्यक्त्या विना नोपपद्येत व्यक्तिमात्रेण वा । न तावदभिमतया, व्यक्त्यन्तरेऽप्यस्य सम्भवात् । द्वितीयपक्षे तु व्यक्तिमात्रप्रतीतावप्यभिमतव्यक्तिप्रतीत्यर्थं पुनर्यत्नान्तरमास्थेयमिति । विशेषरूपस्य च धर्मस्य साध्यत्वे नान्वयहेतुर्भवेत् । न ह्यत्रत्येदानींतनेन खादिरादिस्वभावेन वह्निना वह्निमान्पर्वतनितम्ब इत्यत्र विशेषे सान्वयः सङ्गच्छते । महानसादौ दृष्टान्ते तथाविधसाध्येन समं धूमस्य व्याप्त्यप्रतीतेः । तन्न धर्मोऽपि साध्यः । नापि तत्समुदायः । तस्याप्यन्यत्रानन्वयात् । न हि यत्र यत्र धूमस्तत्र तत्र वह्निमान्पर्वतनितम्ब इत्यन्वयः प्रतीतिधुरामधिरोहति । मूलानुमानविषयापहारिणोऽनुमानविरोधस्य विशेषविरुद्धापराभिधानस्येष्टविघातकृतः सन्देहहेतोर्विरुद्धाव्यभिचारिणो वा सर्वत्रानुमाने सम्भाव्यमानत्वाच्च दुष्प्रापं प्रामाण्यम् । तदुक्तम् ।

" विशेषेऽनुगमाभावात्सामान्ये सिद्धसाधनात् ।
तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः ॥ १ ॥
अनुमानविरोधो वा यदि वेष्टविघातकृत् ।
विरुद्धाव्यभिचारस्तु सर्वत्र सुलभोदयः ॥ २ ॥ "

इति । किंच ।

देशकालदशाभेद–विचित्रात्मसु वस्तुषु ॥
अविनाभावनियमो[1] न शक्यो लब्धुमञ्जसा ॥ २६७ ॥
भवन्नप्यविनाभावः परिच्छेत्तुं न शक्यते ॥
जगत्त्रयगताशेषपदार्थालोचनाद्विना ॥ २६८ ॥
न चाध्यक्षीकृता[2] यावद्धूमाग्निव्यक्तयोऽखिलाः ।
तावत्स्यादपि धूमोऽसौ योऽनग्नेरिति शक्यते ॥ २६९ ॥
ये तु प्रत्यक्षतो विश्वं पश्यन्ति हि भवादृशाः ।
किं दिव्यचक्षुषां तेषामनुमाने प्रयोजनम् ॥ २७० ॥

---

१ अविनाभावो–व्याप्तिः । २ ' प्र ीकृता ' इति प. पुस्तके पाठः ।

सामान्यद्वारको ऽप्यस्ति नाविनाभावनिश्चयः ।
वास्तवं हि न सामान्यं नाम किंचन विद्यते ॥ २७१ ॥
भूयोदर्शनगम्यापि न व्याप्तिरवकल्पते ।
सहस्रशोऽपि न[1] दृष्टो व्यभिचारावधारणात् ॥ २७२ ॥
बहुकृत्वोऽपि वस्त्वात्मा[2] तथेति परिनिश्चितः ।
देशकालादिभेदेन दृश्यते पुनरन्यथा ॥ २७३ ॥
भूयोदृष्ट्या च धूमोऽग्निसहचारीति गम्यताम् ।
अनग्नौ तु स नास्तीति न भूयोदर्शनाद्गतिः ॥ २७४ ॥
न चाप्यदृष्टिमात्रेण गमकः सहचारिणः ।
तत्रैव नियतत्वं हि तदन्याभावपूर्वकम् ॥ २७५ ॥
नियमस्यानुमाङ्गत्वं गृहीत्वा प्रतिपद्यते ।
ग्रहणं चास्य नान्यत्र[3] नास्तितानिश्चयं विना ॥ २७६ ॥
दर्शनादर्शनाभ्यां तु नियमग्रहणं यदि ।
तदप्यसदनग्नौ हि धूमस्येष्टमदर्शनम् ॥ २७७ ॥
अनाग्नि च क्रिया सर्वं जगज्ज्वलनवर्जितम् ।
तत्र धूमस्य नास्तित्वं नैव पश्यन्ति[4] योगिनः ॥ २७८ ॥
तदेवं नियमाभावात्सत्यपि ज्ञप्त्यसम्भवात् ।
अनुमानप्रमाणत्वदुराशा परिमुच्यताम् ॥ २७९ ॥
स्मृत्यादिकेऽपि विज्ञाने प्रमाणत्वमनोरथः ।
त्यज्यतां येन संवादः स्वार्थे तस्यातिदुर्लभः ॥ २८० ॥

एवं चाध्यक्षमेकं कलयति जगतीमण्डले मानमुद्रा-
मन्यत्स्वर्गापवर्गप्रकटननिपुणं नैव किंचित् प्रमाणम् ॥
तस्मात्स्वान्तानुकूलं कवलयत सदा दत्त वित्तं प्रियेभ्यो
मा मा धूर्तोपदेशैर्व्रत कुरुत वृथा वञ्चनां स्वस्य मुग्धाः ॥२८१॥

---

१ 'हि दृष्टो' इति म. पुस्तके पाठः । २ 'च स्वात्मा' इति म. पुस्तके पाठः । ३ 'नान्य' इति म. पुस्तके पाठः ४ 'पश्यन्त्ययोगिन.' इति प. पुस्तके पाठः ।

चार्वाकतस्कर किमित्थमरे निकामं
निर्लज्ज गर्ज्जसि विसर्प्पदनल्पदर्प्पात् ।
किं नैव पश्यसि पुरः पततः परोक्ष-
प्रामाण्यसाधकसुयुक्तिदृढप्रहारान् ॥ २८२ ॥

तथा हि यत्तावदूचे प्रत्यक्षमेकं घटते प्रमाणमिति । तन्न सुघटम् । यतः स्वपरव्यवसायिज्ञानत्वं प्रमाणस्य स्वरूपं तस्य च परोक्षेऽप्यनुमानादेर्विद्यमानत्वात्कथं प्रत्यक्षमेकं प्रमाणमिति नियमः साधीयान् । तथा हि अनुमानादिकं प्रमाणं स्वपरव्यवसायित्वात्प्रत्यक्षवदिति युक्तिमाकलयन् कः सचेताः प्रामाण्यमनुमानादेर्निह्नुवीत । यच्चोक्तं नानुमानं तावत्प्रमाणं गौणत्वादित्यादि । तत्र यदि नाम संक्षिप्ताक्षिप्तचेतोभिः शास्त्रकारैर्धर्मधर्मिसमुदाये संकेतितोऽपि पक्षशब्दस्तदेकदेशे धर्मिण्युपचारेण प्रयुक्तो भवेन्नैतावता शास्त्रे पक्षशब्दात्प्रतिपत्तौ धर्म्मिणो गौणता । अनुमानसमये पुनः प्राकृतैरिव तार्किकैरप्यप्रयुक्तपक्षशब्दैरेव धर्म्मिणः प्रत्यक्षतः प्रतीयमानत्वे कथं गौणता । तदगौणतायां च तदधिकरणस्य हेतोरप्यगौणत्वात्कथं तज्जन्यस्यानुमानस्य गौणत्वं गदितुमनुगुणम्[1] । यच्चोक्तं **तत्त्ववृत्तावुद्भटेन "लक्षणकारिणा[2] लाघविकत्वेनैव शब्दविरचनव्यवस्था, न चैतावताऽनुमानस्य गौणता, यदि च साध्यैकदेशधर्मिधर्मत्वं हेतो रूपं ब्रूयुस्ते, तदा न काचिल्लक्षणेऽपि गौणी वृत्तिः"** इति । यत्तु तेनैव परमलोकायतम्मन्येन लोकव्यवहारैकपक्षपातिना लोकप्रसिद्धधूमाद्यनुमानानि पुरस्कृत्य शास्त्रीयस्वर्गादिसाधकानुमानानि निराचिकीर्षता **"प्रमाणस्य गौणत्वादनुमानादर्थनिश्चयो दुर्लभः"** इति पौरन्दरं[3] सूत्रं पूर्वाचार्यव्याख्यानतिरस्कारेण व्याख्यानयता इदमभिहितं **"हेतोः स्वसाध्यनियमग्रहणे प्रकारत्रयमिष्टं दर्शनाभ्यामविशिष्टाभ्यां दर्शनेन**

१ अनुगुण–सदृशम् । २ 'लक्षणकाराणां' इति म. पुस्तके पाठः । ३ पुरन्दरनामकः कश्चित् ग्रन्थकार ।

विशिष्टानुपलब्धिसहितेन भूयोदर्शनप्रवृत्त्या च लोकव्यवहारपतितया, तत्राद्येन ग्रहणोपायेन ये हेतोर्गमकत्वमिच्छन्ति तान् प्रतीदं सूत्रं लोकप्रसिद्धेष्वपि हेतुषु व्यभिचारादर्शनमस्ति तन्त्रसिद्धेष्वपि तेन व्यभिचारादर्शनलक्षणगुणसाधर्म्यतः तन्त्रसिद्धहेतूनां तथाभावो व्यवस्थाप्यत इति गौणत्वमनुमानस्य । अव्यभिचारावगमो हि लौकिकहेतूनामनुमेयावगमे निमित्तं स नास्ति तन्त्रसिद्धेष्विति न तेभ्यः परोक्षार्थावगमो न्याय्योत इदमुक्तमनुमानादर्थनिश्चयो दुर्लभ इति " इति । तदेतत्तस्य वचनं दर्शनादर्शनमात्रेण हेतुव्याप्तिग्रहणवादिनो जैमिनीयान्दुनोति न पुनस्तर्काख्यसुदृढप्रमाणेन सर्वत्र साधनसंबन्धबोधाभिधायिनो जैनान् । यथैव हि तर्कप्रमाणेन लौकिकहेतूनामव्यभिचारनिश्चयः कर्त्तुं शक्यस्तथा तन्त्रप्रसिद्धहेतूनामपीति कथं न तेभ्योऽपि स्वसाध्यप्रतिपत्तिः । न वाऽवश्यं बौद्धैरिवास्माभिरपि पक्षधर्मत्वं हेतोः स्वरूपमिष्यते । येन गौणहेतोर्जायमानमनुमानमपि गौणं स्यात् । अन्यथानुपपत्तेरेव तत्स्वरूपत्वेन[1] स्वीकरणात् । तन्न गौणत्वादनुमानस्याप्रामाण्यं वक्तुं युक्तमिति । अथास्पष्टस्वरूपत्वात्, स्वार्थनिश्चये परापेक्षत्वात्, प्रत्यक्षपूर्वकत्वात्, अर्थादनुपजायमानत्वात्, अवस्तुविषयत्वात्, बाध्यमानत्वात्, साध्यसाधनयोः प्रतिबन्धसाधकप्रमाणाभावाद्वा तस्याप्रामाण्यमुच्यते । तदप्यनुचितम् । यतो न तावदस्पष्टस्वरूपत्वादप्रामाण्यमनुमानस्य घटते । यदि हि स्पष्टत्वं प्रमाणलक्षणं भवेत्तदिदानीमनुमानान्निवर्त्तमानं प्रामाण्यमादाय निवर्त्तेत इत्यप्रामाण्यमस्योपपन्नं स्यात् । न चैतत्प्रमाणलक्षण[2]लक्षणम् । द्विचन्द्रादिज्ञाने स्पष्टत्वस्य सद्भावेऽपि प्रामाण्यासम्भवात् । स्वार्थनिश्चये परापेक्षत्वमप्यनुमानस्य नावश्यंभावि । प्रत्यक्षवत्तस्य तन्निश्चयेऽभ्यासावस्थायां परनिरपेक्षत्वात् । अनभ्यासावस्थायां तु स्वार्थनिश्चये परापेक्षत्वं प्रत्यक्षस्यापि विद्यते ।

१ तत्स्वरूपत्वेन–हेतुस्वरूपत्वेन । २ 'लक्षण' इति नास्ति प. म. पुस्तकयोः ।

प्रत्यक्षपूर्वकत्वं चानुमानस्यासिद्धम् । तर्काख्यप्रमाणपूर्वकत्वेन तस्याभिधास्यमानत्वात् । अस्तु वा प्रत्यक्षादेवानुमानस्य जन्म तथापि नाप्रामाण्यम् । प्रत्यक्षं ह्यनुमानस्य जन्मनि निमित्तम् । स्वसामग्रीतश्चोपजायमानस्य तस्याप्रामाण्ये प्रत्यक्षस्यापि तत एवाप्रामाण्यापत्तिः । किं च प्रत्यक्षपूर्वकत्वेनानुमानस्याप्रामाण्ये प्रत्यक्षस्यापि कस्यचिदनुमानपूर्वकत्वेनाप्रामाण्यानुषङ्गः । दृश्यते हि सामर्थ्यमनुमानान्निश्चित्य प्रवर्त्तमानस्य प्रमातुरनुमानपूर्विका प्रत्यक्षप्रवृत्तिः । अर्थादनुपजायमानत्वमप्यनुमानस्याघटमानम् । प्रत्यक्षवत्तस्याप्यर्थादुत्पत्तेरनुभूयमानत्वात् । अवस्तुविषयत्वं चास्यासिद्धम् । प्रत्यक्षवत्सामान्यविशेषात्मकार्थगोचरत्वात्तस्य । न ह्यवस्तुभूतापोहगोचरमनुमानं सौगतवर्ज्जैरिष्टम् । तत्र तद्गोचरत्वस्य निराकरिष्यमाणत्वात् । बाध्यमानत्वं च सम्यगनुमानस्यानुमानाभासस्य वा । प्रथमपक्षोऽनुपपन्नः । सद्धूमादिसाधनादग्न्याद्यनुमाने बाध्यमानत्वस्यासम्भवात् । अनुमानाभासस्य तु तत्सम्भवे तस्यैवाप्रामाण्यं युक्तं न सम्यगनुमानस्य । अन्यथा प्रत्यक्षाभासस्य बाध्यमानत्वेनाप्रामाण्योपलम्भात्सम्यक्प्रत्यक्षस्याप्यप्रामाण्यापत्तिः । साध्यसाधनयोः प्रतिबन्धग्राहकप्रमाणाभावश्चासिद्धः । तर्काख्यप्रमाणस्य तद्ग्राहकस्य सद्भावात् । तथा च सति ननु कुतस्तस्य तेन सम्बन्धसिद्धिः प्रत्यक्षादनुमानाद्वेत्यादि प्रागुद्दिष्टं प्रत्यादिष्टम् । सार्वत्रिकसम्बन्धप्रतीतौ च यथा तर्कस्य सामर्थ्यं तथा कथयिष्यत इति ।

तस्माद्बृहस्पतिमतोपनिषत्प्रियेण
प्रोक्ता प्रमाविमुखताऽनुमितावियं या ।
इत्थं विकल्पपरशुप्रबलप्रहारैः
सा चिच्छिदे सपदि मूलत एव सभ्याः ॥ २८३ ॥

किं च यथार्थं प्रमाणं नायथार्थमिति यदा परः प्रतिपाद्यते त्वया । तदा काश्चिदयथार्थाः प्रामाण्यव्यक्तीः परित्यज्य यथार्थाश्चाभ्युपगम्य

यदीदृशं तत्प्रमाणं नान्यादृशमिति तं प्रति प्रतिपादनीयम् । एतच्चानुमानाद्विना न प्रतिपादयितुं शक्यम् । न खलु पुरोवर्त्तिवर्त्तमानप्रतिनियतरूपत्वादिविषयोपारूढेन प्रत्यक्षेणैतत्प्रतिपादयितुं पार्यते । परश्च बुद्धिमत्त्वेन स्तम्भादिभ्यो विलक्षणः प्रतिपाद्यमानार्थग्रहणसमर्थो निश्चितः सन् प्रतिपाद्यो भवति । न च तन्निश्चयेऽनुमानादन्यस्य सामर्थ्यम् । प्रत्यक्षस्य रूपादिविषयप्रतिपत्तावेव सामर्थ्यात् । कथं चानुमानानभ्युपगमे स्वस्याप्यवस्थापितप्रमाणप्रमेयव्यतिरिक्तप्रमाणप्रमेयस्य निषेधः । प्रत्यक्षस्यात्रासामर्थ्यात् । तदुक्तं **कीर्त्तिना**[1], **" प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः । प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचित् ॥ १ ॥ "** इति । अस्यार्थः । अवश्यमयं चार्वाकोऽनुमानमपवदमानः प्रमाणाप्रमाणयोः स्थितिं स्थापयितुमनुमानं मन्येत । तदपवादे सैव तयोः स्थितिर्न घटते । तदा हि न घटेत यदि न सामान्येन क्रियते । सामान्येन च कर्त्तव्या । अनुभूताननुभूतस्वपरसन्तानवर्त्तिप्रमाणाप्रमाणव्यक्तिव्याप्त्या क्रियते यतः । तादृशी च प्रत्यक्षमात्रप्रमाणवादिनः शक्यक्रिया।प्रमाणेतरलक्षणयोगिनीनां विज्ञानव्यक्तीनां सर्वासामप्रत्यक्षत्वात् । प्रत्यक्षाणां च परेभ्योऽनुपदेश्यत्वात् । अत उक्तम् । प्रमाणेतरसामान्यस्थितेः प्रमाणान्तरसद्भाव इति तथाऽन्यधियो गतेः परचित्तज्ञानात् । अन्यदीया हि धीः कायवाग्व्यापारव्यवहाराभ्यां कार्यलिङ्गाभ्यामनुमीयते न प्रत्यक्षेणेक्ष्यते । कस्यचिच्च प्रतिषेधात् । न ह्यनुपलब्धिलिङ्गमनुमानमन्तरेण क्वचित् किंचित्प्रतिषेद्धुं शक्यते । तदनेन सूत्रेण त्रिविधत्रिरूपस्वभावकार्यानुपलब्धिलिङ्गानुमानसद्भावः परेणा[2]प्यभ्युपगतोऽन्यथा व्यवहारविलोपप्रसंगादित्युक्तमिति । किं चानुमानस्यापह्नवस्तत्स्वरूपाभावान्निरवद्यतल्लक्षणाभावाद्वा स्यात् । न तावत्तत्स्वरूपाभावात् । तत्स्वरूपस्य सकलजनप्रतीतत्वात् । न चेदमसिद्धम् , यतः

---

१ धर्मकीर्तिना । २ परेण-चार्वाकेन ।

गोपालोऽपि प्रबलविगलद्बाष्पबिन्दुप्रबन्धे ।
नेत्रे कर्त्तुर्मधुरमधुयुग्मञ्जरीम्लानिहेतो · ॥
धूमोत्पीडात्क्वचिदपि समालोक्यमानात्प्रदेशे ।
जानात्येव ज्वलनमखिलक्षिप्तशङ्कावकाश· ॥ २८४ ॥

कथं चानुमानस्वरूपापलापे प्रत्यक्षमेव प्रमाणमगौणत्वादित्यनुमानमुद्रया परम्प्रतिपादयतस्तव स्ववचनविरोधो न स्यात् । तथा च ।

सद्भावमस्यति सदाऽनुमितेर्मतस्य
स्वीयस्य सिद्धिमनयैव च सन्तनोति ॥
आभात्यलौकिकममुष्य मनीषिलोके
लोकायतस्य सकलं चरितं तदेतत् ॥ २८५ ॥

निरवद्यतल्लक्षणाभावादित्यप्ययुक्तम् । हेतुग्रहणसम्बन्धस्मरणकारणक साध्यविज्ञानमित्यादेर्न्निरवद्यतल्लक्षणस्याग्रे वक्ष्यमाणत्वात् । यदप्यवस्थादेशकालभेदादित्याद्यभिहितम् । तदप्यभिधानमात्रम् । तर्काख्यप्रमाणमाहात्म्यत· सम्यगवगतायां व्याप्तौ लिङ्गस्य स्वसाध्ये व्यभिचाराभावात् । यत्र तु व्यभिचारस्तत्र प्रमातुरेवापराधो नानुमानस्य । तदाहु· । “ **प्रमातुरपराधोऽयं विशेषं यो न पश्यति । नानुमानस्य दोषोऽस्ति प्रमेयाव्यभिचारिणः ॥१॥** ” यदप्युक्तं तत्र प्रमातुः शक्त्यभावः करणस्य सामर्थ्यविरहो धूमस्याभावो वानुपलम्भे कारणमिति । तदप्यसत् । प्रमातु· करणस्य च सामर्थ्यसद्भावनिश्चये यो धूमानुपलम्भस्तस्य धूमाभावेनैव प्रयुक्तत्वाद्धूमाभावस्य चाग्न्यभावप्रयुक्तत्वेन निर्णयात्साध्यसाधनसंबन्धसिद्धिः । यच्चान्यज्जल्पितं अनुमानस्य धर्म्मी धर्मस्तत्समुदायो वा साध्यः स्यादित्यादि । तदपि न युक्तिमास्कन्दति । प्रयोगकालापेक्षया साध्यस्य भेदात् । व्याप्तौ हि साध्यं धर्मसामान्यं प्रयोगकाले तु तद्विशिष्टो धर्मीति वक्ष्यति । ततः कथं सिद्धसाधनं

१ ‘ असूच् क्षेपणे अस्यति क्षिपति ।’ हैमधा· पा· ४-७८ २ ‘ तदा ’ इति म· पुस्तके पाठः । ३ ‘ सिद्धेः ’ इति प पुस्तके पाठः ।

हेतोरनन्वयो वा भवेत् । यदपि मूलानुमानविषयापहारिण इत्यादि प्रत्यपादि । तदपि न चतुरस्रम् । सम्यक्साधने प्रयुक्तेऽनुमानविरोधादिपांसुप्रकरपातानामसम्भवात् । उक्तं च **तन्त्रवृत्तौ भट्टोद्भटेन** " **सर्वश्च दूषणोपनिपातोऽप्रयोजकहेतुमाक्रामतीत्यप्रयोजकविषया विरुद्धानुमानविरोधविरुद्धाव्यभिचारिण** " इति । एवं च देशकालदशाभेदेत्यादिकारिकाकदम्बकमपि विडम्बितमवबोद्धव्यम् । यदप्युक्तं स्मृत्यादिकेऽपीत्यादि । तदप्यनुपपन्नम् । स्वार्थे संवादस्य स्मृत्यादिकेऽपि प्रमाणे समर्थयिष्यमाणत्वात् ।

एवं स्वर्गापवर्गप्रकटनविहितौ वद्धकक्षे परोक्षे
सम्प्राप्ते मानभावं झटिति विघटितो नास्तिकस्याभिसन्धिः ॥
तस्मादास्तिक्यमेकं मनसि शुभलतोल्लासजीमूतकल्पं
मत्वा सद्धर्मकर्म प्रतनुत सततं स्वेष्टसिद्धयै विदग्धाः ॥२८६॥"

अत्राह सौगतः । "**प्रत्यक्षं च परोक्षं च द्वित्वमेवं न युज्यते ।**
**प्रत्यक्षमनुमानं चेत्येतत्तु घटतेतराम् ॥ १ ॥**

प्रत्यक्षमनुमानमिति द्वयमेव प्रमाणमिति सौगतमतस्योपपादनपूर्वकं खण्डनम् ।

आः कुमते मैवं वोचः । यतः स्वलक्षणसामान्याख्यप्रमेयद्वैविध्यात्प्रमाणद्वैध्यमित्याकूतं भवतः तदनुचितम् । तथाविधप्रमेयद्वैविध्यस्यासम्भवात् । एक एव हि सामान्यविशेषात्मार्थः प्रमेयः प्रमाणस्येति पुरस्तादुपपादयिष्यते । यदि च प्रत्यक्षस्य स्वलक्षणमात्रविषयत्वमिष्यते । तदा ततः स्थिरस्थूराद्याकाराध्यवसायेन प्रवृत्तिर्न स्यात् ।

विज्ञानमन्यगोचरमन्यत्रार्थे प्रवर्त्तकमितीदम् ॥
व्यक्तं भवता कैतवमभ्यस्तं **सौगत** कुतोऽपि ॥ २८७ ॥

भवतु वा प्रमेयद्वित्वं तथापि तत्प्रमाणद्वित्वस्य ज्ञातमज्ञातं वा ज्ञापकं भवेत् । यद्यज्ञातम्, तर्हि तस्य सर्वत्राविशेषात्सर्वेषामप्यविशेषेण[1] तत्प्रतिपत्तिप्रसङ्गतो विप्रतिपत्तिर्न स्यात् । ज्ञातं चेत्, कुतस्तस्य

१ 'विशेषेण' इति म. पुस्तके पाठः ।

ज्ञप्तिः । प्रत्यक्षादनुमानाद्वा । न तावत्प्रत्यक्षात् । तेन सामान्यस्याग्रहणात् । ग्रहणे वा तस्य सविकल्पकत्वप्रसक्तिर्विषयसंकरश्च प्रमाणद्वित्वविरोधी भवतः प्रसज्येत । नाप्यनुमानात्, तेन स्वलक्षणस्याग्रहणात् । स्वलक्षणपराङ्मुखतया हि भवतानुमानमभ्युपगतम् । द्वाभ्या प्रमेयद्वित्वस्याज्ञानेऽन्यतरस्यापि प्रमाणद्वित्वज्ञापकत्वायोगः । अन्यथा देवदत्तयज्ञदत्ताभ्यां प्रतिपन्नाद्धूमद्वित्वात्तदन्यतरस्याग्निद्वित्वप्रतिपत्तिः स्यात् । द्वैविध्यमिति द्विष्ठो धर्मः । स च द्वयोर्ज्ञाने ज्ञायते नान्यथा । न ह्यज्ञातसह्यविन्ध्यस्य प्रतिपत्तुस्तद्गतद्वित्वप्रतिपत्तिरस्ति । प्रमाणद्वित्वात्तु प्रमेयद्वित्वज्ञप्तिस्वीकारे परस्पराश्रयदोषानुषङ्गः । सिद्धे हि प्रमेयद्वित्वेऽतः प्रमाणद्वित्वसिद्धिस्तस्याश्च प्रमेयद्वित्वसिद्धिरिति । अथान्यतः प्रमाणाद्वित्वस्य सिद्धिः । व्यर्थस्तर्हि प्रमेयद्वित्वोपन्यासः । ननु प्रत्यक्षानुमानयोः स्वसंवेदनप्रत्यक्षसिद्धत्वात्प्रत्यक्षसिद्धमेव प्रमाणद्वित्वम् । केवलं यस्तथाप्रतिपद्यमानोऽपि न व्यवहरति स प्रसिद्धेन प्रमेयद्वैविध्यव्यवहारेण प्रवर्त्त्यत इति चेत् । तदप्यसारम् । प्रमेयद्वैविध्यस्यासिद्धत्वेनाभिहितत्वात् । ननु मा सिध्यतु प्रमेयद्वैविध्यं तथापि न प्रमाणद्वित्वं व्याहरति रागादीनामनुमानादनर्थान्तरत्वात् । शब्दादिकं हि परोक्षेणार्थेन सह सम्बद्धमसम्बद्धं वा तस्य गमकम् । न तावदसम्बद्धम् । अतिप्रसङ्गात् । सम्बद्धं चेत्, तर्हि तल्लिङ्गमेव । तज्जनितं च ज्ञानमनुमानमेवेति चेत् । तदप्यनुचितम् । प्रत्यक्षस्याप्येवमनुमानत्वप्रसङ्गात् । तदपि स्वविषयेण सम्बद्धं सत्तस्य गमकं नान्यथा । सर्वस्य प्रमातुः सर्वार्थप्रत्यक्षत्वापत्तेः । अथ स्वविषयसम्बद्धत्वाविशेषेऽपि प्रत्यक्षानुमानयोः सामग्र्यादिभेदात्प्रमाणान्तरत्वम् ।

शाब्दस्य मीमांसकमतेन प्रत्यक्षादनुमानाच्च पृथक्त्वव्यवस्थापनम् ।

भिक्षो तदानीं बत दुर्विदग्धाः
शाब्दोपमादेरपि जैमिनीयाः ॥
प्रमान्तरत्वं प्रतिपादयन्तः
कथं त्वयैते प्रतिषेधनीयाः ॥ २८८ ॥

---

' हि ' इत्यधिक प. पुस्तके । २ ' व्याहन्यते आगमादीना ' इति प. भे. पुस्तकयो पाठः ।

तथा हि ते सङ्गिरन्ते शाब्दं तावच्छब्दसामग्रीतः प्रभवति न चास्य प्रत्यक्षता। सविकल्पकस्वभावत्वात्। नाप्यनुमानता, त्रिरूपलिङ्गाप्रभवत्वात् अनुमानगोचरार्थाविषयत्वाच्च। तदुक्तम्।

"तस्माद[1]ननुमानत्वं शाब्दे प्रत्यक्षवद्भवेत्।
त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनात् ॥ १ ॥"

इति। यादृशो धूमादिलिङ्गजस्यानुमानस्य विषयो धर्म्मविशिष्टो धर्म्मी तादृशेन विषयेण रहितत्वं शाब्दे सामान्यमात्रविषये सुप्रसिद्धं त्रैरूप्यरहितत्वं च। तथा हि न शब्दस्य पक्षधर्म्मत्वम्। धर्मिणोऽसम्भवात्। न वाऽर्थस्य धर्मित्वम्। तेन तस्य सम्बन्धासिद्धेः। न वाप्रतीतेऽर्थे तद्धर्मतया शब्दस्य प्रतीतिः सम्भविनी। प्रतीते वाऽर्थे तद्धर्मतया शब्दस्य प्रतीतिर्नोपयोगिनी। तामन्तरेणाप्यर्थस्य प्रागेव प्रतीतेः। अथ शब्दो धर्म्मी अर्थवानिति साध्यो धर्म्मः शब्द एव च हेतुरिति चेत्, न। प्रतिज्ञार्थैकदेशत्वप्राप्तेः। शब्दो हि धर्म्मितयोपात्तः स एव हेतुरिति। अथ शब्दत्वं हेतुरिति न प्रतिज्ञार्थैकदेशत्वम्। न। शब्दत्वस्यागमकत्वात्। अवान्तरसामान्यं तर्हि गोशब्दत्वं हेतुर्भविष्यतीति चेत्। न। तस्यासिद्धत्वात्। उक्तं च।
"वि[2]पर्ययोऽन्यादृशस्तावद्दृश्यते लिङ्गशब्दयोः॥ सामान्यविषयत्वं च पदस्य स्थापयिष्यते ॥ १ ॥ धर्म्माधर्म्मविशिष्टश्च लिङ्गीत्येतच्च साधितम्। न तावदनुमानं हि यावत्तद्विषयं न तत् ॥ २ ॥ तद्विषयमिति धर्म्मविशिष्टधर्म्मिविषयम्। "अ[3]थ शब्दोऽर्थवत्त्वेन पक्षः कस्मान्न कल्प्यते ॥ ३ ॥ प्रतिज्ञा[4]र्थैकदेशो हि हेतुस्तत्र प्रसज्यते। शब्दत्वं गमकं नात्र गोशब्दत्वं निषेत्स्यते ॥" शब्दत्वं गमकं नात्रेति, अर्थविशेषो ह्यत्रानुमित्सितो न चास्य

१ मीमासाश्लोकवार्तिके सू. ५ शब्दपरिच्छेदे श्लो. ९८. २ मीमांसाश्लो. सू. ५ श. परि. श्लो. ५५–५६. ३ मी. श्लो. वा. सू. ५ शब्दप. श्लो. ६२. ४ मी. श्लो. वा, सू. ५ श. प. श्लो. ६३-६४.

शब्दत्वं गमकमनैकान्तिकत्वादिति भावः । “ व्यक्तिरेव विशेष्यातो हेतुश्चैका प्रसज्यते ॥ ४ ॥ ” अस्यार्थः–अतः शब्द-गोशब्दत्वसामान्ययोरगमकत्वासिद्धत्वाभ्यां हेतुत्वनिषेधाद्व्यक्तिरेव शब्दलक्षणा एकार्थवत्त्वेन साध्यधर्म्मेण विशेष्या, हेतुतया वाऽभिधातव्या इति दुष्परिहरं प्रतिज्ञार्थैकदेशत्वम् । शब्दस्यैव धार्म्मित्वेन हेतुत्वेन चाऽभिधानादिति। न चार्थान्वयः शब्दस्यास्ति । विद्यमानस्य ह्यन्वेतृत्वं नाविद्यमानस्य। यत्र हि धूमस्तत्रावश्यं वह्निरस्तित्वेन प्रसिद्धोऽन्वेता भवति धूमस्य । नत्वेवं शब्दस्यार्थेनान्वयोऽस्ति । न हि तत्त्व-शब्दाक्रान्ते देशेऽर्थस्य सद्भावः।न खलु यत्र मृद्वीकादिशब्दः समाकर्ण्यते तत्र मृद्वीकादिरर्थोऽप्यस्ति। नापि शब्दकालेऽर्थोऽवश्यं भवति । तथा हि। “ वक्तुं सर्वे यदाज्ञां करकमलमिलन्मौलयो भूमिपालाः । सोऽयं शौण्डीर्यवर्याः सुचिरमरचयन्यत्र विश्रम्भबुद्धिम् ॥ लङ्कालङ्कारकल्पः सकलकुवलयप्रोद्धृतैकातपत्रः । क्रव्यादां चक्रवर्ती समजनि स पुरा रावणः शक्रशत्रुः ॥ १ ॥ अस्मिन्नेव महीतले हि कियतः कालात्पुरो भूमिभृन्मौलिश्लिष्टकिरीटकोटिघटनाघृष्टांघ्रिपीठः सदा ॥ निःशेषक्षितिरक्षणक्षमभुजः पुंसां शिरोभूषणं । श्रीसंघो भविताभिरामरुचिमान्वात्स्यावितश्चक्रभृत् ॥ २ ॥” इत्यादिशब्दाः सम्प्रति श्रूयमाणत्वेन वर्त्तमानास्तदर्थस्तु भूतो भविष्यंश्चेति कुतोऽर्थैः शब्दस्यान्वेतृत्वम् । अथ मतम्, नित्यत्वाच्छब्दाना सर्वकालमवस्थितेरर्थेन सह न भिन्नकालता । नापि भिन्नदेशता । व्यापित्वात्सर्वदेशावष्टम्भेनावस्थितेः । अतो नित्यविभुत्वाद्भवेदन्वयः शब्दानामिति । तत्र सर्वशब्देषु तन्नित्यत्वं विभुत्वं च तुल्यमिति कृत्वा प्रतिनियतेन शब्देन प्रतिनियतार्थाभिधानं न प्राप्नोति। किं तर्हि येन केनाचिच्छब्देन सर्वस्यैवार्थस्याभिधानं स्यात् । तेनार्थेन सह सर्वत्र देशे

---

१ मी. श्लो. वा. सू. ५ श. प. श्लो. ६४.

काले वा तस्य शब्दस्य दृष्टत्वात् । तन्नान्वयस्य निश्चयः । नापि व्यतिरेकस्य, स हि साध्याभावे साधनाभावरूपः । न चासौ शब्दे सम्भवति । नित्यविभुत्वादेव । तदुक्तम् ।

"अन्वयो[1] न च शब्दस्य प्रमेयेण निरूप्यते ।
व्यापारेण हि सर्वेषामन्वेतृत्वं प्रतीयते ॥ १ ॥"

व्यापारेणेति सद्भावेन सत्तयेति यावत् ।

"यत्र[2] धूमोऽस्ति तत्राग्नेरस्तित्वेनान्वयः स्फुटः ॥
नत्वेवं यत्र शब्दोऽस्ति तत्रार्थोऽस्तीति निश्चयः ॥ १ ॥
न तावद्यत्र देशेऽसौ न तत्काले च गम्यते ।
भवेन्नित्यविभुत्वाच्चेत्सर्वार्थेष्वपि यत्समम् ॥ २ ॥
तेन सर्वत्र दृष्टत्वाद्व्यतिरेकस्य चागतेः ॥
सर्वशब्दैरशेषार्थप्रतिपत्तिः प्रसज्यते ॥ ३ ॥" इति ।

मीमांसकमतेनोपमानस्य प्रमाणान्तरत्वव्यवस्थापनम् ।

सामग्रीभेदतो मेयभेदतश्चागमस्ततः ॥
अन्तर्भवति नैवेत्थमनुमाने कथंचन ॥२८९॥
प्रमाणं चैष मन्तव्यः प्रमेयाव्यभिचारतः ।
यथा प्रत्यक्षविज्ञानं यथा च लैङ्गिकी मतिः॥२९०॥

उपमानमपि प्रमाणान्तरमेव । तस्य हि लक्षणम्, यथा[3],

"दृश्यमानाद्यदन्यत्र विज्ञानमुपजायते ॥
सादृश्योपाधि तत्त्वज्ञैरुपमानमिति स्मृतम् ॥ १ ॥"

येन हि प्रतिपत्त्रा गौरुपलब्धो न गवयो न चातिदेशवाक्यं गौरिव गवय इति श्रुतं तस्यारण्ये पर्यटतो गवयदर्शने प्रथमे समुत्पन्ने सति यत्परोक्षे गवि सादृश्यज्ञानमुत्पद्यते अनेन सदृशो गौरित्येवं तदुपमानमिति । तस्य च विषयः सादृश्यविशिष्टः परोक्षो गोपिण्डस्तद्विशिष्टं वा सादृश्यम् । तच्च वस्तुभूतमेव । यदाह ।

---

१ मी. श्लो. वा. सू. ५ श. प. श्लो. ८५. २ मी. श्लो. वा. सू. ५ श. प. श्लो. ८६, ८७, ८८. ३ 'यथा' इति नास्ति प. पुस्तके ।

" सादृश्यस्य च वस्तुत्वं न शक्यमपबाधितुम् ।
भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत् ॥ १ ॥ "

भूयसामवयवसामान्यानां जात्यन्तरोपलक्षितेऽवयविनि योगो यस्तत्सादृश्यम् । तच्च सदृशप्रत्ययोत्पादकत्वेनार्थक्रियाकारित्वाद्वस्त्वेवेत्यर्थः । सजातीये सर्वावयवसामान्यसद्भावात्सादृश्यं नास्तीति ज्ञापनार्थं जात्यन्तरग्रहणमिति । अस्य चानधिगतार्थाधिगन्तृतया प्रामाण्यम् । गवयाविषयेण हि प्रत्यक्षेण गवयो विषयीकृतो न त्वसन्निहितोऽपि सादृश्यविशिष्टो गौस्तद्विशिष्टं वा सादृश्यम् । यच्च पूर्वं गौरिति प्रत्यक्षमभूतस्यापि गवयोऽत्यन्तमप्रत्यक्ष एवेति कथं गवि तदपेक्षं तत्सादृश्यज्ञानम् । उक्तं च । " तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम् । प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥१॥ प्रत्यक्षेणावबुद्धेऽपि सादृश्ये गवि च स्मृते । विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता ॥ २ ॥ प्रत्यक्षेऽपि यथा देशे स्मर्यमाणे च पावके ॥ विशिष्टविषयत्वेन नानुमानाप्रमाणता ॥ ३ ॥" इति । न चेदं प्रत्यक्षम् । परोक्षविषयत्वात् सविकल्पकत्वाच्च । नाप्यनुमानम् । पक्षधर्मान्वयव्यतिरेकिणामसम्भवात्प्रत्यक्षवत् । तथा ह्येतत्सदृशो गौरिति गवयसादृश्यविशिष्टे गव्यनुमेये सादृश्यं वा लिङ्गं परिकल्प्येत गवयो वा । सादृश्यमपि गोगतं गवयगतं वा । न तावद्गोगतम् । तद्धि गवयसादृश्यविशिष्टगोज्ञानात्पूर्वं प्रमेयैकदेशस्य गोधर्मिणो लिङ्गं परिकल्पितं न धर्मत्वेन गृह्यते । तथाप्रतीतेरभावात् । तत्प्रमेयत्वाच्च तस्य प्रतिज्ञार्थैकदेशत्वेन पक्षधर्म्मत्वासम्भवान्न लिङ्गता । नापि गवयगतम् । तत्र हि गृह्यमाणं सादृश्यं न गोसम्बन्धिनः सादृश्यस्यानुमापकम् । वैयधिकरण्येन पक्षधर्मत्वासम्भवात् । नापि च गवयो लिङ्गम् । गवा सह सम्बन्धाभावात्तद्धर्म्मत्वानुपपत्तेः । न च

१ मी. श्लो. वा. सू. ५ उ. प. श्लो. १८. २ मी. श्लो. वा. सू ५ उ. प. श्लो. ३७, ३८, ३९.

स्थितपरमाणुसंचयन्यायेन वर्णसमुदायमात्रमुपयान्ति । स इदानीं भेदावसायोऽकारेऽपि पूर्वपरमध्यभागरूपेणास्तीति कथं निरवयवो वर्णः । उदात्तानुदात्तादयो गुणा अपि सावयवत्वे सत्येवास्य सम्भवन्ति । एवं भागवति गुणे च प्रतीयमानेऽकारादौ कथं प्रतीतिप्रमाणवादिभिरेवानवयवस्य वर्णस्याभ्युपगम इति । बुद्धेरनुपसंहारमन्तस्तत्त्वं वाक्यमन्ये मन्यन्ते । तथा हि संहृतसकलक्रमस्यैकस्यादेशप्रदेशत्वेऽप्यन्तरात्माऽन्तर्यामीत्येवमाख्यायमानस्य प्रतिप्राणिवृत्तेः शब्दतत्त्वस्याक्षरचिह्नादिभिरिवातथाभूतैः क्रमवद्भिर्भागैर्योऽयं बुद्धेरनुपसंहारः क्रमशः पूर्ववर्णभागग्राहिणीभिर्बुद्धिभिर्जनितो यः संस्कारस्तत उत्पन्नस्य स्मरणस्य बलादन्त्यवर्णभागग्रहणतुल्यकाल. स वाक्यमिति । एतदपि न परीक्षाक्षमम् । शब्दब्रह्मणोऽन्तस्तत्त्वापरनामधेयस्य प्रागेव सविस्तरमपास्तत्वात् । आद्यं पदं वाक्यमिति परे समीरयन्ति । यदेव हि पदं प्रथमतः प्रयुज्यते तदेव वाक्यं तेनैवेतराक्षेपात् । यतः प्रथमतः प्रयुज्यमानं पदं क्रियावाचि साधनवाचि वा भवेत् । क्रियासाधनयोश्च परस्पराविनाभूतत्वात्तयोर्यदेव पदमादौ प्रयुज्यते तदेव स्वार्थस्य धर्मभूतमर्थान्तरमपि तत्र सान्निधापयति धूम इवाग्निमित्येवं प्रथममुपादीयमाने पदे सर्वरूपार्थोपग्राहिण्याख्यातशब्द इव नियमानुवादफलानि पदान्तराण्यभ्यनुज्ञायन्त इति । आख्यातशब्दपक्ष इव एषोऽपि पक्षः प्रतिक्षेप्यः । पृथक्सर्वपदं सापेक्षं वाक्यमिति कतिचिदुपवर्णयन्ति । पृथगिति सङ्घातादवच्छिनत्ति । सर्वमित्याद्यपदादाख्यातशब्दाच्चावच्छिनत्ति । तेन सर्वाण्येव पदान्यन्योन्यसापेक्षाणि प्रत्येकं वाक्यमित्यर्थः । यतः प्रतिपदं क्रियाकारकलक्षणः कृत्स्नोऽर्थः परिसमाप्यते । इदमपि परिफल्गु । देवदत्त गामभ्याजेति श्रुतेर्वाक्यबहुत्वप्रत्ययप्रसङ्गात् । अस्मिंश्च पक्षे पदानां परस्परसापेक्षत्वमपि दुरुपपादम् । सर्वेषामपि कृत्स्नार्थाभिधायित्वादिति । एवं च " आख्यातशब्दः

---

१ वा. प. का. २ श्लो. ११२ ।

**सङ्घातो जातिः सङ्घातवर्त्तिनी ॥ एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः ॥ १ ॥ पदमाद्यं पृथक्सर्वं पदं सापेक्षमित्यपि ॥ वाक्यं प्रतिमतिर्भिन्ना बहुधा न्यायदर्शिनाम् " ॥ २ ॥** इति कारिकाद्वयसंगृहीता अष्टावपि वाक्यपक्षाः प्रतिक्षिप्ताः ।

ततः स्थितमेतत्—

अन्योन्यापेक्षवर्णाना सङ्घातः पदमुच्यते ॥
निरपेक्षः पदानां तु स वाक्यमिह कथ्यते ॥ ५४५ ॥

अत्राहुः **स्फोटवादिनः**—

स्फोटवादिमतस्य विस्तरश उत्पादनपूर्वकं खण्डनम् ।

अवयवयुतवर्णाद्याग्रहेणामुना किं
स्फुरदनुभववन्ध्येनात्र ते जैनविद्वन् ॥
सति मतिमवतीर्णे तात्त्विकानेकभाग-
श्रयणविधुरमूर्तौ स्फोटसंज्ञे पदार्थे ॥५४६॥

तथा हि—त्रय एते वर्णपदवाक्यविशेषव्यपदेश्याः परस्परमत्यन्तव्यावृत्तमूर्त्तयो निरवयवाः श्रवणविवरमाविशन्तः प्रतीयन्ते स्फोटाः । न तु वाक्ये पदानि । पदेषु वर्णाः । वर्णेष्ववयवाः सन्ति । तत्कथं पौद्गलिको वर्णो वर्णसंहतिः पद पदसंहतिश्च वाक्यमितीष्यते । यः खल्वयं पूर्वापरभागात्मकः समुदायो वर्ण इति । यश्च गकारौकारविसर्जनीयरूपवाक्यावयवात्मकः पदमिति । यश्च देवदत्त गामभ्याजेत्यादिपदरूपावयवात्मको वाक्यमिति विख्यातः । सर्वेऽप्येते यथाक्रमं वर्णपदवाक्यव्यपदेश्या निरवयवाः प्रयत्नभेदभिन्नैर्नादैः प्रत्येकं सर्वात्मनाऽभिव्यङ्ग्या एकैकाः क्रमरहिता नित्या अभिव्यञ्जकधर्मानुविधायिनो निर्बाधमध्यवसीयन्ते स्फोटाः । पूर्वादिभागक्रमवर्णपदरूपावयवावसायः पुनरभिव्यञ्जकानां ध्वनीनां धर्मानुविधानात् । क्रमवतां हि ध्वनीनां ये निष्पादकास्ताल्वादयस्तेषां प्रतिध्वनि भिन्ना एव शक्तय इति विभिन्नशक्तिकताल्वादिकारणनिष्पादिता ध्वनयः परमार्थतः परस्पर-

मत्यन्तं विसदृशा अपि तुल्यस्थानकरणजन्मतया स्वयं सदृशभावं भजन्तः स्वरूपखण्डानामन्योन्यविलक्षणानां वर्णपदवाक्यस्फोटानामपि तुल्यतामुपकल्पयन्तो भागवद्भिर्भिन्नानपि तान्भागसंकीर्णानिवावभासयन्ति । मुखमिव मणिकृपाणदर्पणादयो नियतस्थानवर्णपदपरिमाणसंस्थानमनुपप्लवमक्रमनेकमिवानेकविधस्थानवर्णपरिमाणसंस्थानभेदोपप्लवमिवादर्शयन्ति । तदाह भर्तृहरिः—" पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ॥ वाक्यात्पदानामत्यन्तं प्रविभागो न कश्चन ॥ १ ॥ प्रत्येकं व्यञ्जका भिन्ना वर्णवाक्यपदेषु ये ॥ तेषामत्यन्तभेदेऽपि संकीर्णा इव शक्तयः ॥ २ ॥ " तेषामिति ये व्यञ्जका ध्वनयोऽन्योन्यव्यावृत्तास्तेषामत्यन्तविजातीयत्वाद्भेदेऽपि मिश्रीभूता इव भान्ति शक्तय इति । यथा च दूरदेशे समन्धकारे वा विषयं प्रतिपद्यते विरलं घनरूपत्वेनाकृष्णं कृष्णरूपतया । तथाऽमून्स्फोटानपि निर्भागान्वादैरभिव्यज्यमानान्भागावग्रहरूपेणाध्यवस्यति । नैतावता तत्र भागाः सत्याः सन्ति । तदाह— " यथैव दर्शनैः पूर्वैर्दूरात्सन्तमसेऽपि वा ॥ अन्यथाकृत्यविषयमन्यथैव प्रपद्यते ॥१॥ व्यज्यमाने तथा वाक्ये वाक्याभिव्यक्तिहेतुभिः ॥ भागावग्रहरूपेण पूर्वं बुद्धिः प्रवर्त्तते ॥ २ ॥ " वाक्य इति वाक्यस्यैव व्यवहारोपयोगित्वेन प्राधान्यान्निर्देशः । पूर्वमिति प्रथमं वर्णपदभागावग्राहिणी बुद्धिः प्रवर्त्तत इति । अथ यथा विरलवृक्षादयः कदाचित्प्रथममेवावास्तवा विरलत्वादिप्रतीत्युपद्रवविरहिता विरलत्वादिरूपतयैव प्रथापथमुपयान्ति तथा स्फोट. किमिति न कदाचिदप्यामुख एवावयवावसायः । पदे वर्णलक्षणस्य वाक्ये च पदस्वरूपस्य योऽवसायः स स्वभावात्तस्यैवाखण्डस्य शब्दात्मन. प्रतिपत्तावुपायः । तत्प्रतीतावेव तस्य प्रतीते. । येन च विना यस्य ग्रहणमशक्यं तद्ग्रहणे कथं तस्यैव

---

१ ' भगवान् ' इति भ. पुस्तके पाठ । २ वा. प. का. १ श्लो. ८९ । ३ वा. प. का. १ श्लो. ९०।९१।

त्यागः सङ्गतो भवेत् । यथा शतादिसंख्याग्रहणे एकादिसंख्या । शतादिसंख्या हि प्रकारान्तरेण ग्रहीतुमशक्यत्वाज्जिघृक्षायामेकादिसंख्या तद्ग्रहणोपायभूता प्रथमं गृह्यते ततः शतादिसंख्याया अत्यन्तविलक्षणाया गृहीतिः । यदाह सङ्ग्रहकारः— "यथाद्यसंख्याग्रहणमुपायः प्रतिपत्तये ॥ संख्यान्तराणां भेदेऽपि तथा शब्दान्तरश्रुतिः ॥ १ ॥" शब्देति वर्णपदरूपशब्दान्तरश्रुतिर्वाक्यप्रतिपत्तावुपाय इत्यर्थः ॥ "असतश्चान्तराले यच्छब्दानस्तीति मन्यते ॥ प्रतिपत्तुरशक्तिः सा तद्ग्रहोपाय एव सः ॥ १ ॥" अस्यार्थः— शब्दान्वर्णादिभागरूपानुच्चारणान्तराले यदक्रमस्य भागाभावादसत एवास्तीत्यस्तित्वेन मत्या मन्यते सा प्रतिपत्तुरनशवर्णावधारणाक्षमता । न च भ्रान्तिज्ञानमपि सत्यशब्देनोपयुज्यतेऽपि तु तत्साक्षात्कारोपाय एवैष इति । न च भागावभासिन्यो मिथ्याबुद्धयः कथं सत्यस्फोटपरिच्छित्तिहेतव इति वक्तव्यम् । आराद्वनस्पतौ हस्तिप्रत्ययप्रवाहस्य सत्यवनस्पतितत्त्वे प्रतीतिहेतुत्वदर्शनात् । तत्सिद्धमन्योन्यमत्यन्तविलक्षणा एते नानाप्रकाराः पृथक्पृथग्विषयाश्रयोऽप्यविद्योपदर्शितालीकावयवा वर्णपदवाक्यव्यपदेश्याः स्फोटा निरवयवा इति । यतश्चेयमवयवपरिकल्पना न वास्तवी तस्मादधिकार्योऽयं स्फोटाख्यः शब्दात्मा नित्योऽनवयवो व्योमवदनुत्पाद्य एकरूपोऽवस्थितः । केवलमात्मनिमित्तैः स्थानाभिघातादिभिः प्राप्तविकारो ध्वनिरस्याभिव्यक्तौ निमित्तभावमुपयाति । यथावस्थितस्य घटादेरभिव्यक्तिः प्रदीपादिभिः क्रियते तथाऽस्य ध्वनिभिरिति रहस्यम् । तदाह— "अधिकार्यस्य शब्दस्य निमित्तैर्विकृतैर्ध्वनिः ॥ उपलब्धौ निमित्तत्वमुपयाति प्रकाशवत् ॥ १ ॥" इति । अथ भवत्वयं निरवयवस्तथापि कथमिदमिष्यते प्रत्येकं सर्वात्मना नादैः स्फोटोऽभिव्यज्यत इति । प्रत्येक-

---

१ वा. प. का. १ श्लो. ८८ २ वा. प. का. १ श्लो. ८६ ३ वा. प. का. १ श्लो. ९५ ।

मंभिव्यञ्जकत्वे हि ध्वनीनां प्रथमादेव ध्वनेर्वर्णादिप्रतीतिरुपपत्तेस्तन्मात्रानुबन्धित्वाच्चार्थप्रत्ययोत्पादस्य द्वितीयादिध्वनीनामानर्थक्यं भवेदिति । एतदपि न तर्ककर्कशक्षमम् । नादैरभिव्यज्यमाने हि स्फोटे ये ज्ञानविशेषा स्फोटग्रहणानुकूला इदं तदित्यव्यपदेश्यास्ते स्फोटरूपावसाये हेतुत्वमुपयान्ति । सर्वैरेतैराहितसंस्कारविशेषायां बुद्धौ ध्वनिनाऽन्त्येन सह स्फोटस्य व्यक्तरूपस्य प्रतीतेः । अतो नादैर्विशिष्टप्रत्ययजननादाहितभावनाबीजायां विशिष्टसम्प्रत्ययजनने लब्धपरिपाकायां बुद्धौ शब्दोऽवभासमुपयाति न पूर्वमिति वस्तुस्वभाव एवायम् । तदाह—"**प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा ॥ ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥ १ ॥ नादैराहितबीजायामन्त्येन ध्वनिना सह ॥ आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥ २ ॥**" इति । यथा ह्यनुवाकः श्लोको वा पुनः पुनरावृत्त्या सुखेनाऽवधारयितुं शक्यते । न च प्रत्यावृत्तिस्तत्रेदृशी बुद्धिरुपजायते यथेदं गृहीतमिदं नेति । अथ चानेकावृत्तौ श्लोकाद्यवभासः स्पष्टः संवेद्यते तथैवायमपि शब्दात्मा पुनः पुनरभिव्यक्तस्फोटरूपोऽवधार्यते । न च प्रत्याभिव्यक्तिस्तत्रेदृशी बुद्धिरुपजायत इदं गृहीतमिदं नेति । अथवाऽनेकाभिव्यक्तौ स्फोटावभासः स्पष्टः संवेद्यते । तदुक्तम्—"**यथानुवाकः श्लोको वा सोढत्वमुपगच्छति ॥ आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्तिर्निरूप्यते ॥ १ ॥**" अनुवाक इति वैदिकं वाक्यम् । सोढत्वमिति सोढुं शक्यत्वं बुद्ध्याक्रमणीयतां स्वीकार्यत्वम् । येन स्वेच्छयेवासौ पठनीयो भवति । आवृत्त्येति जातावेकवचनम् । आवृत्तिरेकैकाऽप्युपयुज्यते, उत्तरोत्तरविशेषाधानाय । अन्यथैकावृत्त्यैव सोढता स्यादिति । अथार्थ एव प्रत्येकध्वनिव्यञ्जनीयोऽस्तु किमन्तर्गडुकल्पस्फोटपरिकल्पनयेति चेत् । न । प्रथमादेव ध्वनेरभिधेयधीसमुत्पादे हि दुर्निवारमानर्थक्यं द्वितीयादीना ध्वनीनाम् । न चैतत्स्फोटेऽपि

१ वा. प. का. १ श्लो। ८४।८५. २ वा. प. का. श्लो. ८३।

समानम् । प्रत्यक्षस्य हि तस्य प्रतिध्वनिव्यञ्जनीयस्याभिव्यक्तितारतम्यं नानाध्वनिभिर्जायत इति नानर्थक्यमुत्तरेषाम् । न चेयमप्रत्यक्षेऽभिधेयविधौ सम्भविनी । प्रत्यक्षगोचरो ह्यर्थोऽभिव्यक्तितारतम्यभाग्भवति । न मानान्तरगोचरः । स खलु गृह्यते न वा पुनरभिव्यक्तोऽनभिव्यक्तश्च । एवं च लब्धास्पदमिदं यदुच्यते प्रत्येकं सर्वात्मना नादाभिव्यङ्ग्यः स्फोट इति । अस्य च स्फोटस्य सव्यवहारक्रमेऽभिव्यञ्जकक्रमोऽनुवर्त्तनादिव यः क्रमरूपावसाय उपप्लवोऽयमनादिभ्रान्तिरूपः । अयमेव व्यवहारस्य निमित्तम् । अत एवायमतिदार्ढ्यं गतोऽशक्यापनयनः । यथा ज्ञानस्याभिन्नस्यावबोधमात्रात्मकस्य नीरूपस्यानवयवत्वेऽपि सर्वज्ञेयरूपोपग्राहित्वाद्भेदरूपेणावभासः पञ्च वृक्षा विंशतिर्गाव इति । यथा चेतन ज्ञेयरूपावग्रहणेनात्मभूतेन विना व्यवहारेऽवतारयितुं न शक्यते तथा स्फोटेनापि नालब्धक्रमेण कश्चिदर्थोऽभिधातुं शक्य, ततः क्रमावसाय. प्रतिपत्तॄणाम् । न त्वत्र निर्भागे वस्तुत क्रमो नाम कश्चिदस्तीति । निर्विवादमेतत्क्रमरहित. स्फोट इति । नियताश्च पदार्थाना शक्तयः । तेन तेऽन्यथाकरणेऽत्यन्तमसमर्थाः । यथा हि क्षीरस्य विकारे दध्यादौ बीजस्य पवनालादौ न शक्यते राज्ञापि प्रथमा उत्तरा कारयितुमुत्तरा वा प्रथमा । अपि तु तयोर्विकारे नियतैवानुपूर्वी प्रथममिदमिदमुत्तर तत इति । तथैव प्रतिपत्तॄणामपि बुद्धिषु सदैव नियतक्रमः । ततो बुद्धिक्रममन्तरेण स्फोटप्रतिपत्तौ प्रतिपत्तॄणामशक्तया न तस्य शब्दात्मनोरशब्दतयाऽपि बुद्धिवस्तुनः क्रमिणा भाव्यमित्येवमपराधदण्डव्यवस्था युक्तेति । तदाह— " **यथानुपूर्वीनियमो विकारे क्षीरबीजयोः । तथैव प्रतिपत्तॄणां नियतो बुद्धिषु क्रमः ॥ १ ॥** " इति नित्यश्चासावभ्युपगन्तव्यः । अनित्यत्वे हि सङ्केतकालानुभूतस्य तदैव ध्वस्तत्वात्कालान्तरे देशान्तरे वा गोशब्दस्य श्रवणात्ककुदादिमदर्थप्रतीतिर्न

---

१ वा. प कां. १ श्लो. ९२ ।

स्यात् । असङ्केतितत्वात् । असङ्केतिताच्च शब्दादर्थप्रतीतौ सर्वस्य सकलशब्दार्थज्ञताप्रसक्तिः । सङ्केतकरणानर्थक्यं च भवेत् । ननु नियमस्तावदभिव्यञ्जकानामभिव्यङ्ग्येषु न दृश्यते । घटादयो हि सर्वैरेवाभिव्यक्तिहेतुभिः प्रकाशमात्रस्वभावैर्मणिप्रदीपौषध्यादिभिर्व्यज्यन्ते । अयं तु स्फोटात्मा नियमादभिव्यङ्ग्यः । न हि गोशब्दस्य योऽभिव्यञ्जकः स एवाश्वशब्दस्यापि ध्वनिरिष्यते । किं तर्ह्यत्यन्तविलक्षणो गोशब्दाभिव्यक्तिसामर्थ्येनासाधारणः । तस्मादत एव नियमाद्यवाङ्कुरादिवदस्य कार्यत्वमेव युक्तम् । तस्मिंश्च सत्यनित्यत्वमेव सङ्गच्छत इति मैवं बोधः । यथा हि चक्षुरिन्द्रियमेव विषयरूपस्याभिव्यक्तौ निमित्तं नेन्द्रियान्तरमिति व्यञ्जकनियमेऽपि विषयरूपस्य न कार्यत्वं तथा स्फोटस्यापीति । तदुक्तम्—"**ग्रहणग्राह्ययोः सिद्धा नियता योग्यता यथा ॥ व्यङ्ग्यव्यञ्जकभावोऽपि तथैव स्फोटनादयोः ॥ १ ॥**" अथैवमुच्यते विषयरूपेन्द्रिययोस्तावन्नास्ति नियमः । रूपमात्रस्यानेकजातिगुणभेदभिन्नस्य चक्षुषाऽभिव्यक्तेः । न तु स्फोटमात्रस्याभिव्यक्तिरेकेन नादेनेति । अत्रापि प्रतिविधीयते । तुल्येन्द्रियग्राह्येष्वपि विषयेष्वेष नियमो दृश्यते । यथा गन्धयुक्त्यादिषु । गन्धशैलेयादिद्रव्यं किञ्चिदेव कस्यचिदेव द्रव्यगन्धादेरभिव्यक्तिनिमित्त भवति न द्रव्यमात्रमेवमिहापि ।नियत एव नादः कस्यचिदेव स्फोटस्याभिव्यक्तिहेतुरिति न दोषः । तदाह सदृशग्रहणानां प्रकाशकं निमित्तं नियतं लोके प्रतिद्रव्यमवस्थितमिति । स्यादेतन्न गन्धादयोऽभिव्यज्यन्तेऽपि तु विशिष्टद्रव्यसंयोगाज्जायन्त इति । विषयमपि रूपं तर्हीन्द्रियालोकाभ्यां क्रियत इति नष्टो व्यक्तिवादः । न हि नीलादिरूपे प्रमाणमपरमस्ति येन ज्ञायेत प्रागेतत्स्थितमिति । स्पर्शेन तस्य ग्रहीतुमशक्यत्वात् । विचित्रास्तु भावशक्तय इति किञ्चिच्च नियतव्यञ्जकव्यङ्ग्यं किञ्चिच्चानियतव्यञ्जकव्यङ्ग्यमिति को दोषः प्रतिनियतव्यञ्जकव्यङ्ग्यत्व

---

१ वा प. का. १ श्लो. ९८ ।

इति । अथैतत्स्यात् । अभिव्यञ्जकधर्मानुविधानमभिव्यङ्ग्यानां न दृष्टम् । न ह्यल्पे प्रदीपे घटादेरल्पत्वं महति महत्त्वमनेकस्मिन्वाऽनेकत्वमवलोक्यते । स्फोटस्य पुनरल्पनादेऽल्पत्वं महति महत्त्वमनेकस्मिंश्चानेकत्वमतोऽयं कार्य एव न व्यङ्ग्य इति चेत् । नैवम् । यतोऽभिव्यङ्ग्यानामप्यभिव्यञ्जकधर्मानुविधानं केषाञ्चिदुपलभ्यते । खड्गे हि मुखं प्रतिविम्बितं दीर्घमुपलभ्यते ह्रस्वमक्षितारकादौ । संख्याभेदोऽप्यादर्शभेदे जलतरङ्गानेकत्वे च तथा तथानुवर्त्तमान उपलभ्यत एवेत्ययमपि न दोषः । अथ मुखादिभ्यो भावान्तरमादर्शादिषु सन्निवेशमुपलभ्यते न तु त एव मुखादयस्तत्र विम्बिता उपलभ्यन्त इति चेत् । अचतुरस्रमेतत् । अत्यल्पप्रमाणेषु हि मण्यादिषु स्वच्छद्रव्यादिषु तदाधाररूपतयाऽवस्थितेषु महाप्रमाणानामप्यद्रिवरतुल्यरूपाणां तदन्तः सन्निवेशित्वेन भावानामुत्पत्तिः । तथाऽभ्युपगमे हि प्रतिविम्बनिमित्तद्रव्यापनयनेऽपि प्रतिविम्बरूपस्य भावान्तरस्य तत्रोत्पन्नस्यादर्शादौ तत्रोपलब्धिः स्यात् । शस्त्राद्यभिघातजनितकलङ्कवत् । अथ तावत्कालिक एवाऽसौ भावस्तत्रोत्पन्नो यावदवस्थानं प्रतिविम्बनिमित्तस्य द्रव्यस्य तावदुपलभ्यते नोत्तरत्र । सुवर्णादिद्रवभाव इवाग्निसंयोगादिति मतिः । विषमोऽयमुपन्यासः । सुवर्णादिद्रव्यभावो हि वह्निसंयोगविश्लेषानन्तरं स्तोककालमुपलभ्यते प्रतिविम्बं पुनस्तन्निमित्तद्रव्यापनयनानन्तरं मुहूर्तमपि तदाधारेषु नोपलभ्यते । किञ्च, आदर्शादिमण्डलं प्रतिविम्बोदयकाले नष्टप्रतिविम्बमेव तत्रोत्पन्नं, प्रतिविम्बरूपेण वा तदेव परिणतं, पुनश्च तस्मिन्नेव क्षणे प्रतिविम्बनिमित्तद्रव्यापनयने प्रतिविम्बभावान्तरमपि सन्नष्टमादर्शमण्डलं च पूर्वरूपसदृशमुत्पन्नं, प्रतिविम्बमेव वा पुनरादर्शमण्डलरूपेण परिणतमित्येवमुपगमे प्रतिपक्षं वस्तुविनाशप्रसङ्गः । स च हेतुतोऽभावविनाशवादिनामनभिमतः । तस्मात्स्थितमेतन्न पर्वतादिसरूपा भावास्तत्रोत्पन्नाः किं तर्हि तदेव रूपमभिव्यञ्जकबलात्तथा प्रतीयत इति । यदाह—"[1]विरुद्धपरिणामेषु वज्रादर्शतलादिषु ॥ पर्वतादिसरूपाणां

१ वा. प. का १ श्लो. १०१ ।

भावानां नास्ति सम्भवः ॥ १ ॥ " इति । एवं च स्थितमेतत्, अभिव्यञ्जकधर्मानुविधायी शब्द इति । यतश्च शब्दात्मनः स्वतो न भेदोऽपि त्वभिव्यञ्जकवशात्तस्मादभिन्नकालेऽपि कालभेदादेव वर्णपदवाक्याख्यास्त्रयोऽपि स्फोटा नित्यत्वादत्यन्ताविद्यमानकालभेदाः । यस्त्वेषां ह्रस्वदीर्घप्लुतव्यपदेशयोग्यो मात्रिकादिस्वकालावगमो यश्च द्रुतादिवृत्तित्रये त्रिभागाधिकत्वेन भेदः स सर्वो नादानामभिव्यञ्जकानां तथा तथा भेदात् । यदाह—" तस्मादभिन्नकालेषु वर्णवाक्यपदादिषु ॥ वृत्तिकालः स्वकालश्च नादभेदाद्विभज्यते ॥ १ ॥ " इति । तथाकृता हि ध्वनयः शब्देऽभ्यस्यमानाः शब्दात्मना स्वकालताव्यवहारहेतवो भवन्ति । द्विधा हि ध्वनयः प्राकृता वैकृताश्च । तत्र प्राकृता नाम ते यैर्विना सामान्यविशेषरूपेण स्फोटात्मा प्रतीतिविषयं न याति । प्रतीतस्तूत्तरकालं यैः स एवायमित्युल्लेखेन चिरकालमुपलभ्यते ते वैकृता इत्युच्यन्ते । यदाह सङ्ग्रहकारः—" शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ॥ स्थितिभेदे निमित्तं चेद्वैकृतः प्रतिपद्यते ॥ १ ॥ " इति । यः प्रथमं जातो ध्वनिस्तस्य मात्राकालत्वात्तदुपचारेण तदभिव्यक्तः स्वतो निरवयवत्वादत्यन्तं पूर्वापरभागरहितः स्फोटात्मापि मात्राकाल इति व्यपदिश्यते । तन्निमित्ता च ह्रस्वसंज्ञा शास्त्रे व्यवहाराय क्रियते । तदाह—"एकमात्रो भवेत् ह्रस्वः" इति । यः प्रथमं जातो ध्वनिर्यश्च तज्जस्ताभ्यामभिव्यक्तः स्फोटोऽपि तयोर्द्विमात्राकालत्वादुपचारेण मात्राद्वयकाल इत्यपदिश्यते । तन्निमित्ता च दीर्घसंज्ञा क्रियते । यदाह—" द्विमात्रो दीर्घ उच्यते " इति । प्रथमध्वनिजातध्वनेर्जातो यस्तृतीयो ध्वनिस्तेन पूर्वाभ्यां चाभिव्यक्तस्तेषां त्रिमात्राकालप्रमाणत्वादत्यन्ताप्रमाणोऽपि शब्दस्त्रिमात्र इत्युच्यते । तन्निमित्ता च प्लुतसञ्ज्ञा लभते । तदुक्तम्—" त्रिमात्रस्तु प्लुतो ज्ञेयः " इति । ततस्तु प्रभृति ये जायन्ते ध्वनयस्ते वैकृतास्तत्कालः

---

१ वा. प. का. १ श्लो. १०२. २ वा. प. का. १ श्लो. ७७ ।

स्फोटात्मनि नाध्यस्यते ध्वनिकाल एवासौ गण्यते । न शब्दकालः । ध्वनयो हि विशिष्टाभिघातादुपजायमानाः केचिदनारब्धकार्या विलीयन्ते । कतिचिदेकं ध्वनिं जनयित्वा नश्यन्ति । केचिद्द्वौ, केचिद्बहून् । ततोऽन्यः शब्दकालोऽन्यश्च ध्वनिकाल उच्यते । द्रुतायां वृत्तौ ये वर्णास्ते त्रिभागाधिका मध्यमाया ये च मध्यमाया ते त्रिभागाधिका विलम्बितायामिति यो भेदः स ध्वनिभेद एवाभ्युपगम्यते । न शब्दभेदः । शब्दे तस्यानध्यासात् । तदुक्तम्—"[1]सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनात् वृत्तयो विशेष्यन्ते" इति । तेनातोऽभिशब्दे सेत्यादौ "[2]तपरस्तत्कालस्य" इति वचनात्तपरेण निर्देशेन मात्राकाले प्रत्याय्यमाने परमार्थतः खट्वादिभिरित्यत्राप्येककालत्वाद्यककारवर्णस्फोटस्य यद्ग्रहणं प्राप्तं तन्न भवति । प्राकृतध्वनिकालेन तत्रोपचरितेन भेदात् । द्रुतादिवृत्तिकालस्य तु स्फोटकालत्वेनाऽनाश्रितत्वात् । यस्यां कस्याञ्चिद्वृत्तावकारादेस्तपरत्वेऽभ्युपगते सर्ववृत्तिषु ग्रहणं सिद्धं भवति । तदाह—"[3]स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ॥ प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ॥ १ ॥ शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदं तु वैकृताः ॥ ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥ २ ॥" वृत्तिभेदमिति कालान्तरावस्थितिभेदं द्रुतादिरूपं शब्दस्य । समुपोहन्ते घटयन्ति । तैरिति विकृतैरिति । ध्वनिग्रहणे च त्रयो वादाः केचिच्छब्दरूपादविभक्तग्रहणं रूपादिवालोकं ध्वनिं मन्यन्ते । इन्द्रियवदसंवेद्यमन्ये । स्वतन्त्रमपि कतिपये । तथा हि—ताल्वादिकरणसन्निपातजनितध्वन्याभिव्यङ्ग्यस्फोटरूपादविभागेन ध्वनिरूपप्रतीतिरिरिति न ध्वनिर्नापि स्फोटः परस्परतो भेदेन ग्रहीतुं शक्यते । यथा प्रभाकरादिकारणजनितालोकाभिव्यङ्ग्यस्तम्भाम्भोरुहादिरूपादविभागेनालोकप्रतिपत्तिरिरिति नालोको नापि विषयरूपं परस्परतो विभागेन ग्रहीतुं पार्यते । यथा च प्रभाकरादिकारणजन्योऽयमालोक-

१ पा. भा. वार्तिके । २ पा. सू. १।१।७०. ३ वा. प. का. श्लो. ७६।७८ ।

काष्ठादिकारणजन्यस्तु स्तम्भादिरित्यनयोर्भेदो व्यवस्थाप्यते तथेहापि ताल्वादिकारणजन्योऽयं ध्वनिर्नित्यत्वादकार्यश्च स्फोट इत्यनयोर्भेदोऽवस्थाप्यते न तु भेदेन ग्रहणम् । केवलमिदमेव सम्भवति, आलोकपरिकल्पिता विषयप्रतिपत्तिर्ध्वनिविनिर्मिता तु स्फोटप्रतिपत्तिरित्येके । यथेन्द्रियं विषयप्रतीत्यन्यथानुपपत्त्याऽनुमेयं किमप्यस्तीति कार्यदर्शनादवस्थाप्यते तथा स्फोटोपलब्ध्यन्यथानुपपत्त्या ध्वनिः कश्चिदत्यन्तपरोक्षोऽस्ति करणव्यापारज इत्यनुमीयते । स्फोटस्तु शुद्ध उपलभ्यते इतीतरे । अन्ये पुनः, यदा नाकारादिविशेषावगमः केवलरुणरुणायितादिकरणे तदा स्वतन्त्रो ध्वनिः प्रतीयते । अकारादिव्यक्तवर्णप्रतीते तु स्फोटरूपेण संसृष्टः प्रतीयत इत्याहुः । यदुक्तम्—

**स्फोटरूपाविभागेन ध्वनेर्ग्रहणमिष्यते ॥ कैश्चित् ध्वनिरसंवेद्यः स्वतन्त्रोऽन्यैः प्रकल्पितः ॥ १ ॥"** इति । स्फोटस्याभिव्यक्तौ त्रयो दर्शनभेदाः केचिदाहुः—'स्फोटस्यैव संस्कारो ध्वनिभिर्विधीयते ततोऽसौ प्रतीतिविषयो भवति । यथा तैलादेर्गन्ध आतपेन पृथिव्याश्चातपशुष्काया उदकेन संस्कृतो ग्रहणयोग्यो भवति घ्राणस्य । तत्र संस्कारोपगमे संस्कृतविषये तुल्यं ग्रहणं भवेन्न च भवति तस्माद्विषयस्यैव तत्र संस्कारः क्रियते ' इति । अन्ये पुनरिन्द्रियस्यैव संस्कार इति प्रतिपन्नाः । यथाञ्जनद्रव्यं चक्षुरेकं संस्करोति न विषयं बाह्यमतिप्रसङ्गादतिप्रसिद्धमेतत् । इन्द्रियस्य स्फोटस्य च संस्कार इत्यपरे उररीकृतवन्तः । यथा वैशेषिकस्य प्राप्यकारिणि चक्षुषि तुल्यजातीयेन तेजसा प्रकाशापरपर्यायेण नयनरश्म्यनुग्रहः क्रियते विषयस्य च योग्यतेति । तदाह—" इन्द्रियस्यैव संस्कारो विषयस्योऽभयस्य वा । क्रियते ध्वनिभिर्वादास्त्रयोऽभिव्यक्तिवादिनाम् ॥ १ ॥ " इति ॥

एवं च—

---

१ वा प. का. १ श्लो. ८०. २ वा प. का. १ श्लो. ७९ ।

अर्थावबोधप्रवणस्वभावं बिभर्त्ति भागोज्झित एव शब्दः ॥
स्फोटाभिधानोऽभिहितस्वरूपः प्रमाणवीथीभ्रमणैकपान्थः ॥५४७॥

ततः पौद्गलिको वर्णस्तत्सङ्घातः पदं तथा ॥
तत्संहतिः पुनर्वाक्यं कथं सङ्गतिमङ्गति ॥ ५४८ ॥

तावद्दर्पं कलयति करी शब्दकुट्टाकनामा
गर्जन्गाढस्वरमिह लसत्तर्कशुण्डाप्रचण्डः ॥
यावन्नार्थं जिनपतिमतस्फारलाङ्गूलधारी
न्यायोत्फालं वितरति हुताद्विषणो जैनसिंहः ॥ ५४९ ॥

तथा हि—यत्तावदवादि यः खल्वयं पूर्वापरेत्यादिकं निर्बाधमध्यवसीयते स्फोटा इति पर्यवसानम् । तदनुपपद्यमानम् । यथोपवर्णितस्वरूपस्य वर्णादिस्फोटत्रयस्य स्वप्नदशायामप्यननुभवात् । स्वकीयपूर्वापरावयववता वर्णपदवाक्यानामेव सर्वैरबाधितबोधेन प्रतीयमानत्वात् । अवयवाश्चैषा वास्तवा एवेति स्वीकर्त्तव्यम् । अविद्योपकल्पितत्वाङ्गीकारे हि तेषां परमब्रह्माद्वैतमताश्रयणप्रसङ्गेन लाभमिच्छतो मूलोच्छेद एव भवतः प्रसज्यते । यथैव हि वर्ण एक एव तद्भागानामवास्तवत्वात्पदमेकमेव तद्वर्णानामतात्विकत्वाद्वाक्यं चैकमेव तत्पदानां सावृत्तत्वात् । तथैवातशः परमब्रह्मैवैक सकलवाक्यतदर्थं तस्य प्रमाणप्रमेयप्रपञ्चस्य च प्रतिभासमात्रान्तःप्रविष्टस्याविद्योदयविजृम्भितत्वादिति । तदनिच्छता तात्त्विकानेकभागसङ्गतं वर्णादिवादमादरणीयमायुष्मतेति । ननु वर्णादिकं स्वावयवेभ्योऽर्थान्तरमनर्थान्तरं वा भवेत् । अनर्थान्तरत्वे त्वनेकत्वमेव स्यात् । प्रतिभागं समस्तार्थप्रतीतिप्रसङ्गश्च । अर्थान्तरत्वे सम्बन्धासिद्धिः । अनुपकारात् । उपकारकल्पनाया वर्णादेरवयवकार्यत्वप्रसङ्गः । तैरुपकार्यत्वात् । अवयवाना वा वर्णादिकार्यतापत्तिः । तेनोपक्रियमाणत्वादुपकारस्य ततोऽनर्थान्तरत्वात् । अर्थान्तरत्वे सम्बन्धासिद्धिरनुपकारात् । तदुपकारान्तरकल्पनायामनवस्थाप्रसङ्ग इति चेत् । सोऽयं वर्णादितदवयवभेदाभेदैकान्तवादिनामुपालम्भो

न स्याद्वादिनाम् । तैर्यथाप्रतीति कथञ्चित्तद्भेदोपगमात् । एकानेकाकारप्रतीतेरेकानेकाकारस्य जात्यन्तरस्य व्यवस्थितेः । न हि वर्णाद्याकर्णनसमनन्तरमेकानेकाकारप्रतीतिरनालम्बना युक्ता । सर्वत्र सर्वदा सद्भावप्रसङ्गात् । नाप्यवयवमात्रहेतुका । एकत्वांशविरोधापत्तेः । ततो वर्णाद्याकारपरिणतद्रव्यशब्दहेतुकेयं प्रतीतिस्तत्त्वं तथा परिणतशब्दवाच्यं तात्त्विकानेकप्रतीकाकलिकालवरम् । अत एवैकानेकाकारं सिद्धम् । बाधकाभावात् । यच्च पूर्वादिभागवर्णपदरूपावयवावसायः पुनरभिव्यञ्जकानां ध्वनीनां धर्मानुविधानादित्याद्युक्तम् । तदप्ययुक्तम् । ध्वनीनां भट्टाभिमतवर्णनित्यत्वैकान्तविकुट्टनावसरे सविस्तरमपाकरिष्यमाणत्वात् । यदपि वर्णाद्यवयवावभासासत्यत्वप्रदर्शनार्थं मुखमिव मणिकृपाणेत्यादिनिदर्शनमदर्शि तदपि दार्ष्टान्तिकेन सह वैषम्यात्स्वसिद्धान्तश्रद्धान्तःकरणस्य भणनमात्रम् । वस्त्वन्तरमेव हि प्रतिबिम्बाख्यं तात्त्विकानेकतथाविधधर्मोपेतं प्रतिबिम्बकारणबिम्बाख्यमुखविलक्षणं मणिकृपाणदर्पणादिषूत्पद्यते । न तु तदेव मुखं खड्गतैलोदकदर्पणादयस्तथा तथा प्रथयन्ति । प्रतिबिम्बस्य च तात्त्विकत्वमुपरिष्टान्निर्णेष्यामः । यदपि चात्मनः प्रौढिप्रदर्शनार्थमुदाहरणान्तरं यथा च दूरदेशे समन्धकारे वेत्यादिना प्रकीर्त्तितम् । तदप्यकीर्त्तिकरम् । दूरदेशावस्थितस्य हि विरलपदार्थस्य घनरूपताप्रतीतिरुत्तरकालभाविबलिष्ठविरलरूपताप्रत्ययेन बाध्यत इति तत्र घनत्वप्रतीतिवशाद्व्यवस्थाप्यमानं घनत्वमस्त्ववास्तवं कः किमाह । वर्णाद्यवयवाद्यभासस्य तु नोत्तरकालिकं बाधकं किञ्चिच्चेतयामः । तत्कथमिव तद्दृष्टात्सिद्धपद्धतिमनुधावन्तो वर्णाद्यवयवाः । न हि निरवयवं स्फोटं नाम किञ्चित्क्वचन कदाचनापि प्रतीमो येन तद्बलेन वर्णाद्यवयवान्प्रत्याचक्ष्महे । अथार्थप्रतीत्यन्यथानुपपत्त्या स्फोटः प्रतीयत एवेति चेत् । एतदपि दुरुत्तरेतरेतराश्रयप्रसङ्गपराहतम् । न खलु सत्तामात्रेण शब्दोऽभिधेयधियमाधातमर्हति

अतिप्रसङ्गात् । अतो ज्ञातस्तद्धेतुरेषितव्यः । ज्ञान चास्यार्थप्रत्ययलक्षणलिङ्गप्रभवमिति यावन्नार्थप्रत्ययस्तावन्न स्फोटज्ञानं यावच्च नेद न तावदर्थप्रत्यय इति । अर्थप्रतीत्यन्यथानुपपत्त्या वा स्फोटस्य कल्पने शब्दत्व तत्र दुरुपपादम् । शब्दशब्दप्रयोगाभावप्रसङ्गात् श्रोत्रग्राह्ये ह्यर्थे लोके शब्द. प्रयुज्यते । अर्थप्रत्यायकत्वमात्रेण च स्फोटस्य शब्दत्वोपगमे धूमध्वजप्रभृतिक प्रत्याययतो धूमादेरपि शब्दत्वं भवेत् । अगृहीतगोशब्दसङ्केतस्य च नालिकेरद्वीपनिवासिनो गौरिति शब्दश्रवणसमनन्तरं यावन्न कश्चनार्थविशेषः समुन्मिषति तावदश्रुतपूर्वोऽयं गोशब्दो न जाने कीदृगस्यार्थ इति वक्तुमपि न पारयेदसाविति हता बत लोकयात्रा । यदप्यथ यथेत्याद्याशङ्क्य यतो वर्णपूर्वाद्यवयवेत्यादिना समाहितम् । तदपि नावदातम् । यथा खल्ववयवग्रहमपहाय नेह निरवयवः स्फोट प्रत्येतु पार्यत इत्यसन्तोऽपि तद्ग्रहणोपायभूतास्तस्यावयवाः परिकल्प्यन्ते । तथा क्वचित्कदाचित्कैश्चित्परोक्षोऽर्थो न शब्दप्रतिपत्तिमन्तरेणावसातुं शक्यत इति शब्दोऽप्यसन्नेवार्थग्रहणहेतुत्वात्परिकल्प्यत इत्यपि प्रसज्यते देवानांप्रियस्य । यदपि न च भागावसायिन्य इत्याद्याशङ्क्याराद्वनस्पतावित्यादिना समाहितं तदपि न चारु । न खलु दूरात्तरौ करिप्रत्ययपरम्परायाः सत्यतरुप्रतीतौ हेतुत्वम् । तथाविधसन्निधानादिसव्यपेक्षक्षयोपशमविशिष्टस्यात्मद्रव्यस्यैव तद्धेतुत्वोपपत्तेः । अपि च, वर्णस्फोटं पदस्फोटं च यथाक्रमं पदवाक्यस्फोटाभ्यां पृथग्भूतम्, अत एव शुद्धपदव्यपदेश्यं वस्तुसन्त क्वचित्प्रतिपद्य पदवाक्यस्फोटयो. काल्पनिकं तमुररीकरोमीति वदन्तं त्वां न कश्चित्प्रतिरुणद्धि न रुणद्धि वा । वर्णस्फोटावयवानामवास्तवत्वमुपदिशन्तं पुन. पर्यनुयुज्महे महोपाध्यायम् । यथा किल पदस्फोटात्पृथगेव वर्णस्फोटः पारमार्थिकोऽभ्युपगम्यते तथा कथं वर्णस्फोटाद्विभिन्नोऽवयवस्फोटोऽपि नोपेयत इति । तदुपगमे पूर्वोपपूर्वपरोपपराद्यवयवस्फोटपरम्पराऽनुभवभुवमनवतीर्णा परिकल्पिता

स्यात्, स्वमतावमानना च । अथ वर्णस्फोटाद्विभिद्यमानमूर्तीस्तदवयवान्न क्वापि प्रतीमस्तत्कथमिव तत्स्फोटॉस्तात्त्विकानुररीकुर्म्महे इति चेत् । तत्किमिदानीं प्रतीतिमपि प्रमाणतया प्रतिजानीषे । ओमिति चेत् । हन्त तर्हि पदादौ वर्णादिप्रतीतिरस्तीति किमिति न तत्र वर्णादिर्वास्तवः स्वीक्रियते । अथोक्तमशक्तास्तादृशं पदादिस्फोटं प्रत्येतुं प्रतिपत्तारो वर्णादिप्रतीतिमन्तरेणेति तत्प्रतीत्युपायोऽसावसन्नेव तत्र वर्णादिर्गृह्यतेऽतोऽसत्य एवायमुररीक्रियत इति चेत् । नन्वेवमपि वक्तुं शक्यते । वर्णावसायमन्तरेणावयवानवसातुमशक्ताः प्रमातार इति वाक्यस्फोटे पदवदुपायभूत एव तत्रासन्नपि वर्णो गृह्यत इत्यसत्य एवायमवयवास्तु सत्या इति । यदपि "विचारालरूढा हि भवन्ति निश्चलाः" इत्यमुं न्यायं निधाय चेतोधाम्नि, अथ भवत्वयं निरवयव इत्यादि प्रश्नं तदपि न तर्ककर्कशेत्यादिसमाधानं च भवानभ्यधात् । तदपि न सुधियामवधानार्हम् । यतः कः खलु विचारमार्गासञ्चरिष्णुध्वनिमनभिगम्यमानो मनस्वी स्वप्नेऽपीदृशमाशङ्कते, उत्तरं वा स्वीकुरुते। किंच, निरवयवस्य वर्णादेर्दृश्यमानस्य न कश्चिद्भागोऽदृश्यमानोऽस्ति यदपेक्षयाऽस्फुटं दर्शनमस्योपपद्यते । यथोभयसम्प्रतिपन्नस्थाण्वादेः । अपि चावृतस्य सतोऽभिव्यक्तिः सम्भवति । नित्यनिरंशस्य चावरणं मीमांसकाभिमतवर्णनित्यत्वपराकरणप्रकरणे पराकरिष्यते । यच्च यथा ह्यनुवाकः श्लोको वेत्यादि निदर्शनमुक्तम् । तदप्ययुक्तम् । यतोऽनुवाकश्लोकौ सावयवौ वा स्यातां निरवयवौ वा ! प्रथमपक्षे वैषम्यम् । अनुवाकादौ हि सावयवत्वात्स्फुटोऽस्फुटश्चावभासो युज्यते । स्फोटे तु निरवयवत्वान्न तौ सम्भवत इति । अपसिद्धान्तप्रसङ्गश्चास्मिन्पक्षे वैषम्यम् । श्लोकानुवाकयोरपि स्फोटरूपत्वेनाभ्युपगतयोर्भवच्छास्त्रे निरवयवत्वेनाभ्युपगतत्वात् । द्वितीयविकल्पे तु देवदत्त गामभ्याजेति वाक्यस्फोटवदेतावपि पूर्वपूर्वध्वनिजनिताभिव्यक्तिकृतसंस्कारविशेषाव-

1 स्थूणानिखननन्यायसमानार्थकोऽयं न्यायः ।

न्त्यध्वनिवृद्धौ प्रथमावृत्तावपि स्फुटतरं प्रतिभासेयाताम् । अथाशक्ताः प्रतिपत्तारः पुनः पुनरेव तादृशैर्ध्वनिभिर्व्यक्तौ सन्तावेतौ प्रत्येतुं पारयन्तीति चेत् । अनुचितमिदम् । यतो यः खलु, इद दीपशतेनैकेनाभिव्यक्तमालोकितुमशक्तो नासौ तादृशेनापरेणानेकेनापि दीपशतेनाभिव्यक्त तदवलोकितुं क्षम. । अन्धाभावप्रसक्तेः । निरस्तश्चेदानीमेव निरवयवस्य स्फुटोऽस्फुटश्चावभास. । यश्च यथा ज्ञानस्येत्यादिदृष्टान्तः सोऽपि न पेशलः । सावयवादात्मन. कथंचिदभिन्नत्वेन ज्ञानस्यापि सावयवत्वात् । यदपि नियताश्च पदार्थानामित्याद्यकथि , तदपि न तथ्यम् । इत्थ हि महीरुहादावपि मूलस्कन्धशाखादिक्रमो माऽभ्युपेयताम् । तत्रापि बुद्धिक्रममन्तरेण महीरुहादिप्रतिपत्तौ प्रतिपत्तॄणामशक्त्या क्रमव्यवस्थायाः कर्तुमशक्यत्वात् । यच्चावाचि नित्यश्चासावभ्युपगन्तव्य इत्यादि तदप्याकाशकुसुमदामोत्तंसाशंसनमिव । नित्यैकान्तस्यानेकान्तसिद्धौ प्रतिक्षेप्स्यमाणत्वात् । यच्चोक्तं खड्गे हि मुखं प्रतिबिम्बितमित्यादि तदपि मृगतृष्णापयःपानपाणिपल्लवप्रसारणमिव। खड्गमुखप्रतिबिम्बयोः कार्यकारणरूपत्वेनाभिव्यङ्ग्याभिव्यञ्जकभावस्यैवासम्भवात्तत्राभिव्यङ्ग्याभिव्यञ्जकाभिधानानुपपत्ते' । यदप्यथ मुखादिभ्य इत्याद्याशंक्यात्यल्पप्रमाणेत्यादिना निराकृतम् । तदपि न कृतधियामवधेयम् । अनभ्युपगमात् । मण्यादिषु हि न महाप्रमाणाः पर्वतादयोऽभ्युपगम्यन्ते किन्त्वल्पप्रमाणा एवेति । यच्चावाचि तथाभ्युपगमे हीत्यादि तदपि न चेतस्विचेतोहरम् । एव ह्यस्तङ्गते गभस्तिमालिनि क्षणमप्यनुपलभ्यमान. प्रतापोऽपि न तस्य कार्यं स्यात्, किन्त्वभिव्यङ्ग्य एवेति । एव च प्रतिबिम्बस्य न तावत्कालिकोत्पादे प्रताप एव निदर्शनम् । ततश्चाथ तावत्कालिक इत्याद्याशंक्य सुवर्णादिद्रव्यभावा हीत्यादिना यत्समाहित तत्सर्वमनभ्युपगतोपालम्भमात्रमित्यवसेयम् । यत्पुनरादर्शादिमण्डल प्रतिबिम्बोदयकाले नष्टं प्रतिबिम्बमेव तत्रोत्पन्नमित्याद्युक्तम् । तदपि नावदातम् । प्रतिबिम्बोत्पत्तेर्निरवद्यतया

समर्थयिष्यमाणत्वात् । यच्चाभाणि यतश्च शब्दात्मनः स्वतो न भेदोऽपि त्वभिव्यञ्जकवशादित्यारभ्य स्फोटात्मा नैव भिद्यत इत्यवसानं, नैषाऽपि भर्तृहरिग्रथितग्रन्थकन्थाश्रद्धारुद्धान्तःकरणानां वैयाकरणानां भणितिः प्रामाणिकपरिषदं प्रमोदयति । अभिव्यञ्जकनादापनोदस्योपरिष्टाद्विधास्यमानत्वात् । एतेन ध्वनिग्रहणे च त्रयो वादा इत्यादि स्फोटस्याभिव्यक्तौ त्रयो दर्शनभेदा इत्यादि च स्वदर्शनाभिनिवेशमदिरोन्मादपराधीनस्य परस्याभिव्यञ्जकधार्यम् । अपि च साऽभिव्यक्तिः स्फोटादव्यतिरिक्ता व्यतिरिक्ता वा ध्वनिभिः क्रियेत । अव्यतिरेके तत्करणे स्फोट एव कृतो भवेत् । तथा चाऽस्यानित्यत्वानुषङ्गादभ्युपगमक्षतिः । व्यतिरेके सम्बन्धानुपपत्तिः । अनुपकारकत्वात्तस्याः । तदुपकारकत्वे वा तदुपकारकस्यापि ततो व्यतिरिक्ताव्यतिरिक्तविकल्पप्रसङ्गेनानवस्था प्रसज्यते । न च व्यतिरिक्तधर्म्मसद्भावेऽपि स्फोटस्यानभिव्यक्तस्वरूपापरित्यागे पूर्ववदर्थेऽप्रतिपत्तिहेतुत्वं घटते । अतिप्रसङ्गात् । तत्त्यागे चानित्यत्वप्रसक्तिरिति ।

ततः पौद्गलिको वर्णस्तत्सङ्घातः पदं तथा ॥
तत्संहतिः पुनर्वाक्यमिति सङ्गतिमङ्गति ॥ ५५० ॥
स्फोटस्यात्र प्रकटनविधौ दोहदं मुञ्च साधो
तस्माद्वैयाकरणसदृशं व्योमपुष्पाभिसन्धिः ॥
सिद्धं न्यायादवयवचितं शब्दमेतं श्रयस्व
स्पृष्टा सा चेत्कचन परिषन्न्यायमुद्रास्थितानाम् ॥ ५५१ ॥

ननु भवन्तु वर्णपदवाक्यानि यथाभिहितानि, एतत्तु निपुणधिषणैर्निरूपणीयं कीदृशोऽयं वाक्यार्थः किं चैनं प्रत्याययितुमीष्ट इति । तत्र पदार्थानेव प्रधानगुणतया प्राप्तपरस्परव्यतिषङ्गान्वाक्यार्थं प्रतिपादयन्ति प्राभाकराः । तदुक्तं शालिकेन—" प्रधानगुणभावेन

अन्विताभिधानवादिप्रभाकरमतस्योपपाद्य खण्डनम् ।

१ प्र. पं. वाक्यार्थमातृकावृत्तिः पृ. २ प. ७ ।

**लब्धान्योन्यसमन्वयान् ॥ पदार्थानेव वाक्यार्थं सङ्गिरन्ते विपश्चितः ॥ १ ॥”** तं च पदान्येवाकांक्षासन्निधियोग्यतारूपोपधानलब्धसुकरव्युत्पत्तीनि प्रत्याययितुमीशते । तथा हि—आकांक्षा प्रतिपत्तुर्जिज्ञासा । सा च प्रकृत्यर्थानतिरिक्तप्रत्ययार्थे पदेऽभिधातृव्यापारापर्यवसायाद्भवति । यथा दारा इति । न ह्यत्र प्रकृत्यर्थातिरिक्ते प्रत्ययार्थे प्रतीतिर्येनान्वितः प्रकृत्या स्वार्थोऽभिधीयते । प्रातिपदिकार्थमात्रे प्रत्ययोत्पत्तेः । अन्वितार्थाभिधायिता वृद्धव्यवहारव्युत्पत्तिवशेन पदा[1]नामवधारितेत्यान्विताभिधानपर्यवसानाय प्रतिपत्तारः पदार्थान्तरं प्रगल्भन्त इत्यादिकं च स्मारितदाररूपार्थान्वययोग्यं जिज्ञासते । प्रकृत्यर्थातिरिक्तप्रत्ययार्थे तु पदेऽभिहितार्थपर्यवसानाद्भवत्याकांक्षा यथा गामिति गच्छतीति च । अत्र हि प्रकृत्यर्थातिरिक्तेऽर्थे कर्मशक्तौ वर्त्तमाने काले च प्रत्यययोर्विधानापर्यवसितमान्विताभिधानं न पर्यवस्यति त्वभिहितार्थक्रियामानयेत्यादिका कर्त्तारं च देवदत्त इत्यादिकमन्तरेणेत्यत्राप्यभिहितार्थपर्यवसानायास्ति तदन्वययोग्यार्थान्तरजिज्ञासा । तथा चोक्तम्— ‘**अन्वितस्याभिधानार्थमुक्तार्थघटनाय च ॥ प्रतियोगिनि जिज्ञासा या साकांक्षेति गीयते ॥ १ ॥”** सा चेयमाकांक्षा प्रतियोगिनि भवन्तीत्युत्पत्तौ निमित्तमाश्रीयते । किमिति पुनः सन्निधियोग्यते एव नाश्रीयते । निराकांक्षाणामन्विताभिधानादर्शनात् । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामिति हि पुत्रसम्बन्धेन निराकांक्षो राजा न पुरुषेणान्वीयते । कस्मात्पुनरनयोः पुत्रपुरुषयोः सन्निधियोग्यत्वाविशेषेऽपि पुत्रेणैव राज्ञः सम्बन्धो न पुरुषेणेति । उच्यते। न्यायसापेक्षत्वाद्वाक्यार्थप्रतीतेर्नित्यसापेक्षेण पुत्रेणैव राजा सम्बन्ध्यते । तत्सम्बन्धनिराकांक्षश्च न पुरुषसम्बन्धमनुभवति । आकांक्षाऽपि व्युत्पत्तावुपलक्षणमाश्रीयते । तथा चोक्तम्—“**परिपूर्णेन योग्यस्य**

---

१ इत्यतः ‘अन्विताभिधानदर्शनात्’( पृ ६६४ प १३ ) इत्यन्त किञ्चित्पाठभेदेन प्र. पं. वाक्यार्थमातृकावृत्तौ ( पृ. ७ प. १५ ) समुपलभ्यते ।

समीपस्याप्यनन्वयः । व्युत्पत्तौ तेन शब्दानामाकांक्षाऽप्युपलक्षणम्" ॥ १ ॥ परिपूर्णेनेति पुत्रसम्बन्धान्निराकाङ्क्षेण राज्ञा । योग्यस्य समीपस्थेति पुरुषस्य । सा चेयमाकांक्षा प्रतियोगिषु सर्वेषु न सहसैव जायते किन्तु कारणोपनिपातक्रमेण । तथा हि, क्रियायाः कर्त्तारमन्तरेणासम्भवात्तदवगतौ कर्त्तारं प्रथममपेक्षते । स च निष्फलो व्यापारेण वर्त्तत इति फलापेक्षा । व्यापारश्च करणमन्तरेणाशक्यः साधयितुमिति करणापेक्षा । तदुक्तम्—" प्रतियोगिषु सर्वेषु नाकांक्षोदेति तत्क्षणात् ॥ कारणोपनिपातानुपूर्व्येण तु यथातथम् ॥ १ ॥ " तत्क्रमेण चान्विताभिधानमपि क्रमेणैव । तदाह—" जिज्ञासा जायते बोद्धुं सम्बन्धिषु यथा यथा ॥ तथा तथैव शब्दानामन्वितार्थाभिधायिता ॥ १ ॥ " । कः पुनः सन्निधिः, आकांक्षानन्तरं बुद्धौ विपरिवृत्ति । स च न शब्दनिवर्तन एवान्विताभिधानव्युत्पत्तावुपलक्षणम् । द्वारमित्यादावध्याहृतेनाप्युद्घाटनाद्यर्थेन लोकेऽन्विताभिधानदर्शनात् । आकांक्षावच्च सन्निधावपि सन्निधायकक्रमेण क्रमो वेदितव्यः । तदन्विताभिधानमपि तथैवेति । यदाह—" सन्निधिः शब्दजन्मैव व्युत्पत्तौ नोपलक्षणम् ॥ अध्याहृतेनाप्यर्थेन लोके सम्बन्धदर्शनात् ॥ १ ॥ सहसैव स सर्वेषां सन्निधिः प्रतियोगिनाम् ॥ सन्निधापकसामग्रीक्रमेण क्रमवानसौ ॥ २ ॥ यथा यथा सन्निधानं जायते प्रतियोगिनाम् ॥ तथा तथा क्रमेणैव शब्दैरन्वितबोधनम् ॥ ३ ॥ " इति । किं पुनरिदं योग्यत्वं नाम । यत्सम्बन्धार्हत्वम् । मुख्यवृत्तीनां च प्रयोगे योऽर्थो यत्र सम्बन्धित्वेनोपपद्यते स तत्र सम्बन्धार्हो योग्य इत्युच्यत इति वचनात् । सम्बन्धार्हमिदमिदमिति कथमवगम्यते । सम्बन्धित्वेन दृष्टत्वात् । ननु आकांक्षादित्रितयवशात्सामत्र्युत्पत्तानि

१ 'बोद्धुं' [illegible] पुस्तके पाठः । २ '[illegible]कांक्षावच्च' इत्यत 'दर्शनात्' ( पृ [illegible] ) [illegible] प्र. प. [illegible] ( पृ [illegible] ) [illegible]

पदानि स्वार्थमन्वितमभिदधतीति । अथानभिहितेनैवाऽर्थान्तरेणान्वितमर्थमभिदधीत पदमभिहितेन वा । तत्रानभिहितार्थान्तरान्विताभिधाने पदादेकस्मादेवोच्चरिताद्विवक्षितार्थप्रतीतेर्वैयर्थ्यमितरेषाम् । अभिहितार्थान्तरान्विताभिधाने तु परस्पराश्रयम् । तथा हि । तावत्पचेदित्यनेनाभिहितार्थान्तरान्वितः स्वार्थो नाभिधानीयो यावदुखायामित्यनेनाधिकरणमुखा नाभिधीयते । एवमुखायामित्यनेनापि तावत्स्वार्थो नाभिधानीयो यावत्पचेदित्यनेन स्वार्थो नाभिधीयत इति । न च पदानि प्रथमं स्वार्थमात्रमभिदधति तदनु चान्वितं स्वार्थमिति कुतः परस्पराश्रयप्रसङ्ग इति वाच्यम् । कल्पनागौरवात् । नापि लौकिकाः परीक्षका वा पदेभ्यः पदार्थमात्रं प्रतीत्य पश्चादन्वितमर्थं तेभ्य एवावबुध्यन्त इति । द्विरभिधानमननुभूयमानं कथं कल्प्यतामिति चेत् । तदखिलमफल्गुमवाचि । परसिद्धान्तानवबोधात् । यथा पूगीफलादिकमवलोकितं साहचर्यात्पत्रादीन्स्मारयति तथा पदजातमपि श्रुतं सद्यथास्वं स्वाभिधेयान्यभिदधानमेव साहचर्यादर्थरूपाणि स्मारयत्यनन्तरं तु तान्यन्वितान्यभिधत्त इत्येष एव हि नः सिद्धान्तः । तत्र चोक्तदोषानवकाश एव । तदुक्तम्—" **पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ॥ न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥१॥** " न्यायसम्पादितव्यक्तीति लोकव्यवहारानुवर्तिभिः प्रकरणादिन्यायैर्यावदिदं विधीयमानमिदमनुवाद्यमिदं गुणभूतमिदं विवक्षितमिदमविवक्षितमित्यादिका व्यक्तिर्नावधार्यते तावन्न कश्चिद्वेदवाक्यार्थमवबुध्यत इति वृद्धव्यवहारनियन्त्रितायां शब्दार्थावगतौ ये न्याया वृद्धव्यवहारे वाक्यार्थावगतिहेतुतया विदितास्तानपरित्यजता वाक्यार्थो बोद्धव्य इति । तदुक्तं वार्तिककारैः—" **तावदेव हि सन्देहो वेदवाक्ये श्रुते भवेत् ॥ यावन्न वचनव्यक्तिस्तस्य स्पष्टाऽवधार्यते ॥ १ ॥ ज्ञाता च वचन-**

१ प्र. प. वा. मा. वृ. पृ. १५ प १२ । २ ' तावदेव ' इत्यतः ' अपेक्षते ' ( पृ. ६६६ पं. ६ ) इत्यन्तः पाठः प्र प वा. मा. वृ. ( पृ ७ प ६. ) किञ्चित्पाठभेदेन समुपलभ्यते ।

व्यक्तिर्मीमांसा न्यायकारिता ॥ प्रलीयन्ते समस्ताश्च वेदवाक्यार्थसंशयाः ॥ २ ॥ " इति । अत एव च मीमांसाया वेदवाक्यार्थप्रतिपत्ताविति कर्तव्यतात्वम् । तदुक्त तैरेव—" धर्म्मे प्रमीयमाणे हि भेदेन करणात्मना ॥ इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति " ॥ १ ॥ इति । धर्म इति वेदार्थे । ननु लोके द्रागेव वाक्यार्थनिश्चयो नेयतीं सामग्रीमपेक्षते । उच्यते । अत्यन्ताभ्यस्ते वाक्यार्थे स्यादेतदेवमदृष्टपूर्वेषु तु स्मृत्यादिवाक्यार्थेषु लोकेऽपि नानाविधविवादोत्थानात्कुतो द्रागेव निश्चयः । अपि च प्रयोजनाभावेनापि लोकस्याऽयं विवेको नास्ति । वाक्यज्ञास्तु विविंचते । तदुक्तम्—" बहुजातिगुणद्रव्यकर्मभेदावलम्बिनः ॥ प्रत्ययात्सहसा जाताच्छ्रौताल्लाक्षणिकात्मकात् ॥ १ ॥ न लोकः कारणाभावान्निर्धारयितुमिच्छति ॥ बलाबलादिसिद्ध्यर्थं वाक्यज्ञास्तु विविञ्चते ॥ २ ॥ " अथैवं सिद्धान्ते स्मृतेः पूर्वानुभवानुसारितयाऽर्थगोचरप्राप्तावपेक्षानपेक्षणंलक्षणदूषणावतारः । तथा हि. न पदं पदार्थमात्रे कचिद्दृष्टचरप्रयोगो येन तत्साहचर्येण तन्मात्रं स्मारयेत् । तन्मात्रेण व्यवहारायोगाद्व्यवहारोपयुक्तत्वाच्च पदोच्चारणस्य । किं त्वन्विते स्वार्थे । तथा च गामानयेत्यत्रानयनान्वितस्वार्थो गोशब्दस्तेन सहचरितो दृष्टो गां पश्येत्यत्रापि तदन्वितमेव गा स्मारयेन्न तन्मात्रम् । एवं च स्मर्यमाणेनानयनेन दर्शननिरपेक्षीकृतो गोर्न पश्येत्यनेनान्वियान् । एवं प्रासादं पश्येत्यत्र प्रासादान्वितस्वार्थे पश्यपदं तेन सहचरितं दृष्टं गा पश्येत्यत्रापि प्रासादान्वितमेव दर्शनं स्मारयेन्न दर्शनमात्रम् । तथा च स्मर्यमाणेन प्रासादेन गोनिराकांक्षीकृत पश्यपदं न गवा सम्बध्येतेति सर्वत्र वाक्यार्थप्रत्यये दत्ता जलाञ्जलिः प्रसज्यते । अथ गोशब्दो गोलक्षणमर्थं न व्यभिचरत्यानयनादिकं तु व्यभिचरतीत्यव्यभिचाराद्गामितिपदं स्वार्थमेव स्मारयति न तु पदार्थान्तरं व्यभिचारादिति चेत् । तदसाम्प्रतम् । पदवत्या

---

१ मी. श्लो. सू ५ नं. आ. श्लो. २५, २६, २७.

सहिता हि भावना प्रबोधवती स्मृतिहेतुरङ्गीक्रियते । तस्याश्च प्रबोधो नाव्यभिचारनिबन्धन एव । साहचर्यमात्रस्यापि तन्निबन्धस्य पूगीफलादौ दर्शनात् । तच्च स्वार्थस्येव पदार्थान्तरस्याऽप्यस्तीति पदार्थान्तरसहितमेव स्वार्थमनाशङ्क सहसैव स्मारयेदित्यपेक्षानपेक्षणदूषणप्रसक्तेर्न पदेभ्यः पदार्थमात्रस्मरणमुपपद्य इति । अत्रोच्यते । अस्ति तावत्पदार्थधीः । सा चेन्न स्मृतिस्तर्हि कतमोऽयमस्तु । न तावत्प्रमाणम् । अनधिगतार्थबोधनं हि तदुपेयते । यदाहुः—" **सर्व[1]स्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा** " इति । न च पदार्थधीरनधिगतार्थगोचरा । न खलु सम्बन्धसमये समधिगतोऽर्थः पदैरभिधीयमानो देशकालावस्थानुरूपेणाप्यतिरिच्यते । अनतिरिच्यमानश्च न स्वरूपविज्ञान प्रमाणयति । अत एवाहुः—" **परोक्ष[2]श्चानुभूतश्च यस्तत्र स्मृतिरिष्यते ॥ प्रमिते तु प्रसक्तत्वात्स्मृतेर्नास्ति प्रमाणता ॥ १ ॥** इति, **पदमस्याधिकाभावात्स्मारकान्न विशिष्यते** " इति च । यच्चास्याः पूर्वानुभवानुसारिण्याऽपेक्षणलक्षणदूषणावतारकारणमान्वितार्थगोचरत्वं प्रसज्यते तन्न समीचीनम् । यतोऽभ्यासातिशयः संस्कारातिशयमाधत्ते । अभ्यासवती च पदस्य स्वार्थेन साहचर्यानुभूतिर्यथा न तथाऽर्थान्तरेणेति । पदश्रवणात्स्वार्थविषय एव संस्कारः प्रबुध्यत इति स्मरणमपि तद्विषयमेव भवितुमर्हति नार्थान्तरविषयमिति । पदानि प्रथमं यथास्व साहचर्यस्वरूपाणि स्मारयन्ति । तथा च स्मृतिसन्निहिताः स्वरूपमात्रेणार्था अर्थान्तराकाक्षापदैरन्विता अभिधीयन्त इति न परस्पराश्रयम् । तदुक्तम्—" **स्मृतिसान्निहितैरेवमर्थैरन्वितमात्मनः ॥ अर्थमाह पदं सर्वमिति नान्योन्यसंश्रयम् ॥१॥** " स्वार्थरूपस्मरणे हि न पदं पदान्तरमपेक्षते । स्मृतिसन्निहितमपि भवत्येव सन्निहितमिति नास्तीतरेतराश्रयम् । यच्चेदं सर्वपदानामन्विता-

---

१ मी. श्लो. सू. ५ औ. सूत्रे श्लो. १५. । २ मी. श्लो. सू. ५ शब्दप श्लो. १०३, १०४, १०७. ।

मिधायित्वमुच्यते तत्सर्वेषु श्रौतार्थेषु पदेष्ववसेयम् । गङ्गायां घोषो गौर्वाहीक इत्यादौ तु लाक्षणिकगौणार्थपदप्रयोगे यदेव श्रौतार्थं पदं तदेवाऽन्विताभिधायकम् । इतरत्तु गङ्गादिकं प्रतियोगिनस्तटादेर्बुद्धावुपस्थापकमेव । तत्र तस्य वाचकत्वानवधारणात् । स्वार्थस्यापि तदानीमवाचकमन्वयायोग्यत्वात् । किं तु तदर्थेन यत्स्वसम्बन्धि स्वसदृशं वा योग्यं च तटादिकं बुद्धावुपस्थाप्यते तेनान्वितं श्रौतार्थमेव पदं स्वार्थमभिवक्त इति दर्शनरहस्यमिति ।

अपि निरुपमपक्षपातपात्राण्यन्वितवस्त्वभिधास्वतिप्रगल्भाः ॥
कथमन्वयशून्यमेवमेते प्रलपन्ति प्रसभं विमुक्तशङ्काः ॥ ५५२ ॥

तथा हि, यत्तावत्पदार्थानेव प्रधानगुणतयेत्यादिकमवादि । तत्र पदार्थाना प्रकरणादिवशात्प्रधानगुणतया व्याप्तसमन्वयावस्थानां को नाम वाक्यार्थत्वं प्रतिपद्यते । यथैव हि परस्परसापेक्षाणां पदानामन्यनिरपेक्षा संहतिर्वाक्यं तथा विशेषणविशेष्यतया परस्परसापेक्षाणां पदार्थानामप्यन्यनिरपेक्षा संहतिर्वाक्यार्थ इत्युच्यते । यत्तूक्तं तं च पदान्येवाकांक्षासन्निधियोग्यतारूपोपधानलब्धसुकरव्युत्पत्तीनि प्रत्याययितुमीशत इति । तत्रापि किं पदानि पृथक्पृथक्तं प्रतिपादयेयुः संहतानि वा । न तावत्पृथक्पृथक् । पादप इत्यादिपदमात्रोच्चारणे पदार्थमात्रप्रतीतेरेवानुभूयमानत्वात् । तदर्थाच्च प्रतिपन्नतिष्ठत्यादिपदवाच्यस्य स्थानाद्यर्थस्य सामर्थ्यतः प्रतीतेः । तत्र पदस्य साक्षाद्व्यापाराभावात्तदर्थस्यैव तद्गमकत्वात् । परम्परया तस्य तत्र व्यापारे लिङ्गवचनस्य लिङ्गिप्रतिपत्तौ व्यापारोऽस्तु । तथा सति शाब्दमेवानुमानज्ञानं भवेत् । लिङ्गवाचकवच्छब्दाल्लिङ्गस्य प्रतीतेः सैव शाब्दी । न पुनस्तत्प्रतिपन्नाल्लिङ्गादनुमेयप्रतिपत्तिः । अतिप्रसङ्गादिति चेत् । तत एव पादपपदात्स्थानाद्यर्थप्रतिपत्तिर्भवन्ती शाब्दी माभूत् । तस्य स्वार्थप्रतिपत्तावेव पर्यवसितत्वाल्लिङ्गशब्दवत् । किञ्च, पदानां पृथक्पृथग्वाक्यार्थाभिधाने देवदत्तो गामभ्याज शुक्लां दण्डेनेत्युक्तेऽनेकवाक्यार्थप्रत्ययप्रसङ्गः । संह-

स्याऽर्थमभिदधति पदानि वाक्यमिति स्वसिद्धान्तविरोधश्च । संहतानि पदानि वाक्यार्थं प्रतिपादयन्तीति द्वितीयपक्षे त्वस्मन्मतप्रवेशः । संहतिरूपं परिणाममापन्नाना तेषा वाक्यत्वेनास्माकं सम्मतत्वात् । तस्यैव च वाक्यार्थप्रतिपादकत्वात् । यच्चाकांक्षाया अभिधानापर्यवसाननिबन्धनत्व चाभ्यधायि तदसम्बद्धम् । अभिधाया अन्वितार्थविषयत्वस्य पराकरिष्यमाणत्वात् । अथ यद्येवं कारणद्वयमप्याकाक्षायाः पराक्रियते तर्हि किंनिबन्धनाऽसौ भवतु । भवद्भिरपि तावदेषाऽभ्युपगन्तव्यैव । परप्रतिपत्तये हि वचनमुच्चार्यते । परश्च गामित्युक्तेऽवश्यमाकाङ्क्षत्यर्थान्तरं यत्र च न तदाकाङ्क्षा तत्र तदुच्चारयन्तो लौकिकाः परीक्षका वा उन्मत्तवदुपेक्ष्यन्त इति । उच्यते । अभिधेयापर्यवसाननिबन्धनैवेयमाकाङ्क्षा । गामित्युक्ते हि गोशब्दाभिहितोऽर्थो न क्रियां कर्तारं चान्तरेण पर्यवस्यतीति प्रतिपत्ता तौ जिज्ञासते । इयॉस्तु त्वन्मताद्विशेषः । त्वन्मते हि प्रत्ययार्थान्वितः प्रकृत्या स्वार्थोऽभिधीयते । अस्मन्मते त्वनन्वित एव । यत्पुनरूचे, सा चेयमाकाङ्क्षा प्रतियोगिनीत्यादि । तदस्माकमपि सम्मतमेव । यदप्युक्तम् । द्वारमित्यादावध्याहृतेनाप्युद्घाटनार्थेन लोकेऽन्विताभिधानदर्शनादिति । तदपि त्वन्मतेनैव निराकृतम् । अर्थापत्तिप्रमाणतो ह्यर्थान्तराध्याहारस्त्वन्मते । सा च प्रमाणपरिदृष्टार्थान्यथानुपपत्तिनिबन्धना । द्वारमित्यादौ च द्वारलक्षणस्यार्थमात्रस्य स्मरणगोचरत्वेन न प्रमाणपरिदृष्टत्वम् । ततः कथं तस्यार्थान्तरपरिकल्पनानिमित्तत्वम् । तन्निमित्तत्वे वा स्मरणस्यापि प्रामाण्याङ्गीकरणप्रसङ्गः । न च श्रावणप्रत्यक्षगोचरस्य द्वारशब्दस्यान्यथानुपपद्यमानत्वम् । यतस्तस्यार्थापत्त्युत्थापकत्वं स्यात् । द्वारशब्दस्य स्वार्थविरह एवान्यथानुपपद्यमानत्वात् । यच्चोक्तमाकांक्षावच्च सन्निधावपीत्यादि । तदपि सकलमनुकूलमेवास्माकम् । यच्च पूगीफलादिकमवलोकितमित्यादि दर्शनरहस्यमिति पर्यन्तं प्रत्यपादि । तदप्यसुन्दरम् । यतो येयमन्विताभिधानवादिभिरन्वितस्वार्थगोचरा शक्तिरूप्यते पदाना साऽ-

न्वयमात्रविषयाऽन्वितविशेषविषया वा । न तावदन्वयमात्रविषया । तन्मात्रविषयत्वे तस्य सर्वत्राविशेषात्सर्वेषां शब्दानां पर्यायत्वापत्तेः । अथान्वितविशेषविषयाऽन्वितविशेषाणां च स्वरूपतो भेदान्न पर्यायत्वापत्तिरिति चेत् । नैवम् । अन्वितविशेषविषयत्वे ह्यन्वयमात्रमप्यभिधानीयं शब्देन । अन्यथा तदसिद्धेः । तदभिधाने चैकान्विते विशेषेऽपरान्वयमात्रे पदानां शक्तिः प्रसज्यते विकल्पनागौरवं स्यात् । न चेद् वाच्यं व्यतिषिक्ताभिधाय्येव पदं न व्यतिषङ्गस्य वाचकम् । व्यतिषिक्ततोऽवगतेर्व्यतिषङ्गस्य । यदाह—" व्यतिषिक्ताभिधानेन व्यतिषङ्गमतिर्यतः ॥ तेनैकवित्तिवेद्येऽस्मिन्न निमित्तान्तरादरः ॥१॥" इति । यतो व्यतिषिक्तेति रूपमात्रमुच्यते पदैरुपलक्ष्यते व्यतिषङ्ग इत्यर्थो विवक्षितो, यद्वा व्यतिषङ्गादेव तैस्तदुच्यत इति । तत्र रूपमात्राभिधानजन्मा ख्यातिर्न व्यतिषङ्गमपि गोचरयितुमर्हति । न हि यथा दण्डमन्तरेण दुरवगमं दण्डिस्वरूपं तथेदमपि व्यतिषङ्गमन्तरेण दुरवगमं येन स्वगोचरशब्दसामर्थ्यजन्मनि ज्ञाने स्वान्वयमपि समर्पयेत् । तद्रूपस्यान्वयव्यतिरेकेणापि शक्यनिरूपणत्वात् । नान्वयं विना तद्रूपं क्वचिदपीति चेत्, लिङ्गमपि लिङ्गिनं विना न क्वचिदपीति तदपि तन्निरूपणाधीननिरूपणमस्तु । अस्त्वेवमिति चेत् । तर्हि कथं लिङ्गिनो लिङ्गित्वम् । लिङ्गात्पूर्वमेव तस्य निर्णीतत्वादिति कीर्तिशेषमनुमानमासज्येत ।

एवं च —

सूक्ष्मामपि न परीक्षां परीक्ष्यमाणं परीक्षकैः क्षमते ॥
इदमन्विताभिधानं प्राभाकर वर्जनीयं तत् ॥ ५५३ ॥

भट्टाः पुनरेवं सङ्गिरन्ते । पदानि पदार्थानेवाभिदधति । तेऽभिहिता सन्तो वाक्यार्थमवबोधयन्ति । तदुक्तम्— "पदानि हि स्वं स्वमभिधायाऽर्थं निवृत्तव्यापाराण्यथेदानीमर्थाऽवगतोऽर्थान्तरमवगमयतीति"।

अभिहितान्वयवादिभट्टमतस्योपन्यासः खण्डनञ्च ।

१ मी. श्लो. वा. पृ. ३५५ प. ८ ।

अन्वयव्यतिरेकाभ्यां खल्वेवमवगम्यते यत्पदार्थपूर्वको वाक्यार्थ इति । यो हि मानसादपचाराच्छ्रुतेष्वपि पदेषु पदार्थान्नावगच्छति नावगच्छत्येवासौ वाक्यार्थम् । यस्त्वश्रुतेष्वपि पदेषु प्रमाणान्तरतः पदार्थाञ्जानीयाज्जानात्येवासौ वाक्यार्थम् । यदाह—" **पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः ॥ खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥ १ ॥ दृष्टा वाक्यविनिर्मुक्ता न पदार्थाद्विना क्वचित् ॥** " इति । आरूपमव्यक्तं रूपम् । तेन गुणिविशेषो न प्रत्यक्षेणावसीयत इत्यर्थः । तदेवं वाक्यार्थबुद्धिः पदार्थप्रतीतिं न व्यभिचरति तु पदप्रतीतिमिति न तत्कार्या भवितुमर्हति । अपि च, अनन्यलभ्यः शब्दार्थः प्रसिद्धः । लभ्यते च समभिव्याहारान्यथानुपपत्त्या पदानामन्विततार्थपराणां स्वाभिधेयार्थरूपसमवेतान्वितावस्थाप्रत्यायनं लक्षणया । न हि पदानि समभिव्याहृतानि स्वाभिधेयप्रत्ययमात्रे पर्यवसातुमीशते । न हि लौकिकाः पदार्थमात्रप्रत्यायनाय प्रवर्त्तन्ते । प्रतिपित्सितं खल्वेते प्रतिपादयिष्यन्तः पदान्युच्चारयन्ति । अबुभुत्सितावबोधने त्वनन्वयविषयवचनतया नामी लौकिकाः परीक्षका इत्युपेक्षेरन् । न च भूयो भूयः समधिगतं परे पदार्थमात्रं बुभुत्सन्ते । तस्मादधिगतमर्थमवगमयितुमनसो न समभिव्याहरन्ति वृद्धाः पदानि। तदयं समभिव्याहारः पदानामनधिगतार्थप्रत्यायनयुक्तस्तमन्तरेणानुपपद्यमानस्स्वाभिधेयसमवेतामनधिगतचरीं समन्वितावस्था लक्षयति । तदुक्तम्—" **विशिष्टार्था प्रयुक्ता हि समभिव्याहृतिर्जने** " इति, **वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति हि स्थितिः** " इति च । अथ पदार्था. प्रत्येक वाक्यार्थमवगमयेयुः समुदिता वा । नाद्यः पक्षः, गौरित्युक्तेऽपि वाक्यार्थप्रतीतिप्रसङ्गात् । यावन्तश्च पदार्थास्तावन्तो वाक्यार्थाः प्रतीयेरन् । अथ प्रत्येकमप्येकमेव वाक्यार्थं बोधयति । तदाऽऽवृत्त्या तत्प्रतीतिप्रसक्तिः । नापि द्वितीय. । समुदितानां तेषाम-

१ मी. श्लो. वा. वा. अ. श्लो. ३५८।३५९ ।

साधारण्येन सत्त्वस्य ग्रहीतुमशक्यत्वात् । देवदत्त गामानयेत्युक्ते हि विवक्षितगोविषयानयनान्वितो नियत एव देवदत्तः प्रतीयते । गौरपि प्रतिनियतो देवदत्तकर्तृकानयनान्वितोऽसाधारण एव वेद्यते । आनयनमपि च नियतगोदेवदत्तान्वितं तथाभूतमेव ज्ञायते, इत्येवं समुदितेषु पदार्थेष्वसाधारण्येन प्रतीयमानेषु न सत्त्वग्रहणसम्भवः । तेषां व्यभिचारादानन्त्याद्वा । तथा हि, न नियतस्य शाबलेयसन्निवेशस्य गोशब्दो वाचकः । तदभावेऽपि बाहुलेये दर्शनात् । न च त्रैलोक्यान्तर्गतसकलगोपिण्डगतसन्निवेशवाचकत्वमवगन्तुं शक्यम् । आनन्त्यादिति । तदयुक्तम् । आद्यपक्षकक्षीकारात् । द्वितीयपक्षे त्वसाधारण्यं भवदपि न नः क्षतिकरम् । न ह्येते लिङ्गवत्सम्बन्धग्रहणमपेक्षमाणा अवबोधकाः । येनाऽसाधारण्यात्तेषु सम्बन्धग्रहणं नावकल्पत इत्युच्यमानं शोभेत । किं त्वगृहीतसम्बन्धा अप्याकाङ्क्षासन्निधियोग्यत्वपर्यालोचनया परस्परं संसृज्यन्ते । स एव च वाक्यार्थो यः संसृष्टः पदार्थसमुदायः । इतरपदार्थविशिष्टो वेतरपदार्थ इति । नाप्यशाब्दत्वनिमित्तत्वं वाक्यार्थप्रतीतेराशङ्कनीयम् । शब्दावगतिमूलत्वेन तस्याः शाब्दत्वादिति स्थितं पदात्पदार्थप्रतीतिस्ततो वाक्यार्थावगतिरिति ।

निरटङ्कि भट्टचट्टैः स्पष्टमसावभिहितान्वयो ध्वनिषु ॥
अविरोध्य युक्तिभिरिव दोषज्ञास्तं परीक्षन्ते ॥ ५२४ ॥

तथा हि, यत्तावदवादि पदानि पदार्थानेवाभिदधतीत्यादि । तत्र संहतान्यसंहतानि वा पदानि पदार्थानपि संसृष्टानसंसृष्टान्वा प्रतिपादयेयुः । तत्र संहतानि पदानि संसृष्टान्पदार्थानभिदधति, ते च वाक्यार्थमवगमयन्तीत्युच्यते । तदनेनेदमुक्तं भवति, वाक्यं वाक्यार्थं प्रतिपादयति स च पुनरपि वाक्यार्थमवगमयतीति । संहतानां पदानामेव वाक्यत्वात्, संसृष्टानां च पदार्थानां वाक्यार्थत्वात् । तथा च द्विरवगमो वाक्यार्थस्याप्रमाणको निष्प्रयोगश्च प्रसज्येत । अथ संहतानि तान्य-

संसृष्टान्पदार्थान्ब्रुवत इत्यभिधीयते । तदप्यनुभवबाधितम् । तेभ्यस्तथाविधेभ्यः संसृष्टानामेव तेषां प्रतीयमानत्वात् । असंहतानि संसृष्टानवगमयन्तीत्येतदपि तथाविधमेव । केवलेभ्यः पदार्थमात्रस्यैव प्रतीतेः । असंहतान्यहतसंसृष्टानवगमयन्तीति पक्षे तु कक्षीकार एव । यदपि गदितं यो हि मानसादपचारादित्यादि । तदत्यल्पमुच्यते । न खलु प्रणिहितेऽपि मनसि श्रुतेष्वपि पदेषु सर्वः सर्वत्र वाक्यार्थं प्रत्येति । अथैवं सुतसमस्मन्मतासिद्धिरिति चेत् । स्यादेवम् । यदि विदितेभ्यः पदार्थेभ्यो वाक्यार्थप्रतीतिरवश्यमुत्पद्येत । विदितेष्वपि तेषु क्लिष्टकाव्यादौ वाक्यार्थप्रत्ययादर्शनात् । अत एव तत्र तत्र पदार्थमात्रं व्याख्याय व्याख्यातारो व्याहरन्त्ययमत्र वाक्यार्थ इति । अन्यथा निरूपितेषु पदार्थेष्ववश्य वाक्यार्थावगमे व्यर्थं तदभिधानं भवेत् । अथ न पदार्थेभ्यो वाक्यार्थप्रतीतिरुत्पद्यत एवेत्यभिदध्महेऽपि तु तेभ्य एवेति । किमुच्यते मानसादपचरादिति । अथ किमत्र कारणं विदितेभ्योऽपि पदेभ्यः कदाचिद्वाक्यार्थोऽवसीयते कदाचिन्नेति । क्षयोपशमभावाभावादिति ब्रूमः । यदप्युदितं यस्त्वश्रुतेष्वपि पदेषु इत्यादि । तदपि नावदातम् । श्वेतोऽश्वो धावतीत्यादिप्रतीतेरानुमानिकत्वेनास्माभिः स्वीकारात् । त्वयाऽपि चेयमनुमानरूपाऽर्थापत्तिरूपा वाऽभ्युपेया । किं च किं येन रूपेण पुरुषेण श्वैत्यसमानाश्रयौ हेषाध्वनिपदनिक्षेपशब्दावगतौ तस्यैवेयं श्वेतोऽश्वो धावतीति धीः । उत यस्याश्रयानध्यवसायस्तस्यापीति । तत्र यदि तावदप्रत्याकलितहेषाध्वनिपदविहारनिर्घोषाश्रयस्येत्युच्यते । तदा श्वेतोऽश्वो धावतीति प्रतीतिरसम्भवः । स ह्येवं प्रतिपद्यते भवितव्यमत्र प्रदेशे ननमश्वेन धावता च माव्यं केनाचिदिति । अथाऽश्वसम्बन्धिनमेव खरखुटपुटटङ्कारमभ्यासपाटवात्प्रतिपत्तावबुद्ध्यते । तदाऽप्यश्ववर्तिनीमेव वेगवतीं गतिमनुमिनोति न तु केवलामेव तामवगम्य तस्या अश्वान्वय पदार्थसामर्थ्यमात्रेण प्रतिपद्यते । योऽपि तस्मिन्देशे नास्त्यन्योऽश्वादिति निश्चित्य पारिशेष्यादाश्रयान-

ध्यवसायेऽपि हेषाध्वनेः श्वैत्यसमानाधिकरणौ हेषाध्वनिखुरपुटटङ्काररवावध्यवस्यति । तस्याऽश्वत्वे वेगवति गमने च श्वेतद्रव्यवर्त्तिन्येवानुमानं न स्वतन्त्रयोरिति । प्रमाणान्तरेणासम्बद्धावगतानां न क्वचिदन्योन्यसम्बन्धबोधकत्वमनुमानार्थापत्तिव्यतिरेकेण तत्रापि प्रतीतमिति । अपि च मानान्तरेणानुभूतानामर्थरूपाणामन्वयबोधनसामर्थ्यमुपलम्भे वाऽन्वयबोधकान्यसत्त्वमप्रमाणप्रसङ्गः । न चास्य शाब्देऽन्तर्भावः । शब्दाभावात् । पदार्थाभिधानावान्तरव्यापारेण हि शब्दाद्यदन्वयज्ञानं तच्छाब्दमित्येष एव वो राद्धान्त इति नास्य शाब्देऽन्तर्भावः । यदि च तत्त्वं विवेच्यते तदेवमेव प्रत्यक्षादिभिः सह तुल्यकक्षतया शाब्दस्य स्थानेऽभिधानीयम् । ननु शाब्दं तद्भेदस्य । न हि लौकिका ब्राह्मणयुधिष्ठिराविति प्रयुञ्जते । प्रयुञ्जते तु ब्राह्मणराजन्याविति वा वशिष्ठयुधिष्ठिराविति वा । न च भेदान्तरोपन्यासेन भेदान्तमुपन्यस्तं भवति । तदयं समस्तमानलक्षणप्रवृत्तो मानतुरस्यापि परित्यागे तेनैव सह स्वकौशल्यमपि त्यजेदिति । यदप्यनन्यलभ्यः शब्दार्थ इत्यादि सर्वत्रैवेति हि स्थितिरिति चेत्यन्तमवादि तदपि पूर्वानुसन्धानवन्ध्येन व्याहृतम् । पूर्वं हि भवानिदमवादीत्पदैरभिहिता पदार्था वाक्यार्थमवगमयन्तीति । सम्प्रति पुनरिदमुदीरयति पदानि लक्षणया वाक्यार्थमवगमयन्तीति । सोऽयं पूर्वापरविरोधिनापि वाचो निश्चयान्निश्चितं वाचस्पतिः । किं च स्खलद्गतित्वं नाम सामान्यलक्षणं लक्षणायाः । न च समभिव्याहृतपदकदम्बकस्य सर्ववाक्यार्थे स्खलद्गतित्वं प्रतीमः । न खलु यथा कनकलतिकायां कृतास्पदे कमले कुवलययुगलमिदमालोक्यत इति वाक्यं कामिनीतनुव्यवस्थितवदनवर्त्तिनेत्रद्वयलक्षणेऽर्थे प्रतिपाद्ये स्खलद्गति तथा कामिनीकलेवरावारके नेत्रद्वन्द्वं दृश्यत इत्येतदपि वाक्यं स्खलद्गत्यभिधातुं शक्यम् । योऽपि समुदिताः पदार्था वाक्यार्थमवगमयन्तीति पक्षस्य कक्षीकारः सोऽपि न क्षेमकारः । समुदितानां पदार्थानामेव वाक्यार्थत्वादात्मनि च गमकभावायोगात् । यदपि शब्दाव-

गतिमूलत्वेन तस्याः शाब्दत्वादित्युक्तम् । तदप्ययुक्तम् । एवं हि प्रत्यक्षावगतधूमादवगम्यमानस्य कृष्णवर्त्मनोऽपि प्रत्यक्षमूलत्वात्प्रत्यक्षप्रमेयत्वं भवेत् । तस्मादिदमिह रहस्यं पदापेक्षयाऽनन्विताभिधानं वाक्यापेक्षया त्वन्विताभिधानमिति ।

भो भट्टशिष्याः खलु युक्तिमूलान्युन्मूलितान्येवममूनि मूलात् ॥
चिरप्ररूढोऽभिहितान्वयस्तत्पतात्विदानीं विषवृक्ष एषः ॥ ५५५ ॥

सम्प्रतीदं चिन्त्यते किमयं शब्दो नित्यः सन्नर्थमभिदधाति, अनित्यो वा ।

शब्दनित्यत्ववादिनो मीमांसकस्य पूर्वपक्षं विस्तरश उपपाद्य खण्डनम् ।

तत्रैवमुदीरयांबभूवुर्मीमांसाध्ययनैकदुर्विदग्धाः ॥
शब्दस्य सनातनत्व एव प्रमितिः संश्रयतेऽत्र साक्षिमुद्राम् ॥ ५५६ ॥

तथा हि, स एवायं गकार इत्यादिप्रत्यभिज्ञानप्रत्यक्षत एव तावद्वर्णाना नित्यत्वमवसीयते । न चास्याज्ञानत्वलक्षणमप्रामाण्यम् । ज्ञानत्वेन प्रतिप्राणि प्रतीयमानत्वात् । नापि संशयस्वभावम् । एकांशावलम्बित्वात् । नापि मिथ्यात्वरूपम् । बाधाविधुरत्वात् । न च दुष्टकारणोत्पाद्यत्वादस्याप्रामाण्यमिति मन्तव्यम् । तत्कारणाना दुष्टत्वानवधारणात् । नाप्यधिगतार्थाधिगन्तृत्वात् । स्मर्यमाणानुभूयमानविशेषणावच्छिन्नस्य गकारादेः पूर्वसंवेदनाविषयत्वात् । तदुक्तम्—"[1]यः पूर्वावगतोंऽशोऽत्र स नो नाम प्रतीयते ॥ इदानीन्तनमस्तित्वं न हि पूर्वधिया गतम् ॥ १ ॥" इति । प्रत्यक्षत्वं चास्य श्रोत्रेन्द्रियान्वयव्यतिरेकानुविधायित्वात्सुप्रसिद्धम् । न च स्मृतिपूर्वकत्वादस्याप्रत्यक्षत्वं वक्तुं युक्तम् । तत्पूर्वकत्वेऽप्यस्य सत्सम्प्रयोगजत्वेन प्रत्यक्षत्वोपपत्तेः । एवं च प्रत्यभिज्ञानप्रत्यक्षमाहात्म्यतः शब्दस्य नित्यत्वे प्रतिपन्ने इदानीमिवान्यदापि यच्छब्दस्योच्चारणं न तत्तस्य

---

१ मी श्लो. सू. ४ प्र. सू. श्लो. २३३,२३४।

